अपि च ।

लभ्यन्ते श्रुतिपाठशुष्कवदना विप्राः पदे वेधसो
वैकुण्ठे तुलसीवनानि सुलभान्यार्द्राणि शुष्काणि च ।
प्रेता भूतगणाश्च सन्ति शतशः स्थाने भवानीपतेः
रत्नान्यप्सरसः सुधेति तु पदे यस्यैव लब्धुं क्षमम् ॥ १९ ॥

विधातुं कर्माणि व्यवसितवती यत्पदफला-
न्यसूयान्धा मध्ये श्रुतिरपि किमासीद्भगवती ।
अनुष्ठेयं कर्म स्वयमनभिसन्धाय फलमि-
त्ययं वन्ध्यः पन्था यदनुपदमेव प्रकटितः ॥ २० ॥

पाठः । युगपदेकदा । अक्ष्णां सहस्रस्य अभिधानाक्षमतया पुनस्ताभ्यां हस्ताभ्यां ताः स्वमेव स्वीयमेव लोचनयुगं अपिदधते आच्छादयन्ति । स पुरन्दरः अस्तीत्यन्वयः । स कदाचिदित्युत्तरेण वान्वयः । इन्द्रस्य अनेकनवोढानायिकासु समतयावस्थानाद्दक्षिणनायकत्वम् । 'तुल्योऽनेकत्र दक्षिणः' इति लक्षणात् । इन्द्रस्यैव ब्रह्मविष्णुरुद्रेभ्य उत्कृष्टो भोग इति कथयितुं तत्तल्लोकपदार्थेभ्यः श्लाघ्यानि वस्तून्यमरावत्यामेव सन्तीत्याह ॥ **लभ्यन्त इति** ॥ वेधसः ब्रह्मणः पदे स्थाने सत्यलोके । 'पदं व्यवसितत्राणस्थान' इत्याद्यमरः । श्रुतीनां वेदानां पाठेन पूतानि पवित्राणि वदनानि येषां ते तथाभूता विप्रा लभ्यन्ते । वैकुण्ठे विष्णुलोके आर्द्राणि द्रवसहितानि सरसानीति यावत् । शुष्काणि नीरसानि तुलसीवनानि सुलभानि सुप्रापाणि । भवानीपतेः रुद्रस्य स्थाने । शतशः अनेके । बह्वल्पार्थाच्छस्कारकादन्यतरस्यामिति शस्प्रत्ययः । प्रेताः भूतानां प्रमथानां पिशाचानां वा गणाश्च सन्ति । यस्येन्द्रस्य एवकारो भिन्नक्रमः । पद एव रत्नानि चिन्तामण्यादीनि अप्सरसो रम्भादयः सुधेति च वस्तुजालमिति शेषः । लब्धुं प्राप्तुं क्षमम् । स पुरन्दरः अस्तीति योजना । इन्द्रस्यैवेतरेभ्योऽपि श्लाघ्यामूल्यविषयसम्पत्त्या उत्कृष्टो भोग इति भावः । स्वर्गं निरतिशयसुखास्पदं प्रापयितुमेव सकरुणा मातेव या श्रुतिर्हितमुपदिशन्ती सा श्रुतिरपीतरेषां स्वर्गसुखमसहमानेव पूर्वकाण्डे शतशः स्वर्गफलकानि कर्माणि विधायाप्युत्तरकाण्डे बहुधा कर्मफलत्यागमेव प्रकटयाञ्चकारेत्याह ॥ **विधातुमिति** ॥ यस्येन्द्रस्य पदं स्थानं फलं उद्देश्यं येषां तानि तथाभूतानि कर्माणि । विधातुं अनुष्ठापयितुम् । व्यवसितवती निश्चयवती । भगवती श्रुतिरपि वेदोऽपि । मध्ये कानिचित्कर्माणि विधायान्तराळे असूयया अनित्यत्वारोपेणेत्यर्थः । 'असूया तु दोषारोपो गुणेष्वपि' इत्यमरः । अन्धा त्यक्ततत्कर्ममार्गा आसीत्किमित्युत्प्रेक्षा । यद्यस्मात्स्वर्गादिकं फलमनभिसन्धाय अनुद्दिश्य यज्ञादिकर्म अनुष्ठेयं कर्तव्यमित्यनुपदं पुरत एवायं निष्कामो वन्ध्यः अफलः । 'वन्ध्योऽफलोऽवकेशी च'

किं बहुना।

लब्धुं तत्पदमूर्जितं शतमखी तस्यैव नालं भवेत्
द्रष्टुं तद्दयिताजनं दशशती तस्यैव नालं दृशाम्।
वक्तुं तत्पुरभोगभाग्यमखिलं तस्यैव नालं गुरुः
मच्चेतोगतमद्भुतं कथयितुं नालं ममैवोक्तयः॥ २१॥

स कदाचिदस्वप्नोऽप्याचार इति बोधितः प्रातरमरवैतालिकैः, आलोक्य निर्मलं पौलोमीकपोलदर्पणं, अभ्यर्च्य कामधेनुं, आ-

---

इत्यमरः। पन्था मार्गः। स्वयमित्यव्ययम्। स्वयं श्रुत्येत्यर्थः। 'अर्वागामेवं स्वयमात्मना' इत्यमरः। प्रकटितः प्रकटीकृतः स कदाचिदित्युत्तरेणान्वयः। तेन स्वर्गवासिनामानन्दः ब्रह्मानन्दातिशायीति व्यज्यत इति भावः। किं बहुना। ये तु परानग्रहीतुं समर्था इन्द्रगुर्वादयः तेऽपि यत्पदसौभाग्यं सम्पादयितुं द्रष्टुमन्ततः कथयितुं वा न शक्नुवन्ति तदनुग्रहकाङ्क्षिभिरस्माभिस्तत्स्वर्गसौभाग्यवर्णनं कर्तुं कथं शक्यमित्याशयेनाह॥ **लब्धुमिति**॥ तस्येन्द्रस्य। एवकारो भिन्नक्रमः। शतमख्येव शतानां मखानां समाहारश्शतमखी। तद्धितार्थेत्यादिना समासः संख्यापूर्वो द्विगुरिति द्विगुसंज्ञा। अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट इति स्त्रीत्वे द्विगोरिति ङीप्। ऊर्जितमुत्कृष्टं तत्पदमिन्द्रपदं लब्धुं प्राप्तुं नालं न पर्याप्तं भवेदित्यर्थः। शतं मखा अपि तत्पदफलाननुगुणप्रयोजका इति भावः। तद्दयिताजनं इन्द्रदयिताजनं द्रष्टुं तस्य इन्द्रस्य दृशां दृष्टीनां दशशत्येव। पूर्ववत्समासङीपौ दश शतानीत्यर्थः। अलं पर्याप्तम्। 'अलं भूषणपर्याप्ति' इत्यभिधानात्। न भवेत् न स्यात् अखिलं समस्तं तत्पदे इन्द्रपदे भोगाः सुखसाधनाः विषयाः तेषां भाग्यं भोगप्रापकादृष्टम्। शाकपार्थिवादित्वात्समासः। वक्तुं कथयितुं। तस्येन्द्रस्य। गुरुरेव बृहस्पतिरपि। नालं न शक्तः। मम कवेः चेतोगतं मनोगतं अद्भुतमाश्चर्यम्। 'विस्मयोऽद्भुतमाश्चर्यं' इत्यमरः। कथयितुं मम उक्तय एव वचांस्येव। नालं न पर्याप्ता भवेयुरित्यर्थः। अत्र शतमख्या इन्द्रपदप्रयोजकत्वादिसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः। 'योगेऽप्ययोगे सम्बन्धातिशयोक्तिः' इति लक्षणात्। तादृशविषयसमृद्धिसम्पन्नोऽपि देवेन्द्रः शिष्टाचारमवलम्ब्य स्नानेश्वरोपासनादिकं कुर्वन्नास्त इत्याह॥ **स इति**॥ कदाचित् एकदा। अस्वप्नोऽपि स्वापरहितोऽपि। निर्निमेषत्वादिति भावः। स इन्द्रः प्रातः उषःकाले आचार इति राज्ञां प्रातरुत्थाने सम्प्रदाय इत्यमरवैतालिकैरमरमागधैः बोधितः उत्थापितः। स्तुतिभिरिति शेषः। निर्मलं विमलं पौलोम्याः शच्याः कपोल एव दर्पणः मुकुरः तमालोक्य अवलोक्य। 'रोचनं चन्दनं हेम मृदङ्गमणिदर्पणान्। गामग्निं चैव सूर्यं च प्रातः पश्येत्सदा बुधः॥' इति शास्त्रादिति भावः। कामधेनुमभ्यर्च्य पू-

साद्य विविधविद्याधरीविलासपिशुनकुसुमशयनीयलोभनीयलतामन्दिरनिरन्तरोपान्तभुवं अधःपरिवर्तमानविकर्तनबिम्बनिरर्गळनिर्गळदूर्ध्वमुखमयूखसंसर्गादुष्णीकृतामान्तरन्तः उपर्युपरि शीतळां भूतळासंस्पर्शेऽपि पुराणपुरुषचरणारविन्दसम्बन्धादेव भुवनपावनीममरधुनीं, निर्वर्तितनियमाभिषेचनः सिद्धचारणगन्धर्वसेविते सैकते तस्याः दहराकाशपरिपूजितदिव्यलिङ्गाकृति प्रतिष्ठाप्य चिन्तामणिमयं किमपि पारमेश्वरं लिङ्गं, अनुसन्धाय तत्र नखलिखितशरच्चन्द्रचन्द्रिकासारसुन्दरं भगवन्तं मदनान्तकं,

---

जयित्वा। प्रदक्षिणीकृत्येति यावत्। विविधा अनेकविधाश्च ता विद्याधर्यश्च तासां विलासः केळिः तस्य पिशुनं सूचकम्। 'पिशुनौ खलसूचकौ' इत्यमरः। बोधक इति यावत्। यत्कुसुमशयनीयं स्पृहणीयम्। लुभ गार्ध्ये इति धातोस्तव्यत्तव्यानीयर इत्यनीयर्प्रत्ययः। यानि लतामन्दिराणि लतासदनानि तैर्निरन्तरा निरवकाशा 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यमरः। उपान्तभूः समीपभूमिर्यस्यास्ताम्। अधः अधःप्रदेशे। परिवर्तमानं सञ्चरणशीलं यद्विकर्तनबिम्बं सूर्यमण्डलम्। 'विकर्तनार्कमार्ताण्ड' इत्यमरः। तस्मान्निरर्गळं निर्निरोधं यथा तथा। 'अबाधं तु निरर्गलं' इत्यमरः। निर्गलन्तः निर्गच्छन्तः ऊर्ध्वमुखाः ऊर्ध्वप्रसारिणो ये मयूखाः किरणाः। 'किरणोस्रमयूख'इत्यमरः। तेषां संसर्गः संबन्धः तेन कदुष्णीकृतं ईषदुष्णीकृतम्। 'मन्दोष्णं कदुष्णं त्रिषु तद्वति' इत्यमरः। अन्तरमभ्यन्तरं यस्याः सा ताम्। उपर्युपरि ऊर्ध्वमूर्ध्वं शीतळां शीतस्पर्शवती भूतलस्य भूतलेन वा असंस्पर्शे असंबन्धेऽपि भूतलसंबन्धराहित्येऽपीति यावत्। पुराणपुरुषस्य नारायणस्य। चरणारविन्दयोः पादकमलयोः संबन्धादेव सम्पर्कादेव। भुवनस्य लोकस्य। पावनीं शोधिनीं पावयित्रीमित्यर्थः। अमरधुनीं देवगङ्गां आसाद्य प्राप्य। निर्वर्तितः कृतः पञ्चाङ्गानुष्ठानलक्षणनियमपूर्वकः अभिषेकः अवगाहः येन स तथोक्तः। स्नानाङ्गानि धर्मशास्त्रे। 'सङ्कल्पः सूक्तपठनं मार्जनं चाघमर्षणम्। देवादितर्पणं चैव पञ्चाङ्गं स्नानमुच्यते' इति। सिद्धचारणगन्धर्वैः देवयोनिविशेषैः सेविते व्याप्ते परिवृत इति यावत्। तस्या गङ्गायाः। सैकते पुलिने। दहराकाशः हृदयाकाशः। 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाश' इति श्रुतेः। तस्मिन् पूजितं मानसिकैरुपचारैरभ्यर्चितं यद्दिव्यलिङ्गं तस्य आकृतिराकार इव आकारो यस्य तत्तथोक्तम्। किमप्यनिर्वाच्यं। चिन्तामणिमयं चिन्तामणिस्वरूपम्। 'चिन्तामणौ शिवं ध्यात्वा सर्वान् कामानवाप्नुयात्' इति शास्त्रादिति भावः। पारमेश्वरं शैवं लिङ्गं प्रतिष्ठाप्य मन्त्रपूर्वकं स्थापयित्वेत्यर्थः। तत्र लिङ्गे नखैर्लिखितं नखचिह्नं नखरेखेति यावत्। तत्सदृशश्चासौ शरच्चन्द्रश्चेति शाकपा-

अभिषिच्य दिव्यापगासलिलैः, अनुलिप्य रोहिणीरमणहरिणमदपङ्कानुषाङ्गिणा हरिचन्दनेन, समभ्यर्च्य गाङ्गेयविकचगाङ्गेयपङ्कजैः, आराध्य सुरभिघृतधारानुबन्धिना दिव्यधूपेन निसर्गचलितरश्मिमालाकलापेन रत्नदीपेन च, साङ्गाय सायुधाय सावरणाय साभरणाय च निवेद्य सद्यस्समाहृतनिष्पीडितेन्दुमण्डलनिष्यन्दमानापर्युषितान्यमृतानि, प्रदक्षिणीकृत्य प्रणिपत्य प्रसाद्य पञ्चभिः प्रसूनाञ्जलिभिः, स्तुत्वा श्रुतिशिरोभिः, कृत्वा विसर्जनं, अथ स्मृत्वा चिरन्तनमात्मनि, विलासवीथीविहारकौतूहलेन निर्गत्य

---

थिवादित्वात्समासः । अतिकृश इति वा वक्र इति वा चन्द्र इत्यर्थः । तस्य चन्द्रिका ज्योत्स्ना तस्या आसारः प्रसारः प्रसरणमिति यावत् । तेन सुन्दरं दर्शनीयं मदनस्य कामस्य अन्तकं नाशकम् । भगवन्तं षड्गुणैश्वर्यसम्पन्नम् । भगवन्तमुमाकान्तमनुसन्धाय ध्यात्वा । दिव्यापगाया गङ्गायाः सलिलैरुदकैरभिषिच्य अभिषेकं कृत्वा । रोहिणीरमणश्चन्द्रः । तास्मिन् यो हरिणः मृगः तस्य मदपङ्कं मदकर्दमं कस्तूरीति यावत् । यद्वा रोहिणीरमणः कर्पूरम् । 'घनसारश्चन्द्रसंज्ञ' इत्यमरः । तस्य हरिणमदः कस्तूरी च तस्यानुषङ्गिणा सम्बन्धिना हरिचन्दनेन श्रीगन्धेन अनुलिप्य लेपनं कृत्वा गाङ्गेयानि गङ्गोत्पन्नानि विकसितानि गाङ्गेयपङ्कजानि सुवर्णपद्मानि। 'तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरं' इत्यमरः । तैरभ्यर्च्य पूजयित्वा । सुरभेः कामधेनोर्या घृतधारा तदनुबन्धिना तत्सम्बन्धिना दिव्येन श्लाघ्येन धूपेन । निसर्गात् स्वभावात् । चलितः प्रसृतः रश्मीनां किरणानां या माला तस्याः कलापो यस्य स तथाभूतेन । रत्नमेव दीपः तेन च । आराध्य प्रसेव्य । साङ्गाय दुर्गागणपत्याद्यङ्गदेवतासहिताय । यद्वा अङ्गैः पञ्चमुखनीलग्रीवदशभुजादिलक्षणैरवयवैस्सहिताय । सायुधाय आयुधैः त्रिशूलपरशुटङ्कादिभिस्सहिताय । सावरणाय आवरणैर्धर्मज्ञानवैराग्यैश्वर्यादिलक्षणावरणदैवतैः सहिताय । साभरणाय आभरणैश्चन्द्रावतंसशेषकुण्डलवासुकिकङ्कणादिलक्षणैः सहिताय । परमेश्वरायेति शेषः । सद्यः तत्कालं समाहृतमानीतं निष्पीडितं यद्राकेन्दुमण्डलं तस्मान्निष्यन्दमानानि निस्सरन्ति अपर्युषितानि नूतनानि अमृतानि पीयूषाणि निवेद्य निवेदनां कृत्वा । समर्प्येत्यर्थः । प्रदक्षिणीकृत्य प्रदक्षिणं कृत्वा । प्रणिपत्य नमस्कारं कृत्वा । पञ्चभिः प्रसूनाञ्जलिभिः पञ्चसङ्ख्याकैः पुष्पाञ्जलिभिरित्यर्थः । प्रसाद्य क्षमापयित्वेत्यर्थः । 'आवाहनं न जानामि न जानामि विसर्जनम् । पूजाविधिं न जानामि क्षमस्व परमेश्वर' इति रीत्येति भावः । श्रुतिशिरोभिरुपनिषद्भिः स्तुत्वा 'स्तुतिं कृत्वा । विसर्जनमुद्रासनं कृत्वा । अथ विसर्जनानन्तरं आत्मनि स्वस्मिन् चिरन्तनं परमेश्वरं आगत्य स्थितं स्मृत्वा ध्यात्वा । विलासार्थं वीथ्यां विहारः सञ्चारः

**बहिः, इतस्ततो निरन्तराळमिळदाशीर्वचोमुखरगीर्वाणमुनिसङ्घसङ्कुलं, अतिकोमलाङ्गुळिदळाघातशोधितमृदङ्गनादभङ्गिभिरधरनिवेशितापनीतवेणुभिः असकृदास्फालिताकृष्टवीणागुणाभिः आकुञ्चितऋजूकृतभ्रूलतं आविष्कृतलुप्तसिराबन्धकन्धरं अन्तरेव कलमधुरं आरब्धगीतिभिः द्विस्त्रिरास्फालितसव्यचरणमृदुरणितमञ्जीरमञ्जुळाभिरप्सरोभिरारप्स्यमानतौर्यत्रिकं, अत्युद्भटवेत्रिवेत्रलताघातविद्रावितवीथीभवदमरमण्डलं, अभितोऽपि दृष्टिगोचरसन्निधापितकरितुरगपर्यङ्किकादिनानाविधवाहनग्राममालोक्य सेनामुखं, आलोकमात्रविदितेङ्गितैराधोरणे-**

---

भ्रमणमित यावत् । 'विहारो भ्रमणे स्कन्दे लीलायां सुगतालये' इति विश्वः । सोपसर्गस्य हरतेर्नानार्थत्वात् । तत्र कौतूहलेन कुतुकेन । 'कौतूहलं कौतुकं च कुतुकं च कुतूहलं' इत्यमरः । बहिः तीराद्बहिः । निर्गत्य निर्गम्य । इतस्ततः परितः निष्क्रान्तं अन्तराळं अवकाशो यस्मिन्कर्मणि तत्तथा । मिळन्तः सङ्घीभवन्तः आशीर्वचोभिः स्वस्तिवचनैः मुखराः नदन्तः ये गीर्वणमुनयः नारदाद्याः सुरर्षयः तेषां सङ्घेन सङ्कुलम् । अतिकोमलाः अकठिनाः अङ्गुळिदळानां अङ्गुळ्यग्राणम् । 'दळं खण्डे दळं पर्णे' इति नानार्थमाला । तेषामाघातेन ताडनेन शोधितस्य सुष्टु कृतस्य मृदङ्गस्य मर्दळस्य नादभङ्गयः नादपरम्परा यासां ताभिः । अधरे निवेशिताश्च ते अपनीताश्चेति स्नातानुलिप्तवत्पूर्वकालसमासः । अधरान्न्यस्तत्यक्ता वेणवः स्वनद्वंशा यासां ताभिः । आस्फालिता नादिताः आकृष्टवीणागुणाः समीकृतवीणातन्तवो याभिस्ताभिः । 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इत्यमरः । द्विस्त्रिः द्वित्रिवारं आस्फालितः विलिखितः । कर्तरि क्तः । यः सव्यचरणः वामपादः । 'वामं शरीरे सव्यं स्यात्' इत्यमरः । तस्य मृदुरणितं अकठोरध्वनिः तद्विशिष्टो यो मञ्जीरः पादकटकः । 'मञ्जीरो नूपुरोऽस्त्रियां' इत्यमरः । तेन मञ्जुळाभिः रम्याभिः । अप्सरोभिः अप्सरस्स्त्रीभिः । आरप्स्यमानं उपक्रमिष्यमाणं तौर्यत्रिकं नाट्यगीतवाद्यलक्षणाङ्गत्रयोपेतनाट्यं यस्मिन् तत् । 'तौर्यत्रिकं नृत्तगीतवाद्यं नाट्यमिदं त्रयं' इत्यमरः । अत्युद्भटः अतिदुस्सहः यः वेत्रिणां वेत्रसंज्ञिकदण्डहस्तानाम् । वेत्रलतया कशाकल्पया घातस्ताडनं तेन विद्रावितानि निष्कासितानि वीथीभवन्ति पङ्क्तीभवन्ति । 'वीथ्याळिरावळिः पङ्क्तिः' इत्यमरः । अमराणां देवानां मण्डलानि यस्मिन् तत् । 'मण्डलं चक्रवालकं' इत्यमरः । अभितोऽपि सर्वतोऽपि । दृष्टिगोचरः दृष्टिविषयः सन्निधापितः समीपं प्रापितः । करितुरगपर्यङ्किकादीनां गजाश्वचतुरङ्गयानादीनां नानाविधानामनेकेषां वाहनानां ग्रामः स-

रुपस्थापितमर्णवनिमग्नमैनाकपक्षरक्षणाभ्यर्थनायागतं हिमवन्तमिवोन्नतमवदातं च कञ्चिदारुह्य मतङ्गजं, अङ्गजराज्यसौभाग्यदेवतयेव शरीरिण्या ताम्बूलकरण्डधारिण्या मेनकया, मदनमदकदुष्णसौवर्गकामिनीकटाक्षसंसर्गनिवारणायेव मणिचामरोपवीजनकुशलारम्भया रम्भया च सविलासमध्यासितचरमभागः, पुरोभागचलदलघुजङ्घालकरितुरगसङ्घजङ्घाजवद्रवदमरभटकोटिसम्मर्दशिथिलहारमर्दनजनितमुक्तापरागसम्बन्धादिव धवळीकृतेन ससम्भ्रमवलदम्बरचरनितम्बिनीलोकविकीर्यमाणमन्दार-

मूढो यस्मिन्स्तत्तथाभूतं । सेनामुखं नासीरमालोक्य दृष्ट्वा । आलोकमात्रेण दर्शनमात्रेण ।'आलोकौ दर्शनोद्योतौ' इत्यमरः । विदितं ज्ञातं इङ्गितं तात्पर्यं यैस्तैः । आधोरणवृद्धाः वृद्धाधोरणाः तैरित्यर्थः ।'निकारोऽपि प्रकारः स्यादाकारस्त्विङ्ग इङ्गितम् आधोरणा हास्तिकाः' इत्युभयत्रामरः । उपस्थापितं आनीतं समीपं प्रापितमित्यर्थः । अर्णवे निमग्नः निमज्य स्थितः मैनाकः तस्य पक्षयोः गरुतोः रक्षणं पालनं तस्य अभ्यर्थनाय प्रार्थनार्थं आगतं समीपं प्रतीति शेषः । उन्नतं प्रांशु हिमवन्तमिव स्थितं तत्तुल्यमित्यर्थः । अवदातं शुभ्रं 'अवदातस्सितो गौर' इत्यमरः । कञ्चन मतङ्गजं एकं गजमारुह्य । शरीरिण्या शरीरवत्या । अङ्गजस्य मदनस्य । राज्यसौभाग्ये साम्राज्यमाहात्म्ये । तदभिमानिनी या देवता तयेव स्थितया । ताम्बूलकरण्डस्य ताम्बूलपात्रस्य धारिण्या तद्धारयन्त्या मेनकया नामाप्सरसा । मदनमदेन मन्मथकृतमत्ततया कदुष्णाः ईषदुष्णाः । कदश्चोष्ण इति चकारात्कदादेशः । ते च ते सौवर्गीणां स्वर्गे भवानां कामिनीनां कामुकीनां कटाक्षाः तत्संसर्गस्य तत्सम्बन्धस्य वारणायेव निवारणार्थमिव । चामरस्य उपवीजने कुशलः श्रमाप्राप्तिलक्षणः आरम्भ उपक्रमः यस्याः तया रम्भया च । सविलासं सहावम् । अध्यासित आक्रान्तः चरमभागः पृष्ठभागो यस्य सः । पुरोभागे पुरःप्रदेशे चलत् मन्दं गच्छत् अलघु जङ्घालं वेगवत्तरं । प्राणिस्थादातो लजन्यतरस्यामिति लच् प्रत्ययः । करिणश्च तुरगाश्च करितुरगम् । द्वन्द्वश्च प्राणितूर्यसेनाङ्गानामित्याद्येकवद्भावः । तस्य जङ्घाजवेन वेगेन । 'जङ्घालोऽतिजवस्तुल्यौ जङ्घाकरिकजाङ्घिकौ' इत्यमरः । द्रवन्तः धावन्तः ये अमराणां भटाः तेषां कोट्यः शतलक्षाः तासां सम्मर्दः सङ्घर्षः तेन शिथिलाः त्रुटिताः ये हाराः तेषां मर्दनं नाशः तेन जनिता उत्पादिताः ये मुक्तानां परागाः धूलयः तेषां सम्बन्धादिव । धवलीकृतेन शुभ्रीकृतेन । ससम्भ्रमं सत्वरम् । 'सम्भ्रमोऽस्त्यादरे भीतौ वेगे' इति भास्करः । यथा वलन्तः चलन्तः येऽम्बरचरनितम्बिनीलोकाः देवस्त्रीजनाः । 'लोकस्तु भुवने जन' इत्यमरः । तैर्विकीर्यमाणानि यानि मन्दारकुसुमानि तेषां बृन्दं सङ्घः तस्मान्निस्सरन्त्यः

कुसुमवृन्दनिस्सरन्मकरन्दधारानिरासायेव मकुटमुपर्युपरि धार्यमाणेन सर्वतः प्रालम्बमुक्तासरकदम्बशालितया समन्ततो निहितकुपितविधुन्तुदविकटदन्तक्षतविवरक्षरदमृतधारासहस्रमण्डितेन मण्डलेनेव शशाङ्कस्य महतातपत्रेण सफलयन्ननिमिषदृग्सृष्टिमम्भोजसम्भवस्य, गन्धर्वकुलवाद्यमानबहुविधातोद्यनिनादकबळीकृताशावकाशतयेव सङ्कुलचलितसेनासङ्घसङ्कटोन्मुक्तसिंहनादधारापथे निर्जगाम तारापथे ॥

मञ्जीरैर्नटनारभटीमुखरितैः स्ववरिवामभ्रुवां
मन्द्रस्निग्धरवैश्च किन्नरकरव्यापारितैर्मर्दलैः ।

या मकरन्दधाराः तासां निरासायेव निवारणायेव । मकुटमुपर्युपरि किरीटस्य समीपोर्ध्वभाग इत्यर्थः । 'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥' इति शास्त्रात् मकुटमित्यत्र द्वितीया । धार्यमाणेन कारितेन कृतेन वा । सर्वतः समन्ततः प्रालम्बः लम्बमानः मुक्तासराणां मुक्ताहाराणां कदम्बः तच्छालितया । समन्ततोऽपि सर्वतोऽपि । निहिता विन्यस्ताः निखाता इति यावत् । ये कुपितस्य विधुन्तुदस्य राहोः । विध्वरुषोस्तुद इति खश् । अरुर्द्विषदित्यादिना मुम् । 'सैंहिकेयो विधुन्तुदः' इत्यमरः । विकटाः निष्ठुराः ये दन्ताः तत्कृतानि यानि क्षतानि व्रणानि तद्विवरेभ्यः तच्छिद्रेभ्यः क्षरन्त्यः स्रवन्त्यः याः अमृतधाराः तासां सहस्रेण मण्डितेन अलङ्कृतेन शशाङ्कस्य चन्द्रस्य मण्डलेनेव स्थितेन महता आतपत्रेण । अम्भोजसम्भवस्य ब्रह्मणः । न विद्यमाना निमिषा निमेषा यासां तासां दृष्टीनां सृष्टिं निर्माणं सफलयन् सफलं कुर्वन् । तत्करोतीति ण्यन्ताल्लटश्शत्रादेशः । गन्धर्वकुलैर्वाद्यमानानि नादितानि यानि बहुविधानि अनेकविधानि आतोद्यानि वंशताळमृदङ्गवीणालक्षणानि तेषां निनदेन नादेन कबळीकृतः आशानां दिशामवकाशो यस्य स तस्य भावस्तत्ता तयेव । सङ्कुलं तुमुलं यथा तथा चलिताः याः सेनाः तासां सङ्घेन सङ्कटेन सम्बाधेन । 'सङ्कटं ना तु सम्बाध' इत्यमरः । उन्मुक्तः त्यक्तः सिंहनादस्य धारायाः परम्परायाः पन्था यस्य तथाभूते तारापथे नक्षत्रमार्गे निर्जगाम ययौ । गमेः कर्तरि लिट् । तदानीं सकलमपि इन्द्रसेनामुखं नादमयं ब्रह्मेव समजनीत्याह ॥ **मञ्जीरैरिति** ॥ नटनस्य ताण्डवस्य । 'ताण्डवं नटनं' इत्यमरः । आरभटी प्रक्रमः तस्यां मुखरितैः नादितैः स्ववरिवामभ्रुवां स्ववेंश्यानां मञ्जीरैः पादकटकैः । 'मञ्जीरो नूपुरोऽस्त्रियां' इत्यमरः । किन्नरकरैः व्यापारितैः ध्वनितैः ताडितैरिति वा । अत एव मन्द्राः गम्भीराः स्निग्धाः रमणीयाः रवाः येषां तैर्मर्दलैः पणवैः । 'मर्दलः

श्लाघा श्लोकशतैश्च चारणगणप्रोद्गीयमानैस्तदा
नादब्रह्ममयीव तत्र रुरुचे नासीरसीमा हरेः ॥ २२ ॥

अपिच ।

अग्रे पश्चादुभयत इति त्यक्तलोकव्यवस्थे
दृष्ट्या तस्मिन्नपि परिणते सर्वतः सम्मुखीने ।
सभ्रूभङ्गं नयनवलनं सस्मितं द्रष्टुकामा
भूयोऽप्यग्रे सुरपरिवृढास्तस्य पुञ्जीबभूवुः ॥ २३ ॥

---

पणवोऽन्ये च' इत्यमरः। चारणानां देवयोनिविशेषाणां गणेन प्रोद्गीयमानैः। श्लाघा स्तुतिः। श्लाघृ कत्थन इति धातोः पचादित्वादच्प्रत्ययः। ततोऽदन्तलक्षणष्टाप्। श्लाघारूपा ये श्लोकाः पद्यानि। 'पद्ये यशसि च श्लोके' इत्यमरः। तेषां शतैरनेकैश्च तत्र काले हरेरिन्द्रस्य नासीरसीमा सेनामुखभागः। डाबुभाभ्यामन्यतरस्यामिति सीमन्शब्दाद्वैकल्पिको डाप्प्रत्ययः। नादब्रह्ममयीव शब्दब्रह्मरूपेव। प्राचुर्ये मयट्। रुरुचे चकासे। रुच दीप्तावित्यस्मात्कर्तरि लिट्। इन्द्रः सहस्राक्षतया सर्वतः प्रसृतचक्षुरपि देवाः सस्मितचक्षुःप्रसरणमेव केवलं दिदृक्षवः तस्य पुरोभाग एव सङ्घीबभूवुरित्याह ॥ **अग्र इति** ॥ अत्रेदं बोध्यम्। जङ्गमाजङ्गमभेदेन लोको द्विविधः। तत्र केचन अग्रेदृष्टयः यथा मानवाः केचन पश्चाद्दृष्टयः यथा सर्पविशेषाः व्याळग्राहिभिरानीतेषु दृष्टप्रसिद्धाः केचन उभयतोदृष्टयः असुरविशेषा इतिहासपुराणादिप्रसिद्धाः केचन सर्वतोऽप्यदृष्टयः नगवृक्षादयः। अग्रे अग्रभागे अयमिन्द्रस्तु पार्श्वाभ्यां सर्वतोदृष्टिरिति वस्तुस्थितिः। पश्चात् पश्चाद्भागे। उभयतः अग्रपृष्ठभागयोर्द्वयोश्चेति दृष्ट्या दर्शनेन त्यक्तलोकव्यवस्थे उत्सृष्टलोकमर्यादे। 'सीमा व्यवस्था मर्यादा' इति यादवः। दिष्ट्येति पाठान्तरम्। तत्पाठे अग्रे पुरोभाग इति पश्चाद्भाग इति उभयत इति त्यक्तलोकव्यवस्थे परिणते सञ्जाते इत्यर्थः। तस्मिन् इन्द्रे। दिष्ट्या सुखेन। 'दिष्टिर्ज्ञानसुखानन्दपरिणामेषु' इति भास्करः। अत एव सर्वतः सम्मुखीने सति अवशिष्टं समं परिणते सम्पन्ने तस्मिन्निन्द्रे सर्वतः परितः। सम्मुखीने सम्मुखं साधावपि अभिमुखे सत्यपीत्यर्थः। भ्रुवोः भङ्गः उत्पातनं तेन सहितं सस्मितं स्मितेन सहितं नयनवलनमपि दर्शनचातुर्यमिति यावत्। भूयः आधिकं पुनर्द्रष्टुकामाः दिदृक्षवः सुरपरिवृढाः। प्रभौ परिवृढ इति निपातनात्साधुः। आधिकारिकाः सुरा इत्यर्थः। अग्रेऽपि पुञ्जीबभूवुः सङ्घीबभूवुरित्यर्थः। रमणीयवस्तुदर्शने को वा न प्रयतत इति भावः। विद्याधरीहस्तात् दुर्वाससा समादाय दत्तस्य कालिकाप्रसादलब्धनिर्माल्यस्य अनादरस्पर्शोऽपीन्द्रस्यामृतप्राप्तौ मूलहेतुरिति मनसि निधाय तत्सन्नतित्वेन शिवपूजानन्तरं मध्येमार्गं शिवभक्तिधुरन्धरं दु-

गच्छन्नेव स नभसि, भसितावकुण्ठितसर्वाङ्गसङ्गलब्धपरभागभासुराभिरभिव्याप्य हृदयमधिकतया बहिर्निर्गमिष्यतः कोपानलस्य ज्वालाभिरिव पाटलाभिर्जटाभिरभिभवन्तमिव तटित्वन्तमभिनवं शारदाम्भोदं, अपि च त्रिभुवनमुनिलोकवैलक्षण्यबोधिन्या शापमूलतपोलाभसम्भवया कीर्त्येव त्रिपुण्ड्ररेखया परिकर्मितललाटमण्डलं, अतिप्रचण्डनिजतपोऽनलज्वालाकलापपरिम्लोषमालिनितैः प्रतिशापाक्षरैरिव पारिकांक्षिणां रुद्राक्षमणिभिरभिवेष्टितं, सोदरशशाङ्कसन्देशहारिकाभिः तारकाभिरिव कर्णपुटाभ्यर्णलग्नाभिः स्फटिकाक्षगुळिकाभिरभिशोभितं, अगृहीतोत्तरासङ्गं, अङ्गीकृतकौपीनमात्रपरिग्रा-

वाससं ददर्शेत्याह ॥ स इति ॥ स इन्द्रः । गच्छन्नेव परिक्रामन्नेव नभसि । भसितेन भस्मना अवकुण्ठितानि छन्नानि सर्वाणि यान्यङ्गानि तेषां सङ्गेन लब्धः यः परभागः वर्णोत्कर्षः । 'परभागस्स्थालथल्यं चाकचक्यमिति त्रयम् । वर्णोत्कर्ष इति प्राहुः' इति मेदिनी । तेन भासुराभिः प्रकाशमानाभिः हृदयमभिव्याप्य आपूर्य अधिकतया आधिक्येन बहिः निर्गमिष्यतः कोपानलस्य कोपाग्नेः पाटलाभिः ज्वालाभिरिव स्थिताभिर्जटाभिरभिवेष्टितं आवृतं अत एव तटित्वन्तं विद्युच्छालिनं अभिनवं शारदं शरत्कालिकमम्भोदं मेघं तमप्यभिभवन्तमिव तिरस्कुर्वन्तमिव । त्रिभुवने ये मुनिलोकाः मुनिजनाः । 'लोकस्तु भुवने जने' इत्यमरः । तेभ्यो यद्वैलक्षण्यं विशेषवैजात्यमिति यावत् । तस्य बोधिन्या बोधिकया सूचिकयेति यावत् । शापमूलः शापकारणकः यस्तपोलाभः तत्सम्भवया तदुत्पन्नया कीर्त्येव स्थितया । 'मुनेर्दुर्वाससोऽन्यत्र तपो नश्यति शापतः । दुर्वाससस्तु तपसो वृद्धिरित्याहुरास्तिकाः ॥' इत्युक्तेः । त्रिपुण्ड्ररेखया परिकल्पितमलङ्कृतं ललाटमण्डलं यस्य तम् । अतिप्रचण्डः अत्युल्बणः यः कोपानलः तस्य ज्वालाभिः परिम्लोषो म्लानता तेन मालिनितैः पारिकांक्षिणां तापसानाम् 'पारिकाङ्क्षी वाचंयमो मुनिः' इत्यमरः । प्रतिशापस्य प्रतिबिम्बीभूतशापस्य प्रतिकूलशापस्येति यावत् । अक्षरैर्वर्णैरिव स्थितैः रुद्राक्षैरेव मणिभिरभिवेष्टितं वलयितम् । सोदरो यः शशाङ्कः तस्य सन्देशस्य हारिकाभिः वक्त्रीभिः । 'सन्देशवाग्वाचिकं स्यात्' इत्यमरः । तारकाभिरिव । 'तारकाप्युडु वा स्त्रियां' इत्यमरः । तद्वत्स्थिताभिरिति यावत् । कर्णपुटस्याभ्यर्णे उपकण्ठे तत्र लग्नाभिः स्फटिकाक्षैरेव गुळि-

१. अत्र व्याख्यानुसारेण 'अभिवेष्टितं' इत्यधिकः पाठः ।

२. अतिप्रचण्डकोपानलज्वालापरिम्लोषमालिनितैरिति व्याख्यानुसारी पाठः ।

नं, आस्फोटयन्तमनुपदं, अवरुन्धन्तमध्वनि मिळन्ति सिद्ध-वधूकुलानि, त्रासयन्तमिव कातरान्, तर्जयन्तमिव शुनासीरभटानपि, गर्जन्तमिव, गायन्तमिव, नृत्यन्तमिव, स्खलन्तमिव, हसन्तमिव, हृदयारविन्दकुहरविहरदुन्मत्तशेखरभावनानैरन्तर्यादुन्मत्तमिव, स्वयमप्यवाप्तसमस्तकामतया किञ्चिदप्यनादृतलोकतन्त्रानुविधानं, त्रिलोचनावतारमप्यत्रिलोचनावतारसोदरं, अनसूयागर्भसम्भवमप्यत्यन्तकोपनं, अतिकठिनतपोविशेषपरितोषितगौरीप्रसादसमासादितामपि कयापि विद्याधरकन्यया प्रार्थनामात्रादेव शापभीतया प्रणिपत्य समर्पितां कामपि कनकारविन्दमयीमम्लानमालिकामानयन्तं,

काभिः अभिशोभितम् । अगृहीतं अस्वीकृतमुत्तरासङ्गं परिधानं येन स तथाभूतम् । अङ्गीकृतं कौपीनं पुरुषलिङ्गं तदाच्छादनमपि उपचारात्कौपीनमित्युच्यते तदेव तन्मात्रम् । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः । परिधानं यस्य स तथोक्तम् । अनुपदं प्रतिपदम् । वीप्सायामव्ययीभावः । आस्फोटयन्तं अङ्गुळिस्फोटं कुर्वन्तं । अध्वनि मिळन्ति सङ्गीभवन्ति सिद्धवधूकुलानि अवरुन्धन्तं । नासीरभटान् । 'सेनामुखं तु नासीरं' इत्यमरः । त्रासयन्तं त्रासं कुर्वन्तं । ब्रह्मनिष्ठश्चरेन्नित्यं बालोन्मत्तपिशाचवदिति शास्त्रादिति भावः । गर्जन्तमिव नदन्तमिव गायन्तमिव नृत्यन्तमिव स्खलन्तमिव हसन्तमिव हृदयारविन्दकुहरे हृत्कमलाकाशे विहरतः उन्मत्तनामकं कुसुमं शेखरं यस्य स तथाभूतस्य अन्यत्र भ्रान्ताशिरोमणेरित्यर्थः । 'श्वेतार्कं श्वेतदूर्वा च बिल्वमुन्मत्तकं तथा । शिवप्रियाणि चैतानि द्रोणनीलोत्पले तथा' इति शिवसहस्रनामभाष्योक्तेः । तस्य भावना सोऽहमित्यनुसन्धानं तस्या नैरन्तर्यात् उन्मत्तमिव । त्रिलोचनादवतारो जन्म यस्य स तथाभूतोऽपि अत्रिलोचनावतारसोदरं त्रिलोचनावतारस्य सोदरो यस्तद्भिन्न इत्युक्तेर्विरोधः । आभासस्तु अत्रिमुनेः लोचनादवतारो यस्य स तथाभूतः । चन्द्रः तस्य सोदरम् । अविद्यमाना असूया यस्यास्तस्याः गर्भसम्भवोऽपि अत्यन्तकोपन इत्युक्तेर्विरोधः । कुत इत्युक्ते असूयादिघटिताः केचन गुणाः मातृतः पुत्रे सङ्क्रामन्ति अनीहत्वादयः केचन गुणाः पितृत इति लोकप्रसिद्धेरिति बोध्यम् । अन्यत्र अनसूयायाः अत्रिपत्न्या गर्भात्सम्भवं अत्यन्तकोपनम् । 'चण्डस्त्वत्यन्तकोपनः' इत्यमरः । अतिकठिनं अनशनप्राणायामपूर्वकध्यानलक्षणः यः तपोविशेषः तेन परितोषिताया गौर्याः प्रसादेन समासादितां प्राप्ताम् । कयापि विद्याधरकन्यकया चित्रवसुपुत्र्या प्रार्थनामात्रादेव याचनामात्रादेव शापाद्भीतया प्रणिपत्य नमस्कृत्य समर्पि-

आपतन्तमग्रत एव निरर्गळमभिमन्त्र्य मुक्तमिव पाशुपतं शरं अनतिलङ्घनीयतेजसं, दुर्वाससं नाम तापसमद्राक्षीत्। जानन्नपि तमनतिक्रमणीयतेजसं दुर्वाससं, जानन्नपि जगदेव निखिलमपलपितुमन्यथयितुं च नैपुण्यं ब्राह्मणस्य, जानन्नपि मुनिकुलन्यक्कारपरिणतां गतिं नहुषस्य, शिष्योऽपि बृहस्पतेः, शीलितमर्मापि धर्मशास्त्रेषु, परिचर्यारतोऽपि निसर्गत एव ब्राह्मणानां, आचतुराननादाचकीटपतङ्गेभ्यः तुल्यवदेव प्रभवन्त्या भगवत्या भवितव्यताया विलासेन त्रिभुवनाधिपत्यमदान्धीकृ-

तां दत्तां कनकारविन्दमयीं सुवर्णपद्मप्रचुरां अत एव अम्लानकुसुममालिकामानवन्तम्। कर इति शेषः। अग्रत एव अभिमन्त्र्य मन्त्रमुच्चार्य मुक्तं प्रयुक्तं पाशुपतं पशुपतिदेवताकं अस्त्रमिव निरर्गळं निर्निरोधः यथा तथा । 'अबाधं तु निरर्गळं' इत्यमरः । आपतन्तमागच्छन्तं अनतिक्रमणीयमनुल्लङ्घनीयं तेजस्सामर्थ्यं यस्य स तथाभूतं शरमिव स्थितं दुर्वाससं नाम प्रसिद्धतापसं अद्राक्षीत् दृष्टवान् । दृशेर्लुङ् । बुद्धिमानपि देवेन्द्रो भवितव्यताया अपरिहार्यत्वात्तदानीं प्रममादेत्याशयेनाह ॥ **जानन्निति** ॥ तं दुर्वाससं अनतिक्रमणीयं अनभिभाव्यं तेजस्सामर्थ्यं यस्य स तथाभूतं जानन्नपि विदन्नपि । निखिलं जगदेव सर्वं दृश्यप्रपञ्चमेव अपलपितुं नास्तीति वक्तुं अन्यथयितुं च सन्तमपि समुद्रादिकं असन्तं कर्तुं च ब्राह्मणस्य। जात्याख्यायामेकवचनम्। नैपुण्यं सामर्थ्यं अस्तीति जानन्नपि । मुनिजनानां न्यक्कारेण तिरस्कारेण परिणतां पर्यवसन्नाम्। 'स सर्प सर्पेति निरुक्त्वा सर्पतां गतः। नहुषो ब्रह्मणां शापादिति पौराणिका विदुः' इत्यादिना नहुषस्य गतिं दशां । 'गतिर्मार्गे दशायां च' इति विश्वः । विदन्नपि बृहस्पतेश्शिष्योऽपि । महदनुशिष्टो महान् भवेदिति न्यायादिति भावः । धर्मशास्त्रेषु शीलितं परिशीलितं मर्म रहस्यं येन स तथाभूतोऽपि । 'ब्रह्मतेजोबलं बलम्। तिरस्काराद्ब्राह्मणानामीश्वरोऽपि पतत्यधः' इति ज्ञात्वापीति भावः । निसर्गतः स्वत एव ब्राह्मणानां परिचर्यापरोऽपि । 'परिचर्या तु शुश्रूषा' इत्यमरः । 'येकेचास्मच्छ्रेयांसो ब्राह्मणाः तेषां त्वयासनेन प्रश्वसितव्यं' इत्यादिश्रुतेः । 'ऊर्ध्वं प्राणा ह्युत्क्रमन्ति यूनस्स्थविर आगते। प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते॥' इत्यादिस्मृतीश्च बुद्ध्वापीति भावः। आचतुराननाद्ब्रह्माणमारभ्येत्यर्थः। आ च कीटपतङ्गेभ्यः पतङ्गाः पक्षवन्तः कृमिविशेषाः तानभिव्याप्येत्यर्थः। तुल्यवत् तुल्येष्विव। तत्र तस्येवेति सप्तम्यन्ताद्वतिप्रत्ययः। एकरीत्या प्रभवन्त्याः प्रसरन्त्याः भगवत्याः माहात्म्यवत्याः। 'भगः श्रीकाममाहात्म्य' इत्यमरः। भवितव्यताया नियतेर्विलासेनैव त्रिभुवनस्य आधिपत्येन यो मदः तेन अन्धीकृतं दर्शनाननुगुणीकृतं लोचनं यस्य स

तलोचनो, धीमानपि सहस्रलोचनः न तं प्रत्यवरुरोह, न तरामुपचचार गिरा, न तमां च प्रणनाम। अपि च न केवलं तमवजज्ञे, अपि तु पुनरसम्भावितेनापि तेन वितीर्यमाणामादाय सावज्ञमेकेन पाणिना मालिकां, पश्यत एव महर्षेः, अनुपनीय मकुटतटीमनाघ्राय चान्ततः स्कन्ध एव सिन्धुरस्य निवेशयामास। निवेशितमात्रा च सा निसर्गनिरवग्रहेण वेतण्डेन शुण्डयाकृष्य निष्पिपिषे।

पश्यन् पदाग्रमृदितां महता गजेन
मालां प्रसादपरिपाकमयीं मृडान्याः।
हस्तेन हस्तमभिहत्य स नित्यकोपः
कोपारुणं मुनिरधारयदक्षिकोणम्॥ २४॥

---

तथाभूतः। धीमानपि प्रशस्तबुद्धिरपि सहस्रलोचनः अनेकाक्षः इन्द्रः। तं प्रति मुनिमुद्दिश्य नावरुरोह यानादिति शेषः। तं मुनिं गिरा नोपचचार उपचारं न कृतवान्। तं न प्रणनाम प्रणतिं नाकरोत्। केवलं तमवजज्ञे। दुर्दशायां शिरःस्थायामुचितं कस्य भामत इति भावः। मुनिमिव मुनिकृतं महान्तमनुग्रहमपि दुर्दशावशादेव न बहुमेन इत्याह॥ **अपि त्विति**॥ असंभावितेनापि असत्कृतेनापि मुनिना वितीर्यमाणां दत्तां मालिकां पूर्वोक्तामेकेन पाणिना सावज्ञं यथा तथा सावमानमित्यर्थः। 'अवज्ञावहेळनमसूर्क्षणं' इत्यमरः। पश्यत एव महर्षेः पश्यन्तं महर्षिमनादृत्येत्यर्थः। षष्ठी चानादर इति षष्ठी। मकुटतटं शिरःप्रदेशं अनुपनीय अप्रापय्य अन्ततः अन्ते सार्वविभक्तिकस्तसिः। अनाघ्राय आघ्राणमकृत्वा सिन्धुरस्य गजस्य स्कन्ध एव भुजाशिरस्येव निवेशयामास प्रचिक्षेपेत्यर्थः। विधिप्रातिकूल्ये तादृशोऽपि प्रमाद्यतीति भावः। सात्त्विकनमस्येन्द्रस्यैव प्रमादे सति तामसतमस्य गजस्य प्रमादः क्रियानित्याशयेन तत्कृतं दौश्शील्यमाह॥ **निवेशितेति**॥ निवेशितमात्रापि न्यस्तमाला च सा माला निसर्गात्स्वभावादनवग्रहेण दुर्निरोधेन वेतण्डेन गजेन शुण्डया करेण आकृष्य निष्पिपिषे। पिषेः कर्मणि लिट्। स्वापराधं सहमानोऽपि मुनिः कालिकापराधं न सेह इत्याह॥ **पश्यन्निति**॥ महता गजेन पदाग्रेण मृदितां चूर्णितां मालां मृडान्याः। 'मृडानी चण्डिका' इत्यमरः। इन्द्रवरुणेत्यादिना आनुक् ङीष्प्रत्ययश्च। प्रसादस्य परिणाममयीं परिपाकमयीं पश्यन् जानन्नित्यमनवरतं कोपो यस्य स तथाभूतः। 'नित्यानवरताजस्रं' इत्यमरः। स मुनिर्हस्तेन हस्तमभिहत्य सन्ताड्य कोपेनारुणं ताम्रं अक्षिकोणं दृगञ्चलं अधार-

वीरभद्र इव क्रुद्धे वीरमाहेश्वरे मुनौ ।
इतिकर्तव्यतामूढमिन्द्रमैक्षन्त देवताः ॥ २५ ॥

तदनु च ।

यावत्सान्त्वयितुं तदन्तिकभुवं धावन्ति मन्दीभव-
त्काकुव्याकुलगद्गदस्तुतिवचोगुम्फा निलिम्पाः स्वयम् ।
तावद्देवपतिं शशाप कुटिलक्रूरभ्रमत्तारक-
भ्रूभङ्गव्यतिषङ्गदत्तभुवनातङ्को मुनिः शाङ्करः ॥ २६ ॥

येयं त्रैलोक्यराज्यश्रीस्त्वदालम्बेन चेष्टते ।
सैवाद्य त्वदमित्राणां वशमापद्यतामिति ॥ २७ ॥

---

यत् धृतवान् । धरतेर्ण्यन्तात्कर्तरि लङ् । अप्रियकारिणं प्रति को वा न कुप्यतीति भावः । कोपलिङ्गस्य नेत्रारुणस्य धारणमात्रादेव इन्द्रस्तदाज्ञावर्ती संवृत्त इत्याह ॥ **वीरेति** ॥ वीरमाहेश्वरे वीरशैवे मुनौ वीरभद्रे दक्षयज्ञान्तक इव क्रुद्धे क्रोधवति वीरभद्र इव स्थिते सतीति वार्थः । देवताः इतिकर्तव्यतायां यथोचितव्यापारे मूढं अज्ञं । 'अज्ञमूढयथाजात' इत्यमरः । इन्द्रं ऐक्षन्त दृष्टवन्तः । ईक्षतेः कर्तरि लङ् । निषिद्धकारिणः कस्य वा समुचितं भासत इति भावः । यावदात्मबलं तावत्स्वामी रक्ष्यो भटोत्तमैरिति न्यायात स्वाम्यर्थं मुनिसान्त्वने प्रयतमानानां देवानां सत्वरगमनादिकं फलाय नाभूदित्याशयेनाह ॥ **निलिम्पा इति** ॥ निलिम्पाः सुराः सान्त्वयितुं समाधातुं तस्य मुनेरन्तिकभुवं समीपभूमिम् । 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा' इत्यमरः । काक्वा भयोत्पन्नविकारात्मनिना । 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' इत्यमरः । व्याकुलानि सन्दर्भरहितानि यानि गद्गदानि अविस्पष्टाक्षराणि स्तुतिरूपाणि वचांसि तेषां गुम्फो ग्रथनं येषां ते । यद्वा सर्वं गुम्फविशेषणम् । तथाभूताः सन्तः यावद्धावन्ति गन्तारः । यावत्पुरानिपातयोर्भविष्यदर्थे लट् । कुटिले क्रूरे भ्रमती ये तारके यस्य भ्रूभङ्गयोः भ्रूशकलयोः । 'भङ्गः खण्डे पराजये' इति नानार्थमाला । व्यतिषङ्गो ग्रन्थिः तेन दत्तो भुवनस्य आतङ्कः । 'रुक्तापशङ्कास्वातङ्क' इत्यमरः । भयं यस्य तथाभूतः शाङ्करः शिवभक्तः मुनिः देवपतिमिन्द्रं शशाप अशपत् । शपतेः कर्तरि लिट् । शक्तः कः पुमानपराधिनं न निगृह्णातीति भावः । शापप्रकारमेवाह ॥ **येति** ॥ येयं प्रसिद्धा त्रैलोक्यस्य त्रिभुवनस्य राज्येनाधिपत्येन वर्तमाना श्रीः त्वमेव आलम्बः आधारः तेन चेष्टते वर्तते सैव श्रीः अद्य त्वदमित्राणां तव शत्रूणां असुराणां वशं स्वीयत्वम् । 'स्वीयतायां वशः पुंसि वशा तु करिणी स्त्रियां' इति निघण्टुसारे । आपद्यतां प्राप्नोतु इत्यपराधानुगुणो दण्ड इति शास्त्रा-

आलम्ब्य दैन्यमसकृत्पदयोर्निपत्य
सम्प्रार्थितो मघवता स्तुवता ततोऽयम् ।
शापान्तमाह कथयन्निव लोकरीत्या
गोविन्द एव कुशलानि करिष्यतीति ॥ २८ ॥

तदनु यथागतं गते दुर्वाससि, तावता वैभवेन विनिर्गतोऽप्यतर्कितोपनततदीयशापसमुत्सारितोत्साहः, समग्रेण मण्डलेन निर्जिहानो राकाशशाङ्क इव राहुमुखे पतितः सुरपतिः, अभितःप्रसार्यमाणरोषविषादमन्दाक्षशबलकटाक्षसहस्रनियमितव्यापारं अमुखरमुरजमनाहतपटहं अक्वणितवीणादिवादित्रं अवसन्नकिन्नरीगानं अप्रवृत्तरम्भादिनृत्तसंरम्भं अवसितवैतालिककोलाहलं अप्रसक्तवेत्रिहाहारवं अनाशङ्कितभर्त्सिहनादं अस्तङ्गतान्योन्यसङ्कथं असम्भावितपीठमर्दक-

दिति भावः । तदनु प्रणिपतनप्रार्थनादिभिः प्रसन्नो भगवान् मुनिरिन्द्रमनुजग्राहेत्याह ॥ आलम्ब्येति ॥ ततः स्तुवता स्तुतिं कुर्वता मघवता इन्द्रेण दैन्यं दीनत्वमालम्ब्य असकृत्पदयोर्निपत्य निपतनं कृत्वा सम्प्रार्थितोऽयं मुनिः लोकरीत्या कुशलं कथयन्निव गोविन्द एव कुशलानि क्षेमाणि । 'कुशलं क्षेममस्त्रियां' इत्यमरः । करिष्यतीति शापान्तं शापस्य अन्तमवसानं आह आचख्यौ । को वा साधुर्दीनं दुःखितं नानुगृह्णातीति भावः । दूर्वासा येन प्रकारेणागतः तेन प्रकारेणैव स्वावासं गत इन्द्रस्तु न तथेत्याह ॥ तदन्विति ॥ तदनु दूर्वाससि यथागतं स्वागमनमनतिक्रम्य गते प्रस्थिते सति । तावता पूर्वोदितेन कृत्स्नेन वैभवेन उत्सवेन ऐश्वर्येण वा निष्क्रान्तः निर्गतः गङ्गातीरादिति शेषः । तथाभूतोऽपि अतर्कितं अशङ्कितं यथा तथा उपनतः प्राप्तः यस्तदीयशापः तेनोत्सारितः निष्कासितः उत्साहो यस्य सः । अत एव समग्रमण्डलेन राहुमुखे पतितः निर्जिहानः विनिर्गतः राकाशशाङ्क इव पूर्णिमाचन्द्र इव स्थितः । सुरपतिः प्रसार्यमाणाः प्रसारिता ये विषादमन्दाक्षाभ्यां व्यसनलज्जाभ्यां कबला मिश्राः कटाक्षाः तेषां सहस्रेण नियमितः निगृहीतः व्यापारो यस्य तत् । अत एव अमुखरः अध्वनन् मुरजो मृदङ्गो यस्य तत्तथोक्तम् । अनाहतः अताडितः पटहो ढक्का यस्य तत्तथोक्तम् । अक्वणितं अस्वनितं वीणा वादित्रं आतोद्यं यस्मिंस्तत्तथाभूतम् । 'वादित्रातोद्यनामकं' इत्यमरः । अवसन्नं शान्तं किन्नरीगानं यस्मिन् तत् । अप्रवृत्तः अप्रसक्तः रम्भादिनृत्तसंरम्भः त्वरापक्रमो वा यस्य तत् । अवसितः शान्तः वैतालिकानां वन्दिनां कोलाहलो यस्मिंस्तत्तथाभूतम् । अप्रसक्तः वेत्रिणां कशाहस्तानां हाहारवो

विदूषकालापं, अश्वहेषितेऽपि सातङ्कसादिकुलं, अङ्घ्रिविन्यासशब्देऽपि सापराधसौविदल्लजनं, अपनीतमातङ्गघण्टावलयं, आबद्धमिव मूकमिव बधिरमिव मुग्धमिव प्रसुप्तमिव विकलमिव शून्यमिव विन्यस्तमिव चित्रफलके, निखिलमपि विबुधबलमाकर्षन्नेव केवलं, आगत्य पुनर्नगरं, आवेद्य वृत्तमिमं गुरवे वृत्तान्तं, अन्तःपुरं प्रविश्य, दुरन्तचिन्तानुबन्धनियन्त्रितः शयनागार एव जजागार तां रजनीम् । अथ

यस्मिंस्तत्तथाभूतम् अनाशंसितः अनपेक्षितः भटानां सिंहनादो यस्मिंस्तत्तथाभूतम् अस्तङ्गता अन्योन्यस्य कथा प्रस्तावो यस्मिंस्तत्तथाभूतम्। असम्भावितः अबहुमानितः पीठमर्दविदूषकयोः। पीठमर्दविदूषकलक्षणं तु विद्यानाथेनोक्तम्। 'किञ्चिदूनः पीठमर्दो हास्यप्रायो विदूषकः' इति। हास्यैकजीविनोः प्रभुसमीपचारिणोः आलापो वचः यस्मिंस्तत्तथाभूतम्। अश्वानां हेषितेऽपि ध्वनावपि आतङ्केन भयेन वर्तन्त इति सातङ्कानि सादिनां अश्वारोहाणां कुलानि यस्मिन् तथाभूतं अङ्घ्रीणां विन्यासेन यः शब्दः तस्मिन्नपि। 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः। अपराधेन सह वर्तन्त इति तथाभूताः सौविदल्ला एव जनाः यस्मिन् तत्तथाभूतम्। 'सौविदल्लाः कञ्चुकिनः' इत्यमरः। अपनीतौ मातङ्गानां घण्टावलयौ यस्मिंस्तत्। 'कटकं वलयोऽस्त्रियाम्' इत्यमरः। अत एव बद्धमिव मूकमिव अनभ्यस्तवचनमिव। बधिरमिव प्रतिबद्धश्रोत्रमिव। मुग्धमिव मूढमिव। 'मुग्धस्सुन्दरमूढयोः' इति कोशात्। प्रसुप्तमिव शयितमिव। विकलमिव अङ्गरहितमिव। शून्यमिव शून्यतुल्यमिव। वर्तमानमिति शेषः। चित्रफलके विन्यस्तमिव स्थितं। निखिलं विबुधबलमपि आकर्षन्नेव केवलं सर्वेषां जङ्घाबलाभावादिति भावः। नगरं प्रत्यागत्य इमं वृत्तं निष्पन्नार्थं गुरवे निवेद्य। 'सर्वं वृत्तं प्रभुर्धीमान्मन्त्रिणं विनिवेदयेत्' इति शास्त्रादिति भावः। अन्तःपुरं प्रविश्य दुरन्ता दुःखोदर्का या चिन्ता तस्याः अनुबन्धेन नियन्त्रितः निगळितस्सन्। शयनागारे शयनसदन एव। तां रजनीं तस्यां रजन्यामित्यर्थः। कालाध्वनोरत्यन्तसंयोग इति द्वितीया। जजागार जागृ निद्राक्षये अस्माल्लिट्। न निदद्रावित्यर्थः। अकार्यकारी को वा स्वस्थचित्तो भवतीति भावः। वीरमाहेश्वरस्य दूर्वाससो वचनं सफलयितुमागतेन कालेन प्रेरितचारमुखात् इन्द्रं व्यसनिनं ज्ञात्वा भार्गवमुखाच्च। 'स्त्रियोऽथ पानं मृगया तथाक्षा दैवोपघातश्च बहुप्रकारः। इति प्रविष्टं व्यसनं स्वकेन समन्वितः स व्यसनी सुगम्यः॥ परस्य व्यसने केचित्स्वकस्याभ्युदये तथा। यानं प्रशंसन्ति बुधाः स्वबलस्योद्धता तथा।' इत्यादिशास्त्रं च तत्त्वतोऽवबुध्य तत्कालं स्वा-

तदानीमेव गूढनिहितचारनिवेदिततापसशापवृत्तान्तसमाकर्णनलब्धान्तरेण मन्त्रिणा भार्गवेण समादिष्टाः, हृष्टाश्च चिरनिरीक्षितरन्ध्रलाभेन, दर्शयिष्यन्तो दृढपरिचितानि समरकौशलानि, सफलयिष्यन्तः साधितानि महास्त्राणि, समुल्लिखन्तो वैरनिर्यातनप्रकारान्, अपनेष्यन्तश्चिरनिरूढमपयशोमालिन्यं, अभिनन्दन्तो दुर्वाससं, आवेदयन्तः परस्परमभ्यग्रदृष्टानि शुभनिमित्तानि, विवृण्वन्तो वीरवादान्, विभजन्तः प्रतिसैन्यानि सैनिकानां, अवरुन्धन्तश्चारजनसञ्चारं, आसूचयन्तो गन्तव्यपदमाप्तवर्गेषु केवलं, आदिशन्तश्च घण्टापनयन-

---

नुकूलं यानकालं नन्वाना: बाणादयो राक्षसा: सुरैः सह महते युद्धाय सन्नद्धाः सन्तः तदानीमेव निर्गत्यामरपुरीमावव्रुरित्यादि वक्तुं तदीयनिर्गमनप्रकारं वर्णयितुमारभते ॥ अथेति ॥ अथ दूर्वाससो निर्गमनानन्तरं तदानीमेव गूढाः । वेषान्तरच्छन्नाः । 'संवृतौ गूढगूहितौ' इति निघण्टुसारे । निहिताः वर्तमानाः ये चाराः तैर्निवेदितः यः तापसशापवृत्तान्तः तत्समाकर्णनेन लब्धं अन्तरमवकाशः रन्ध्रमिति यावत् । यस्य सः तेन मन्त्रिणा भार्गवेण शुक्रेण । समादिष्टाः चिरात्प्रभृति निरीक्षितं अवेक्षितं यद्रन्ध्रं स्वप्रयाणबीजं तल्लाभेन हृष्टाश्च । दृढमत्यन्तं परिचितानि । 'गाढबाढदृढानि च' इत्यमरः । समरेषु कौशलानि चातुर्याणि दर्शयिष्यन्तः । साधितानि महास्त्राणि सफलयिष्यन्तः सफलानि करिष्यन्तः । सफलशब्दात्तत्करोतीति णिजन्ताल्लृटस्सद्वेति शत्रादेशः । वैरस्य विरोधस्य निर्यातनं निष्कासनं तस्य प्रकारान् । 'निर्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि च' 'प्रकारौ भेदसादृश्य' इत्युभयत्राप्यमरः । समुल्लिखन्तः विकल्पमानाः । चिरनिरूढं चिरादुद्भूतं । रुहेः कर्तरि क्तः । अयशोमालिन्यं अपनेष्यन्तः क्षालयिष्यन्तः । दूर्वाससं अभिनन्दन्तः । अभ्यग्रं अभिमुखं समीपे वा । 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा' इत्यमरः । दृष्टानि शुभनिमित्तानि गरुडदर्शनभुजस्फुरणादीनि । परस्परमावेदयन्तः । परेषामिति शेषः । वीरवादांस्तु अहमेतन्निहन्मीति चाहमेतान्निपातये इत्याकारिकाः युद्धयात्रायां प्रसिद्धाः तान्विवृण्वन्तः विवरणवत्कुर्वन्तः विस्तरीकुर्वन्त इति वार्थः । सैनिकानां स्वीयानामिति शेषः । प्रतिसैन्यानि प्रतिपक्षसेनाः विभजन्तः आग्नेयसेनाः केषाञ्चिद्वसुसेनाः केषाञ्चित्सूरसेनाः केषाञ्चिज्जेतव्या इत्येव विभागं कुर्वन्तः । चारजनानां सञ्चारं अवरुन्धन्तः । आप्तवर्गेषु केवलं मुख्यं गम्यं गमनोद्देश्यं पदं स्थानं आसूचयन्तः अस्पष्टमीषद्बोधयन्तः । 'आङीषदर्थेऽभिव्याप्तौ' इत्यमरः । अनेकाभ्यां मुखशुण्डाभ्यां पिबन्तीत्यनेकपाः तेषां घण्टानां अपनयनं विमोचनम् । अश्वोत्तमानां श्रेष्ठाश्वानाम् ।

मनेकपानां, अङ्गदासङ्घट्टनमश्वोरसानां, अनुच्छ्रयणं ध्वजानां, अवादनं वादित्राणां, अक्ष्वेळनं च योधानां, अभिवन्द्य पुरोधसं, अनुमान्य योधमुख्यान्, आमन्त्र्य गुरुजनं, अनुज्ञाप्य मौहूर्तिकान्, भावयन्तः प्राचीनान् महासुरान्, पठन्तश्च तेषामेव वेदापहरणवसुधानिमज्जनादीनि प्रचण्डानि चरितमङ्गलानि, प्रस्थाय दानवाः कतिचिदतिचिरोपरुद्धकण्डूलदोर्मण्डलतया कालविपाकपचेळिमया शक्तिमत्तया च, पर्यवसितुमिव भूधरानङ्गुळिस्फोटेन, परिक्षेप्तुमिव मुखमारुतेन सप्त सागरान्, उन्मूलयितुमिव समूलमेव पातालं, उत्क्षेप्तुमिव दूरमन्तरिक्षं, व्यत्यासयितुमिव विध्यण्डमण्डलं, निर्वापयितुमिव चन्द्रार्कदीपिकां, दग्धुमिव दहनमपि, भङ्क्तुमिव प्रभञ्जनमपि, बद्धुमिव पाशिनमपि, हन्तुमिव दुर्दान्तमन्तकमपि, सन्नह्यन्त्या किञ्चिदप्यज्ञातकार्यविशेषतया महामात्रक-

अश्वानामुरांसि अश्वोरसानि । 'अच्प्रत्यन्ववपूर्वात्सामलोम्नः' इति... 

अथ्याख्यायामुरस इति समासान्तोऽच्प्रत्ययः । अङ्गदानां केयूराणाम् । 'केयूरमङ्गदं तुल्ये' इत्यमरः । असङ्घट्टनमसंश्लेषणम् । ध्वजानां पताकानां अनुच्छ्रयणं अनूर्ध्वक्षेपणं । वादित्राणां वाद्यानां अवादनम् । योधानां भटानामक्ष्वेळनमनट्टहासं च आदिशन्तः सन्तः पुरोधसं भार्गवमभिवन्द्य प्रणम्य । योधमुख्याननुमान्य सम्मान्य । सम्मतिं कृत्वेत्यर्थः । गुरुजनं मात्रादीन् आमन्त्र्य आपृच्छ्य । मौहूर्तिकान् मुहूर्तवेत्तॄन् । 'स्युर्मौहूर्तिकमौहूर्त' इत्यमरः । अनुज्ञाप्य पृष्ट्वेत्यर्थः । प्राचीनान् शूरपद्मादीन् महासुरान् । भावयन्तः ध्यायन्तः । तेषां प्राचीनासुराणामेव । प्रचण्डानि दुस्सहानि वेदापहरणवसुधानिमज्जनादीनि चरित्रमण्डलानि च पठन्तः । दानवाः प्रस्थाय प्रस्थानं कृत्वा । केचिदतिचिरोपरुद्धम् । निरुद्धं कण्डूलानां कण्डूशालिनां दोष्णां बाहूनां मण्डलं येषां तेषां भावस्तत्ता तया । कालविशेषेण पचेळिमया परिपक्वया शक्तिमत्तया च अङ्गुळीनां स्फोटन शब्देन भूधरान् पर्यवसितुं निरसितुमिव । सप्तसागरान् मुखमारुतेन परिक्षेप्तुं विकिरितुमिव । समूलं पाताळमेव उन्मूलयितुमिव । अन्तरिक्षं दूरमूर्ध्वमुत्क्षेप्तुमिव । विध्यण्डमण्डलं व्यत्यासयितुमिव व्यत्यासं कर्तुमिव । चन्द्रार्कदीपिकां निर्वापयितुं शमितुमिव । दहनमपि दग्धुमिव । प्रभञ्जनं वायुमपि भङ्क्तुमिव । पाशिनं वरुणमपि बद्धुमिव । दुर्दान्तमन्तकमपि हन्तुमिव । सन्नह्यन्त्या कदाचिदप्यज्ञातः कार्यविशेषो यया सा तस्या भावस्तत्ता तया । महामात्रस्य प्रधानस्य । 'महामात्राः प्रधानानि' इत्यमरः । 'महामात्रो हास्तिपके सचिवे त्रिपु

रचलनमात्रपरिज्ञातगन्तव्यदिशा, गगन एव नित्यनिवासेन कदाप्यनागतां मन्दाकिनीं सम्भावयितुमापतता पत्येव वाहिनीनां, महत्या सेनया साकमागत्य शाखानगरममरावत्याः, युगपदाहन्यमानपटहादिबहुविधवाद्यनिर्घोषपोषितकरिलोकबृंहितोपबृंहितभटकोटिसिंहनादकोलाहलेन बोधयामासुरनाशङ्कितपरिभवातङ्कसुखशयितानमृताशनान् ।

क्रुध्यद्दानवयोधनिर्दयकरव्यामर्दभीमध्वन-
नानातोद्यनिनादकातरपरिक्रन्दद्दिगन्तद्विपम् ।
जातं प्रातरतर्कितागतमहातङ्कप्रसङ्गक्षण-
प्रक्षुभ्यत्पुनरुद्भटामरचमूनीरन्ध्रमैन्द्रं पुरम् ॥ २९ ॥

तूनत' इति नलमाला । करचलनमात्रेण करसंज्ञामात्रेण परिज्ञाता गन्तव्या गमनोद्देश्या दिक् यस्यास्तया । गगन एव नित्यवासेन अनागतां कदाप्यनागताम् । स्वमिति शेषः । मन्दाकिनीं वियद्गङ्गां सम्भावयितुं बहुमन्तुं आपतता आगच्छता वाहिनीनां नदीनाम् । 'सेनानद्योस्तु वाहिनी' इति विश्वः । पत्येव स्थितया समुद्रेणेव स्थितया । महत्या सेनया साकममरावत्याः शाखानगरं उपग्रामम् । 'यन्मूलनगरात्पुरम् । तच्छाखानगरं ज्ञेयं' इत्यमरः । आगत्य युगपदेकदा आहन्यमानानि ताड्यमानानि बहुविधानि यानि पटहादिवाद्यानि तेषां निर्घोषेण परिपोषितानि उपचितानि यानि करिलोकबृंहितानि 'बृंहितं करिगर्जितं' इत्यमरः । तैरुपबृंहिताः अभिवर्धिता ये भटकोटीनां सिंहनादाः तेषां कोलाहलेन कलकलेन । 'कोलाहलः कलकलः' इत्यमरः । अनाशङ्किता अनुत्प्रेक्षितः परिभवेन तिरस्कारेण आतङ्कः मनःपीडा यैस्ते तथाविधाश्च ते सुखशयिताश्चेति कर्मधारयः । सुखशयिताः अनाकुला इति तात्पर्यार्थः । तथाभूतानमृताशनान् बोधयामासुः प्रबोधयामासुः । व्याकुलयामासुरिति यावत् । रन्ध्रान्वेषी को वा रन्ध्रलाभे उपक्षेतेति भावः । प्रथममेव तापसशापाद्भीतममरपुरं तदानीमतीव तरलं समजनीत्याह ॥ क्रुध्यदिति ॥ क्रोधविशिष्टाः ये दानवाः तेषां निर्दयं यथा तथा करव्यामर्दः करैः सन्ताडनं तेन भीमं यथा तथा ध्वनन्ति यानि नानातोद्यानि वादित्राणि तन्निनादेन कातराः अधीराः । 'अधीरे कातरस्त्रस्नुभीरुभीरुकभीलुकाः' इत्यमरः । अत एव परिक्रन्दन्तः प्रलपन्तः दिगन्तद्विपाः दिग्गजाः यस्मिन् तत् । प्रातः अतर्कितः अनुत्प्रेक्षितः सन् आगतो यो महातङ्कः मनःपीडा तस्याः प्रसङ्गः प्रसक्तिः तस्य क्षण एव प्रक्षुभ्यत् क्षोभविशिष्टम् । ऐन्द्रं पुरं पुनः उद्भटा उद्धता या अमरचमूः तया नीरन्ध्रं सान्द्रम् । जातं अजनि । शङ्कितः को वा परेभ्यो न बिभेतीति भावः । तदानी गलिताधिकाराणां अनधिकाराणां च प्रजानां कुकल-

अपि च।

संरुन्धन्ति द्विषन्तो नगरमिति समायान्ति रुष्टाः पथीति
प्राकारान्तःप्रविष्टा इति चलति रणो दारुणः सम्प्रतीति।
जीवग्राहं गृहीतः सुरपतिरिति च स्वैरमज्ञातमूलाः
सङ्घे सङ्घे प्रजानां नवनवमभवन् भिन्नभिन्नाः प्रवादाः ॥ ३० ॥

तत्क्षणं च युगविगमसमयसंभिद्यमानसप्तार्णवीनिनादशङ्कावहेन कोलाहलेन नागराणमवबुध्य विद्विषामभिषेणनं, अनुलङ्घनीयतापसशापानुसन्धानकुण्ठीकृतोद्यमोऽपि कण्ठीरव इव करिलोकबृंहितेन परिज्वलितमन्युः, शतमन्युः उत्थाय शयनीयात्, उत्प्रेक्षितसमरसंरम्भया शचीदेव्या ससम्भ्रमस्ने-

---

ना बहुविधा जातेत्याह ॥ **संरुन्धन्तीति** ॥ द्विषन्तः शत्रवः। 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृद' इत्यमरः। नगरं संरुन्धन्ति आवृण्वन्तीति रुष्टाः कुपितास्सन्तः पथि समायान्तीति आगच्छन्तीति प्राकारस्यान्तः प्रविष्टा इति च सम्प्रति दारुणः भयङ्करः रणश्चलति प्रसक्तो भवतीति च सुरपतिरिन्द्रः जीवग्राहं जीवेन सह गृहीत इति प्रजानां सङ्घे सङ्घे प्रतिसङ्घमित्यर्थः। वीप्सायां द्विर्भावः। स्वैरं स्वेच्छानुगुणम्। 'मन्दस्वच्छन्दयोस्स्वैर' इत्यमरः। तद्यथा तथा नवनवं यथा तथा अज्ञातमूलाः अपरिज्ञातमूलकारणकाः। भिन्नभिन्नाः अनेकविधा बहुप्रकारा इति यावत्। प्रवादाः वृत्तान्ताः। अभवन् बभूवुरित्यर्थः। भवतेः कर्तरि लङ्। अपरिज्ञातकारणमर्थं को वा सम्यग्ब्रूयादिति भावः। भगवानिन्द्रोऽपि युद्धाय सन्नद्धेति वक्तुं तदीययुद्धयात्राक्रममेव वर्णयितुमारभते ॥ **तत्क्षणमिति** ॥ तत्क्षणं तस्मिन् समये। नागराणां पुरजनानां युगविगमः युगविपर्ययः। प्रळय इति यावत्। तस्य समये सम्भिद्यमाना उत्सृष्टवेला या सप्तार्णवी सप्त समुद्राः। अथवा युगविगमेन प्रसम्भिद्यमाना सङ्कलितेत्यर्थः। तस्या निनाद इति शङ्कावहेन सन्देहजनकेन कोलाहलेन कलकलेन विद्विषां अभिषेणनं सेनया सहागमनम्। 'यत्सेनयाभिगमनमरौ तदभिषेणनम्' इत्यमरः। अवबुध्य ज्ञात्वा। अनुलङ्घनीयः अनतिक्रमणीयः यः तापसशापः तदनुसन्धानाद्ध्यानात् कुण्ठीकृतः विकलीकृतः उद्यमः उद्योगः येन स तथाभूतोऽपि। करिबृंहितेन गजगर्जितेन कण्ठीरव इव परिज्वलितः प्रज्वलितः मन्युः क्रोधो यस्य स तथाभूतः शतं मन्यवः क्रतवो यस्य सः इन्द्रः। 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः। शयनीयात् शय्यातः उत्थाय उत्प्रेक्षितः ऊहितः समरसंरम्भो युद्धोपक्रमः यथा तया। शचीदेव्या। सम्भ्रमः त्वरा च स्नेहश्च साध्वसं भयं च उद्वेगश्च तैः सह वर्तनं यस्मिन्कर्मणि तत्तथा ॥

हसाध्वसोद्वेगमुपसृत्य स्त्रीस्वभावसुलभेन कातर्येण 'मानद मा कुरु साहसमेवंविधं, प्रेष्यन्तां प्रेषणीयाः' इत्यभ्यर्थ्यमानोऽपि तामवधूय, परिजनवधूकरोदस्तविस्रंसमानसंव्यानपल्लवः, संरम्भाशिथिलपदक्रमः समागम्य चकितसमुद्बुद्धदौवारिकजनोद्धाट्यमानकवाटिकामूलपुञ्जीभवदनुक्षणायातचारवृत्तान्तसमावेदनसन्नह्यत्कुब्जवामनजननिरन्तरालिन्दमन्तःपुरद्वारं, अनादृत्य किङ्करकरावलम्बनं, अनालोक्य निहितामप्यग्रतो मणिपादुकां, अनादिश्य सैनिकागमनं, अनाकाङ्क्ष्य वैनीतकानयनं, अंघ्रिभ्यामेव परिक्रामन्, अनाकर्णयन्निवृत्तिविज्ञापनान्यध्वनि मिळतां सैनिकानां, आकुञ्चिताभ्यां भ्रूलताभ्यामाकम्पितेन च मुखेन केवलमाकर्णयन्वचनानि चाराणां, अतिसम्भ्रमोप-

'उद्वेगौ तु व्यथाकम्पौ' इति भास्करः । उपसृत्य समीपमागत्य । स्त्रीस्वभावेन सुप्रापेन । कातर्येण अधैर्येण । हे मानद ममेति शेषः । सौमङ्गल्यप्रयुक्तपूजाप्रद । एवंविधं साहसं व्यापारं मा कुरु । त्वया कर्तव्यं न भवतीति भावः । 'साहसं तु दमो दण्डः' इत्यमरः । प्रेषणीयाः भृत्याः प्रेष्यन्तां इत्यभ्यर्थ्यमानोऽपि प्रार्थ्यमानोऽपि । तां शचीमवधूय तिरस्कृत्य । परिजनकराभ्यामुदस्तमुत्क्षिप्तं विस्रंसमानस्य लम्बमानस्य संव्यानस्य उत्तरीयस्य पल्लवमग्रं यस्य सः । 'संव्यानमुत्तरीयं स्यात्' इत्यमरः । संरम्भेण सत्वरगमनेन शिथिलः स्खलन् पदक्रमः पदप्रक्षेपः यस्य सः । चकिताः भीताः समुद्बुद्धाः ये दौवारिकजनाः द्वारपालाः तैरुद्घाट्यमाने विश्लिष्यमाणे ये कवाटिके तयोर्मूले पुञ्जीभवन्तः सङ्घीभवन्तः अनुक्षणं प्रतिक्षणं आयाताः ये चाराः तेषां ये वृत्तान्ताः तत्समावेदने सन्नह्यन्तः प्रयतमाना ये च कुब्जाः ये च वामनजनाः । 'कुब्जः सग्रन्थिपृष्ठे स्यात् खर्वो ह्रस्वश्च वामनः' इति नानार्थमालामरौ । तैर्निरन्तरः सान्द्रः अलिन्दः द्वारप्रकोष्ठभागो यस्य तत्तथा । 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः । अन्तःपुरद्वारं समागम्य किङ्कराणां करावलम्बनं हस्तसंश्रयणमप्यनादृत्य । अग्रतो निहितां निक्षिप्तामपि मणिमयीं पादुकामनालोक्य । सैनिकानां सेनारक्षकाणां 'सेनारक्षास्तु सैनिकाः' इत्यमरः । आगमनं सहयात्रामनादिश्य । वैनीतकस्य परम्परावाहनस्य । रथादेरिति यावत् । आनयनमपि । 'परम्परावाहनं यत्तद्वैनीतकमस्त्रियां' इत्यमरः । अनाकाङ्क्ष्य । अङ्घ्रिभ्यामेव परिक्रामन् । अध्वनि मिळतां पुञ्जीभवतां सैनिकानां । निवृत्तिफलकानि विज्ञापनानि प्रार्थनाः अनाकर्णयन् आकुञ्चिताभ्यां ग्रन्थिताभ्यां भ्रूलताभ्यां आकम्पितेन ईषन्नमितेन मुखेनोपलक्षितः चाराणां केवलं तेषाम-

सृत्वरमनिवर्त्यसमरसंरम्भमग्रत एव चलन्तमात्मजं जयन्तमवरुध्य शपथशतैः अन्तःपुररक्षणाय निवेशयन्नालयद्वारि, निस्सरन्नपि बहिस्ततोऽप्यतित्वरितमालयबाह्यकक्ष्यासमानीतामाबध्य कक्ष्यां, आद्यवीथीमुखोपनीतामादाय दम्भोळिं, अर्धपथोपनीतमवमुच्य वारवाणं, अधिगोपुरसदेशमानीयमानमारुह्य मातलिसनाथं रथं, अतिलङ्घ्य संकुलचलदमरभटसङ्गसङ्कटं दुर्गमं गोपुरद्वारं, अतिक्रम्य निजमपि नासीरं, अवगाहमानो दानवचमूं, अलङ्घनीयवचनैरहम्प्रथमिकाप्रतिज्ञातविजयैर्दिक्पतिभिर्निरुध्यमानः, चन्द्रोदयारम्भसमुज्जृम्भितसागर इव वेलानियन्त्रितः, क्षणादुद्ग्रीविकाभिलक्ष्यमाणदुर्नि-

वेत्यर्थः । वचनानि आकर्णयन् । सिंहपोतमिव । अतिसम्भ्रमेण अतित्वरया उपसृत्वरं समीपं प्रत्यागतम् । अनिवर्त्यः अनिवार्यः समर संरम्भः उद्योगो यस्य स तथाभूतम् । अग्रत एव चलन्तं गच्छन्तमात्मजं पुत्रं जयन्तं शपथाः समयबन्धाः तेषां शतैः अवरुध्य निरुध्येत्यर्थः । अन्तःपुररक्षणाय द्वारि द्वारे । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । निवेशयन् स्थापयन् । ततोऽपि बहिर्निस्सरन् गच्छन् आलयस्य गृहस्य बाह्यायां कक्ष्यायां अळिन्दनाम्नि द्वारप्रकोष्ठभागे समानीता कक्ष्यां कच्छपुटापरपर्यायां काञ्चीं । 'कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने' इति नानार्थेऽमरः । अतित्वरितं क्षिप्रं आबध्य मध्यप्रदेशमावेष्टयेत्यर्थः । आद्यवीथीमुखे उपनीतां दम्भोळिं वज्रमादाय अर्धपथे अर्धमार्गे उपनीतं वारवाणं कञ्चुकमवमुच्य धृत्वा । 'कञ्चुको वारवाणोऽस्त्री' इत्यमरः । अधिगोपुरसदेशं पुरद्वारसमीपप्रदेशे । 'पुरद्वारन्तु गोपुरं' 'सदेशाभ्याशसविधसन्निकृष्टा' इति चामरः । उपनीयमानमानीयमानं मातलिना सनाथं सहितं रथमारुह्य । सङ्कुलं अविरळं यथा तथा चलन्तः ये अमरा एव भटाः योधाः तेषां सङ्घेन सङ्कटं सम्बाधं । 'सङ्कटन्ना तु सम्बाध' इत्यमरः । अत एव दुर्गमं दुःखेन गम्यं गोपुरं पुरद्वारं अतिलङ्घ्य । निजं नासीरमपि । 'सेनामुखं तु नासीरं' इत्यमरः । अतिक्रम्य दानवानां चमूं सेनामवगाहमानः प्रविशन् सन्नित्यर्थः । अलङ्घनीयानि अनतिक्रमणीयानि वचनानि येषां तैः अहम्प्रथमिकया अहं प्रथमं जयानि अहं प्रथमं जयानीति च प्रतिज्ञातः विजयः यैस्तैः दिक्पतिभिर्निरुध्यमानः अत एव चन्द्रोदयारम्भेण समुज्जृम्भितः वर्धितः वेलाभिर्नियन्त्रितः निरुद्धः सागर इव स्थितः । उत्क्षिप्ता ग्रीवा यस्यां सा उद्ग्रीविका तया । स्वस्य परस्य सेनयेत्यर्थः । अभिलक्ष्यमाणः दृश्यमानः दुर्निग्रहः दुर्निवारः स-

ग्रहसमराग्रहः शरीरेण केवलमवातिष्ठत सेनामुखे ।

भीमं भीमेन तस्याथ सैन्यं सैन्येन विद्विषाम् ।
समगच्छत कल्पान्ते सागरेणेव सागरः ॥ ३१ ॥

किंच ।

यावज्ज्यावलयावलीढशिखरक्रूरप्रकारध्वन-
च्चापव्यापृतपाणिभिः स्थपुटितं नासीरमासीद्भटैः ।
तावद्देवपतिः क्व दानवपतिः क्वेति प्रवृत्तैः क्रुधा
सेनारक्षिभिरेव तत्र महते युद्धाय बद्धा मतिः ॥ ३२ ॥

तदनु शुनासीर एव स्वनासीरमुपेयुषि, चिरभुक्तभर्तृपिण्डानृण्यसम्पादनावसरलाभसंभावितोत्साहतया तृणीकृत्य जीवितानि विमतबलानीव, विधूय समरभयं विकोशानीव शस्त्रास्त्र-

---

मराग्रहो यस्य स इति बहुव्रीहिगर्भोऽयं कर्मधारयः । सेनामुखे शरीरेण केवलं तन्मात्रेणेत्यर्थः । अवातिष्ठत तस्थौ । को वा तेजस्वी पराभिभवं सहमानो यत्नमकुर्वन् सततमुदास्त इति भावः । देवबलमसुरबलं चेत्युभयं परस्परं समुचितप्रतिपक्षलाभाद्युद्धाय सन्नद्धमित्याह ॥ **भीममिति** ॥ अथ इन्द्रोद्यमनानन्तरं तस्येन्द्रस्य भीमं भयङ्करं सैन्यं कर्तृ विद्विषां भीमेन भयङ्करेण । 'घोरं भीमं भयानकं' इत्यमरः । सैन्येन सह कल्पान्ते कल्पावसाने समुपस्थिते सागरः पूर्वः पश्चिमेन दक्षिणः उत्तरेण सागरेणेव समागच्छत समाघटत । समाश्लिष्यदिति यावत् । योद्धुकामः शस्त्रपाणिर्जीवन्को वा भटः रणमूर्धनि तूष्णीं वर्तेतेति भावः । तदानीमुभयत्र तु बहुषु योधेषु सत्स्वपि प्रथमं सुरदैत्येन्द्रावेवान्वेषितवन्त इत्याह ॥ **यावदिति** ॥ ज्यावलयेन मौर्वीवलयेन अवलीढमाक्रान्तं शिखरं यस्य स तथाभूतश्चासौ क्रूरप्रकारः क्रूरजातीयः ध्वनंश्च यश्चापः तेषु व्यापृताः सक्ताः पाणयो येषां तैः भटैः नासीरं स्थपुटितं व्यत्यस्तं यावदासीत् तावदेव देवपतिः क्व दानवपतिः क्व इति प्रवृत्तैः सेनारक्षिभिः सेनापतिभिरेव महते युद्धाय क्रुधा मतिः बद्धाऽऽसीदित्यन्वयः । सति मुख्ये को वाऽमुख्यान्वेषणं कुर्यादित्यर्थः । स्वामिनो देवेन्द्रस्य भृत्यसत्तासाफल्यद्योतनार्थं देवभटा असुरभटान् पातयितुमारेभिर इत्याह ॥ **तदन्विति** ॥ तदनु शुनासीरे देवेन्द्रे स्वस्य नासीरं सेनामुखं उपेयुष्येव गतवत्येव । चिरं भुक्तं यद्भर्तृपिण्डं भर्तुः रिक्थं द्रव्यमिति यावत् । 'रिक्थं पिण्डमुभे समे' इति यादवः । तस्य यदानृण्यं ऋणापनयनं तस्य सम्पादनं तस्य अवसरः समयः तस्य लाभः प्राप्तिः तेन सम्भावितः प्राप्तः उत्साहः सामर्थ्यं येषां तेषां भावस्तत्ता तया । विमतानां विद्विषां ब-

मण्डलानि, विस्मृत्य भर्तृविमाननाः कादाचित्कीः पुत्रदारपरिभवानिव, मनागप्यनपेक्ष्य जयश्रियमनुपतन्तीमिव मित्रवरूथिनीं, होष्यन्तश्शरानलार्चिषि शरीराणि, चेष्यन्तश्शरदिन्दुसुन्दराणि यशःकन्दळानि, महिषानिव मतङ्गजान्, सारमेयानिव सैन्धवान्, पांसुकणानिव पदातिगणान्, मशकानिव महारथिकान्, कुसुमविहारानिव कुन्ततोमरमुद्गरप्रहारान्, पटवासवृष्टिमिव बाणवृष्टिमपि मन्यमानाः, हन्यमाना अपि हर्षाट्टहासमुखराः, नखरायुधा इव हरिणार्भकेषु, नागान्तका इव राजिलेषु, दन्तावळा इव कदळीवनेषु, दावानला इव जीर्णशल्मलीगुल्मेषु, निश्शङ्कमवगाहमाना दानवेषु, प्रहरन्तः परश्वधैः, कृन्तन्तः कुन्तैः, निपातयन्तः

---

लानीव स्वजीवितान्यपि तृणीकृत्य तृणं मत्वेति तात्पर्यार्थः। समराङ्गणं च विकोशानि विगतावरणकानि शस्त्रास्त्रमण्डलानीव विधूय प्रकम्प्य कादाचित्कीः भर्तुरिन्द्राद्विमानना असम्भावनाश्च पुत्रदारैः परिभवानिव विस्मृत्य। अनुपतन्तीं आगच्छन्तीं मित्रवरूथिनीमिव जयश्रियं मनागप्यनपेक्ष्य। शरानलस्यार्चिषि ज्वालायां शरीराणि होष्यन्तः होमं करिष्यन्तः। शरदिन्दुरिव सुन्दराणि यशसां कन्दळानि नवाङ्कुराणीत्यर्थः। 'कदळी वृक्षमृगयोः कन्दळं तु नवाङ्कुरः' इति नानार्थरत्नमाला। चेष्यन्तः पोष्यन्तः। वर्धयिष्यन्त इत्येकः पाठः। मतङ्गजान् महिषानिव। सैन्धवान् हयान्। 'हयसैन्धवसप्तयः' इत्यमरः। सारमेयानिव शुनकानिव। 'कौलेयस्सारमेयः कुक्कुरो मृगदंशकः' इत्यमरः। पदातीनां गणान् पांसूनां कणानिव। 'लवलेशकणाणवः' इत्यमरः। महारथिकान्। 'आत्मानं सारथिं चाश्वात्रक्षन्युध्येत यो नरः। स महारथसंज्ञस्स्यादित्याहुर्युद्धकोविदाः॥'। मशकानिव कुन्तैः मुद्गरैः तोमरैश्च प्रहारान् ताडनानि कुसुमानां विहारान् विकिरणानीव। बाणानां वृष्टिं पटवासस्य गन्धचूर्णस्य वृष्टिमिव। 'पिष्टातः पटवासकः' इत्यमरः। मन्यमानाः मन्वानाः। हन्यमाना अपि ताड्यमाना अपि। हर्षाट्टहासेन मुखराः हरिणार्भकेषु मृगशिशुषु नखरायुधा इव सिंहा इव। 'सिंहस्तु नखरायुध' इति यादवः। राजिलेषु जलसर्पेषु। 'अलगर्दो जलव्याळस्समौ राजिलडुण्डुभौ' इत्यमरः। नागान्तका इव गरुडा इव। 'नागान्तको विष्णुरथ' इत्यमरः। कदळीनां वनेषु दन्तावळा मदगजा इव। जीर्णशाल्मली जरत्किम्पाकः तस्या गुल्मेषु कक्षेषु। 'पिच्छिला पूरणी मोचा स्थिरायुश्शाल्मली द्वयोः' इत्यमरः। दवानला इव। 'दवो वनहुताशनः' इत्यमरः। दानवेषु निश्शङ्कं निर्भयं यथा त-

कृपाणिकाभिः, अभिघ्नन्तश्शतघ्नीभिः, खण्डयन्तो भिण्डिपालैः, अवकिरन्तश्शरजालैः, अपविध्यन्तश्शक्तिशूलैः, क्षिण्वन्तः क्षेपणिकाभिः, अवबध्नन्तः पाशैः, अभिमृद्नन्तः परिघैः, आकर्षन्तो लाङ्गलैः, आविध्यन्तो मुसलैः, अपहरन्तो जयध्वजान्, अवभिन्दन्तो वारवाणान्, विच्छिन्दन्तो धनुर्गुणान्, विस्रंसयन्तस्सारथीन्, प्रवर्तयन्तो रक्तवाहिनीः, परितोषयन्तः कटपूतनाः, लिम्पन्तश्शरीराणि रक्तधाराभिः, आवेष्टयन्तः करेष्वान्त्रमालिकाः, परिक्रामन्तो मुण्डमण्डलेषु, परिस्खलन्तः कबन्धेषु, अपश्यन्तः पुत्रानपि रणे हतान्, अतृप्यन्तो यूथंयूथमपि निपात्य प्रतिभटान्, अप्रतिभटा विबुधभटाः साफल्यमनैषुरक्षिसाथा।

था। अवगाहमानाः पराक्रममाणाः। परश्वधैः परशुभिः प्रहरन्तः। कुन्तैः कृन्तन्तः छिन्दन्तः। कृपाणिकाभिः आसभिः निपातयन्तः। शतघ्नीभिः लोहयन्त्रैः अभिघ्नन्तः। भिण्डिपालैः दात्रैः खण्डयन्तः शकलयन्तः। शरजालैरवकिरन्तः प्रविक्षिपन्तः। शक्तिशूलैरपविध्यन्तः विनिघ्नन्तः। क्षेपणिकाभिः नौकादण्डैः। 'नौकादण्डः क्षेपणी स्यात्' इत्यमरः। यद्वा क्षेपणिकाभिः लोष्टप्रहरणोपयोगिभिः जालभेदैः। 'नौकादण्डे कालभेदे क्षेपणी' इति नानार्थरत्नमाला। क्षिण्वन्तः विनाशयन्तः। पाशैः रज्जुभिः अवबध्नन्तः। परिघैः अपमृद्नन्तः घातयन्तः। लाङ्गलैः हलैराकर्षयन्तः। मुसलैराविध्यन्तः अभिघ्नन्तः। जयध्वजानपहरन्तः। वारवाणान् कञ्चुकान् 'कञ्चुको वारवाणोऽस्त्री' इत्यमरः। अवभिन्दन्तः विदारयन्तः। धनुषां गुणान् मौर्वीः। 'मौर्वी ज्या शिञ्जिनी गुणाः' इत्यमरः। विच्छिन्दन्तः। सारथीन्विस्रंसयन्तः अधःपातयन्तः। रक्तवाहिनीः रक्तनदीः प्रवर्तयन्तः उत्पादयन्तः। कटपूतनाः पिशाचविशेषान्। 'भैरवी शाकिनी डाकिन्यसृपा कटपूतना' इति हलायुधः। यद्वा कटः शवः तद्भक्षकाश्च ताः पूतनाश्चेति शाकपार्थिवादित्वात्समासः। 'श्रोण्यां भृशे कलिञ्जे गजगण्डे शपथे शवे च कटः। पूतना राक्षसी पथ्या' इति च रत्नमाला। परितोषयन्तस्सन्तोषयन्तः। रक्तधाराभिः शरीराणि लिम्पन्तः। कण्ठेषु। करेष्वित्येकः पाठः। आन्त्राण्येव बृहन्त्राज्य एव मालिकाः। 'आन्त्रं पुरीतदुत्मस्तु' इत्यमरः। आवेष्टयन्तः आवेष्टनं कुर्वन्तः। मुण्डानां करोटीनां मण्डलेषु। 'शिरोऽस्थिन तु करोटिः स्त्री कपालं मुण्डमस्त्रियां' इत्यमरभास्करौ। परिक्रामन्तः चलन्तः। कबन्धेषु अपमूर्धकळेबरेषु। 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकळेबरं' इत्यमरः। रणेषु हतान् पुत्रानप्यपश्यन्तः। प्रतिभटान् प्रतिपक्षयोधान् यूथंयूथं सङ्घं सङ्घं। वीप्सायां द्विर्भावः। निपात्य। अप्रतिभटाः अप्र-

हस्रममरपतेः। आदिश्य च, ततः शतमन्युः अन्तकमग्रतस्सेनामुखे, पार्श्वयोरस्य पवनपावकौ, पृष्ठतः स्वस्य पुण्यजनेश्वरं, अन्तिक एव धनदमाहवशूरान् सभाजयितुं, अध्वनि शिबिरे च विद्विषामपाम्पतिं, आयुधक्षतान् भिषजयितुमाश्विनेयौ, निशीथयोधिनीनां वैरिवरूथिनीनां निशैव माभूदिति सन्ततवासरभावाय सहस्रभानुमप्यभितः प्रकाशितुं, प्रतीक्षमाणोऽपि जयश्रियं, परिशङ्कमानश्चेतसि तापसशापविपाकमाकस्मिकं, किमप्यलीकनभोविभागसीमाधिपत्यलक्षणां लक्ष्मीमुद्दिश्य कलहायमानयोरमरासुरवाहिन्योरज्ञानविजृम्भितोपालम्भसम्भवमट्टहासमिव परमेष्ठिनो घनस्तनितमनभ्र एव दारुण-

तिद्वन्द्विनः विबुधभटाः अमरपतेः अक्षिसाहस्रं साफल्यं सार्थक्यं अनैषुः निन्युः। नयतेर्दुहादित्वात् द्विकर्मकत्वम्। नयतेः कर्तरि लुङ्। नितान्तमुपकृतः को वा शूरः भर्तृसन्निधौ पराक्रमं न प्रकाशयेदिति भावः। सेनासन्निवेशमेव वर्णयति ॥ **आदिश्येति** ॥ ततश्शतमन्युरिन्द्रः सेनामुखे नासीरे अग्रतः अन्तकम्। अस्यान्तकस्य सेनामुखस्य वा। पार्श्वयोः पवनपावकौ वाय्वग्नी। अस्य पृष्ठतः पृष्ठभागे च पुण्यजनेश्वरं निर्ऋतिम्। अन्तिके समीप एव आहवशूरान् सभाजयितुं बहुमन्तुं धनदम्। विद्विषां शत्रूणाम्। 'द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः' इत्यमरः। अध्वनि अपाम्पतिं वरुणं। 'प्रचेता वरुणः पाशी यादसाम्पतिरप्पतिः' इत्यमरः। शिबिरे सेनासन्निवेशे। आयुधक्षतान् भिषजितुं चिकित्सितुमाश्विनेयावश्विनौ। निशीथिन्यां योद्धुं शीलं यासां तासां वैरिवरूथिनीनां वैरिसेनानाम्। निशैव माभूदिति सन्ततं वासरस्य अह्नः भावाय वर्तनाय। 'भावस्सत्तास्वभावयोः' इति नानार्थमाला। अभितस्सर्वतः प्रकाशयितुं सहस्रभानुमप्यादिश्य। विजयश्रियं प्रतीक्षमाणोऽपेक्षमाणः। चेतसि तापसस्य दुर्वाससः शापस्य विपाकमुद्दिश्य परिशङ्कमानः बिभ्यन् किमप्यलीकं अनृतम्। 'अळीकं त्वप्रियेऽनृते' इत्यमरः। यन्नभोविभागस्य सीमायाः आधिपत्यं तल्लक्षणां तत्स्वरूपां लक्ष्मीमुद्दिश्य कलहायमानयोर्युध्यन्त्योः अमरासुरवाहिन्योः देवासुरसेनयोः। 'सेनानथोत्तु वाहिनी' इत्यमरशेषः। अज्ञानेन विजृम्भितः प्रसक्त उपालम्भः निन्दा तज्जं तद्भवं उद्भूतम्। पाठान्तरे अज्ञानविजृम्भितम्। भावे क्तः। अज्ञानस्य विजृम्भणमित्यर्थः। तस्य उपलम्भः अनुभवस्तस्मात्संभवमुत्पन्नमित्यर्थः। परमेष्ठिनः पितामहस्य अट्टहासं क्ष्वेळितमिव स्थितम्। अनभ्रे मेघरहिते देशे इति शेषः। काले गगन इति वा। दारुणं भयङ्करं

मशृणोत्। प्रहितोऽपि सेनामुखे पवनः पदे पदे यदावेद्यमावेदयितुमाववृते, तदेव तस्य प्रतिकूलपवनलक्षणं दुर्निमित्तं परिणेमे। अस्रंसत च करादस्य दम्भोलिः, तदप्यायुधविस्रंसनमशनिपतनं चेति द्वेधा बभूव दुश्शकुनम्।

अत्रान्तरे रणहतोभयसैन्ययोध-
निर्भिन्नमण्डलतया तपनस्समन्तात्।
उद्दामदानवधनुर्गळदुत्प्रबन्ध-
नाराचदारिततया च शनैस्तिरोऽभूत्॥ ३३॥

अतिप्रबन्धादिपुजालवृष्टेरपक्रमाच्च द्युमणेरकाण्डे।

आकस्मिकमज्ञातहेतुकमित्यर्थः। घनस्तनितं घनगर्जनम्। अशृणोत् श्रुतवान्। शृणोतेः कर्तरि लङ्। महदपराधं को वा भयं न प्राप्नुयादिति भावः। तदानीमिन्द्रस्य दुश्शकुनं जातमित्याह द्वाभ्यां वाक्याभ्यां॥ **प्रहित इति**॥ सेनामुखे प्रहितोऽपि प्रेरितोऽपि पवनः पदेपदे प्रतिपदम्। वीप्सायां द्विर्भावः। आवेद्यं विज्ञाप्यं आवेदयितुं निवेदयितुं आववृते आजगामेति यत् तदेव पवनागमनमेव तस्येन्द्रस्य प्रतिकूलपवनलक्षणं दुर्निमित्तं दुश्शकुनं परिणेमे परिणतं बभूव। प्रतिकूलपवनस्य दुर्निमित्तत्वं शाकुनशास्त्रे प्रसिद्धं। 'रजस्वला च विश्वस्ता सम्मुखः पवनस्तथा' इति॥ **अस्रंसतेति**॥ अस्य कराद्दम्भोलिः अशनिः 'दम्भोलिरशनिर्द्वयोः' इत्यमरः। अस्रंसत अपतदिति यत् तदेकमायुधस्य विस्रंसनं स्खलनं अशनिपतनं वज्रपातश्चेति द्वेधा द्विप्रकारं दुश्शकुनं दुर्निमित्तं बभूव। 'मार्जार आगतश्शून्यकुम्भो विगतनासिकः। अस्त्रभ्रंशो वज्रपातः प्रयाणे हानिदा मताः॥' इति शाकुनशास्त्रोक्तेरिति भावः। दैवप्रातिकूल्यात्स्वीयोऽपि परकीयवद्भवतीत्याशयेनाह॥ **अत्रान्तर इति**॥ अत्रान्तरे अस्मिन् समये रणे हताः ये उभयसैन्ययोर्योधाः तैर्निर्भिन्नं मण्डलं यस्य तस्य भावस्तत्ता तया। 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ। परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः॥' इति शास्त्रादिति भावः। समन्तात्परितः उद्दामाः बलाधिकाः। 'उद्दामस्तु बलाधिकः' इति हेमः। ये दानवाः तेषां धनुर्भ्यः निर्गळन्तः निस्सरन्तः उत्कृष्टः प्रबन्धः पक्षसम्बन्धो येषां तथाविधा ये नाराचा बाणविशेषाः। 'प्रक्ष्वेळनास्तु नाराचाः पक्षो वाजस्त्रिषूत्तरे' इत्यमरः। तैर्दारिततया छिन्नतया च तपनः शनैस्तिरोभूत् अन्तर्दधे। प्रतिकूलविधिः कथं वा मित्रं न विघटयेदिति भावः। तदानीमसुराणामनुकूलः समयः सम्प्राप्त इत्याह॥ **अतीति**॥ अकाण्डे असमये द्युमणेस्सूर्यस्य अपक-

आसीत्तमिस्रा जयदा रिपूणां पचेलिमा भाग्यपरम्परेव ॥ ३४ ॥

तत्क्षणं च पुनरनुक्षणोपचीयमानममरबलं, अपक्षीयमाणमात्मबलं च निरीक्षितुमप्यतितिक्षवः, तरक्षव इव बुभुक्षिताः, दन्दशूका इव दण्डघट्टिताः, बलिबाणशम्बरजम्भनमुचिविरोचनमुखा महासुरास्सरभसमवमुच्य वारवाणं, अवबध्य गोधाङ्गुलित्राणं, अपिनह्य निषङ्गमक्षयशरपूरितोत्सङ्गं, अधिरुह्य शताङ्गमायोजितखरतुरङ्गं, आबध्य निटिलेषु भ्रुकुटीविभङ्गं, आसेव्य वीरपाणं, आलम्ब्य संशप्तकव्रतं, अनुज्ञा-

---

मादन्तर्धानात् इषुजालस्य बाणसङ्घस्य वृष्टेः । 'पत्री रोप इषुर्द्वयोः' इत्यमरः । अतिप्रबन्धादत्यन्ताविच्छेदात् नक्षत्राणां प्रकाशो नास्तीति भावः । रिपूणां सुरद्विषां तमिस्रा रात्रिः । 'तमिस्रा तामसी रात्रिः' इत्यमरः । पचेलिमा फलोन्मुखा । पचतेः केलिमप्रत्ययः अदन्तलक्षणष्टाप् । भाग्यस्य अनुकूलदैवस्य । 'भाग्यं स्त्री नियतिर्विधिः' इत्यमरः । परम्परेव पंक्तिरिव । 'रेखालिरावलि-वीथीश्रेणिपंक्तिपरम्परा' इति रभसः । जयदा विजयप्रदा आसीत् अभवत् । स्वप्रतिपक्षमित्रभेदे स्वानुकूलकाले को वा जयं न प्राप्नुयादिति भावः । जयप्रकारमेव वर्णयति ॥ तत्क्षणमिति ॥ तत्क्षणं च पुनः अनुक्षणं प्रतिक्षणं । वीप्सायामव्ययीभावः । उपचीयमानं स्वयमेव वृद्धिं प्राप्यमाणं । कर्मकर्तरि शानच् । अपक्षीयमाणमात्मबलं च वीक्षितुं अतितिक्षवः असहमानाः । 'तितिक्षुः क्षमिता क्षमी' इत्यमरः । क्षुधिताः क्षुत्पीडिताः । 'बुभुक्षितस्स्यात्क्षुधितः' इत्यमरः । रुष्टा इति भावः । बल्यादयो महाराक्षसाः सरभसं सत्वरं यथा तथा । वारवाणं कञ्चुकं लोहमयं अवमुच्य धृत्वा । गोधा तिर्यग्जन्तुविशेषः तच्चर्मनिर्मितं अङ्गुलित्राणं कवचम् । यद्वा गोधासंज्ञिकं च तदङ्गुलित्राणञ्चेति कर्मधारयः । 'कोटिरस्याटिनी गोधा तलं ज्याघातवारणः' इत्यमरः । अवबध्य । अक्षयैरक्षीणैश्शरैः पूरितः उत्सङ्गस्समीपप्रदेशो यस्य स तथाविधम् । 'अङ्गस्समीप उत्सङ्ग' इत्यमरः । निषङ्गं तूणीरं । 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः । सन्नह्य अवबध्य । आयोजिताः बद्धाः खराः अश्वतर्यः तुरगा यस्य स तथाविधं । शताङ्गं रथं । 'शताङ्गस्स्यन्दनो रथः' इत्यमरः । अधिरुह्य निटिलेषु फालेषु भ्रुकुटीविभङ्गं भ्रुशकलं 'तन्द्री प्रमीला भ्रुकुटिः भ्रुकुटिर्भ्रूकुटिः स्त्रियां' इत्यमरः । आबध्य सम्बद्धं कृत्वा । वीरपाणं युद्धप्राक्कालिकं मादकद्रव्यसेवनं । 'वीरपाणं तु यत्पानं वृत्ते भाविनि वा रण' इत्यमरः । आसेव्य कृत्वा । संशप्तकानामसुरविशेषाणां । यद्वा संशप्तकाः युद्धादनिवर्तिन इत्यर्थः । 'संशप्तकास्तु समयात्सङ्ग्रामादनिवर्तिन'

प्य परस्परं, आपूरयन्तो दिङ्मुखानि गुणध्वनिभिः, अवभ्रंशयन्तो गगनतलादुडून्यट्टहासैः, विसंज्ञयन्तः खड्गविच्छुरणेन वीक्षितुमागतानि सिद्धचारणमण्डलानि, विस्मापयन्तस्समरसंरम्भेणैव कर्मन्दिनमपि कलहानन्दिनं, उत्सारयन्तः पादातमूरुवेगेन, परिचूर्णयन्तो रथान् परिघाभिघातैः, विद्रावयन्तो हयान् करताळिकाभिः, विघूर्णयन्तो मतङ्गजानङ्गुळीयन्त्रणेन, संवर्तमारुतावर्तितसागरगर्तदुर्दर्शवक्त्रविवरोल्लसल्लेलिहाननिजरसनावलोकनजनितसाध्वसध्वस्तचेतनमासाद्य सेनामुखे निविष्टमन्तकं, अपहृत्य तदीयमेव कालदण्डममोघं, अभिहत्य तेनैव तं, आदिमं जयमापेदिरे ।

---

इत्यमरः । व्रतं नियमं आलम्ब्य परस्परमनुज्ञाप्य । दिशां मुखानि गुणस्य मौर्व्याः ध्वनिभिः । 'मौर्वीज्याशिञ्जिनीगुणाः' इत्यमरः । आपूरयन्तः गगनतलादुडून्यपि तारका अपि । 'तारकाप्युडु वा स्त्रियां' इत्यमरः । अट्टहासैः अवभ्रंशयन्तः पातयन्तः । वीक्षितुमागतानि सिद्धानां चारणानां देवयोनिविशेषाणां मण्डलानि खड्गानां कम्पनेन विसंज्ञयन्तः मूर्च्छां प्रापयन्तः । समरस्य संरम्भेण उद्योगेनैव कलहेन रणेन । 'रणाः कलहविग्रहौ' इत्यमरः । आस्कन्दितुं शीलं यस्य स तथाविधं कर्मन्दिनं भिक्षुं नारदमिति यावत् । 'भिक्षुः परिव्राट् कर्मन्दी' इत्यमरः । विस्मापयन्तः आश्चर्यं प्रापयन्तः । ऊरुवेगेन पादातं पत्तिसमूहं । 'पादातं पत्तिसंहतिः' इत्यमरः । उत्सारयन्तः निस्सारयन्तः । परिघानामायुधविशेषाणां आघातैस्ताडनैः । 'परिघः परिघातनः' इत्यमरः । रथान् परिचूर्णयन्तः शकलयन्तः । चूर्णशब्दात्तत्करोतीति णिजन्ताल्लटश्शत्रादेशः । कराणां ताळिकाभिः ताडनैः हयान्विद्रावयन्तः निष्कासयन्तः । अङ्गुळीभिः यन्त्रणेन पीडनेन ग्रहणेन वा । अथवा अङ्गुळीनां यन्त्रणेन स्फोटेन मतङ्गजान् विघूर्णयन्तः भ्रामयन्तः । संवर्ते प्रळये यो मारुतः तेनावर्तितः भ्रामितः यस्सागरे आवर्तः तद्वद्दुर्दर्शे वक्त्रविवरे वदनबिले उल्लसन्ती लेलिह्याना सृक्कलेहनं कुर्वाणा या निजरसना । यद्वा लेलिहानस्सर्पः तत्सदृशी रसना जिह्वा । 'लेलिहानो द्विरसनो व्याळः कुम्भीनस' इत्यमरः । तदवलोकनाज्जनितेन साध्वसेन ध्वस्ताः नष्टाः चेतनाः प्राणिनो यस्य सः । 'प्राणी तु चेतनो जन्मी' इत्यमरः । सेनामुखे निविष्टं अन्तकं यमं । 'वैवस्वतोऽन्तक' इत्यमरः । तदीयममोघं कालदण्डमपहृत्य कराद्धृत्वा तेन दण्डेनैव तमभिहत्य आदिमं प्राथमिकं जयं आपेदिरे प्रापुः । आङ्पूर्वात्पदेः कर्तरि लिट् । इन्द्रनिग्रहकारिमुनौ पाशुपते स्वानुग्राहके सति दानवाः कथं

कालदण्डहतस्यास्य कण्ठे प्राणा जुघूर्णिरे ।
अन्तकं यद्धतं नेतुं अन्तकोऽन्यो न विद्यते ॥ ३५ ॥

पार्श्वतस्तस्य परे केचिदतिचिरोपरोधसंवर्धितप्रतिघानलव्यतिकरविशेषभीषणज्वालाकलापदुरापमपि परिवृत्य जातवेदसं, प्रशमय्य परुषहुङ्कारभयङ्करैर्मुखमारुतैरस्य दुस्सहं ज्योतिः, अपकृष्य वाहनं मेषमग्रचरणग्राहं, आहृत्य शक्तिमपि बलादस्य हस्ततलात्, 'अरे रे लब्धोऽयमन्नहरः क्रतुभुजां हव्यवाहो नाम निर्जरापशदः, तदद्य निर्वापयतैनमुदकुम्भैः, निक्षिपतैनमापूपिकानां वशे महानसेषु, मैवं मैवमुद्बोधयतैनमुचितैर्मुखमारुतैः, हस्ते कुरुत चैनमद्यैव दग्धुममरा-

जयं न प्राप्नुयुरिति भावः । तत्र मृत्युरपि मरणवेदनामापेत्याह ॥ **कालेति** ॥ यद्यतः हतं ताडितं अन्तकं नेतुं मृतानां स्थानं प्रापयितुं अन्यः स्वव्यतिरिक्तोऽन्तकः न विद्यते ततः कालदण्डहतस्य अस्यान्तकस्य कण्ठे प्राणा जुघूर्णिरे बभ्रमुरित्यर्थः । घूर्ण भ्रमणे अस्मात्परोक्षे कर्तरि लिट् । स्वस्य प्राणे स्वेनैव हृते आत्महत्या स्यादिति भयात् स्वप्राणहर्तुरन्तकान्तरस्याभावादन्तकोऽपि सङ्कटमापेति भावः । अग्निरप्यतीव पीडामापेत्याह ॥ **पार्श्वेति** ॥ तस्य सेनामुखस्य पार्श्वतः पार्श्वे । सार्वविभक्तिकस्तसिः । परे यमपीडाकरेभ्यः अन्ये केचिदसुरभटाः अतिचिरं उपरोधः तारकादिप्राचीनासुरकृतः महानसे निरोधः । अयमर्थश्शङ्करसंहितायां प्रसिद्धः । तेन संवर्धितः वृद्धिं प्रापितः प्रतिघ एव रोष एव अनलः । 'प्रतिघा रुट्क्रुधौ स्त्रियां' इत्यमरः । तस्य व्यतिकरेण सम्बन्धेन विशेषभीषणो यो ज्वालाकलापस्सङ्घः तेन दुरापं दुर्ग्रहमपि जातवेदसं परिवृत्य आवृत्य अस्य अग्नेः दुस्सहं ज्योतिस्तेजः रोषेण ये हुङ्काराः तैर्भयङ्करैः मुखमारुतैः प्रशमय्य शान्तिं प्रापय्य अस्याग्नेर्वाहनं मेषं अग्रचरणग्राहं अग्रे चरणयोर्गृहीत्वा अस्याग्नेर्हस्ततलाच्छक्तिमायुधं बलादपहृत्य । अरे अन्नहरः अन्नहर्ता हव्यं हुतं वहतीति हव्यवाहः इति नाम प्रसिद्धः निर्जराणामपशदः नीचः । 'निहीनोऽपशदो जाल्मः' इत्यमरः । लब्धः गृहीतः । ततः अद्य एनमग्निमुदकुम्भैर्निर्वापयत शमयत महानसेषु पाकगृहेषु । 'समानौ रसवत्यां तु पाकस्थानं महानसं' इत्यमरः । आपूपिकानां भक्ष्यकारिणां । 'आपूपिकः कान्दविको भक्ष्यकार इमे त्रिषु' इत्यमरः । वशे कामे विषये । वश कान्ताविति धातोः पचादित्वादच्प्रत्ययः । एनमग्निं निक्षिपत निवेशयत । मैवं मैवं एवं न कार्यमित्यर्थः । उचितैः प्रज्वलनानुकूलैः मुखमारुतैरेनमग्निमुद्बोधयत प्रज्वलयत अमरावतीमद्यैव दग्धुमेनमग्निं हस्ते कु-

**वर्ती, परित्यजत रे रे बालिशा बाडबोऽयं शिखां प्रदर्शय-ति' इति परिहसन्तः, परिक्षिपन्तः, तर्जयन्तः, ताडयन्तश्च प-लाययामासुरसुरभटाः । ततस्समित्याहितमसुरभटैस्तदत्याहित-मालक्ष्य सख्युराशुशुक्षणेः, क्षणेन सन्नीभूय भूयसा वेगेन सव्यापसव्यानि संचरन्मण्डलानि, चण्डलाघवोत्क्षिप्ततरुकाण्ड-षण्डमाहिण्डमानोपलखण्डताण्डवोद्दण्डं, अतिसम्भ्रमभ्रमितपांसु-मांसलतृणपूलसङ्गसङ्गतकङ्कगृध्रवायसादिविहङ्गमं, अतिविश-ङ्कटशङ्करशिरोघटितविकटजटाजूटसङ्कटभ्रमदभ्रसरिज्जलनिर्झर-**

रत । रे रे बालिशा' मूर्खाः 'हीनसम्बोधने तु रे' इत्यमरः । 'अज्ञे मूढयथाजा-तमूर्खवैधेयबालिशाः' इति च । अयमेष बाडबः ब्राह्मणः बडबासम्बन्धी च । 'द्विजात्यग्रजन्मभूदेवबाडबाः' इत्यमरः । शिखां चूडां अर्चिश्च प्रदर्शयति परि-त्यजत विसर्जयत इति परिहसन्तः श्लेषभङ्ग्या परिहासं कुर्वन्तः परिक्षिपन्तः आस्कन्दयन्तः तर्जयन्तः भर्त्सयन्तः ताडयन्तः प्रहरन्तश्चासुरभटाः एनमग्निं प-लाययामासुः प्रधावयामासुरित्यर्थः । परेत्युपसर्गात्परस्य गत्यर्थायधातोर्हेतुम-ण्णिजन्तस्य यो रेफः तस्योपसर्गस्यायताविति लत्वे रूपं । शत्रुकरगृहीतः को वा पीडां न प्राप्नुयादिति भावः । स्वमित्रस्याग्नेरसुरकृतां पीडामसहमानो वा-युः स्वमित्रपराभविनस्तानसुरान् बाधितुं प्रळयोचितं रूपमादाय ववावित्याह ॥ **तत इति** ॥ ततस्समिति युद्धे । 'समवायः स्त्रियां संयत्समित्याजिसमिद्युधः' इत्यमरः । असुरभटैराहितं अनुष्ठितं कृतमिति यावत् । सख्युः आशुशुक्षणेरग्नेः । 'शिखावानाशुशुक्षणिः' इत्यमरः । अत्याहितं भयमालक्ष्य 'अत्याहित महाभी-तिः' इत्यमरः । क्षणेन क्षणात् विभक्तिप्रतिरूपकमव्ययम् । अधिकेन वेगेन स-न्नीभूय सन्नद्धो भूत्वा सव्यापसव्यानि दक्षिणोत्तराणि मण्डलानि वलयान् सञ्च-रन् चण्डमतिदुस्सहं लाघवं शैघ्र्यं यस्मिन् कर्मणि तत्तथा चण्डलाघवं यथा तथा उ-त्क्षिप्तः ऊर्ध्वदेशं प्रापितः तरूणां काण्डानां स्कन्धापरपर्यायप्रकाण्डानां षण्डं सङ्घो यस्मिन् कर्मणि तत्तथा । आहिण्डमानाः आङ्पूर्वकस्य हिडि गताविति धातोः क-र्तरि लटश्शानच् । बलमानाः सञ्चरणस्वभावाः ये उपलाः तत्खण्डानां शकलानां ताण्डवेन नर्तनेन उद्दण्डं दुस्सहं यथा तथा । अतिसम्भ्रमेण त्वरया भ्रामितानि विघूर्णितानि यानि पांसुभिर्मांसलानि तृणानां पूलानि रज्जुसंवेष्टितपुञ्जानि । पाठान्तरे तृणानि पर्णानि च अथवा तृणानि पूलानि कार्पासवस्त्राणि च । 'पूलं सरोपकरणे कार्पासवसनेऽप्यथ' इति नानार्थमाला । तेषां सङ्गेन सङ्गताः कङ्कगृध्रवा-यसादयः विहङ्गमाः यस्मिन् कर्मणि तत्तथा । अतिविशङ्कटं अतिपृथु 'विशङ्कटं पृथु

झळझळघोषभीषणझङ्कारमुखरितनभोविभागं, आलम्ब्य युगविगमोचितं रूपं, आपतन्नसुरबले, विघूर्णयन् जीर्णपर्णमिव दिक्षु विदिक्षु चाश्वीयं, अवचूर्णयन् रथषण्डमारण्यमिव तरुकाण्डं, अवकिरन्नुपलखण्डानिव मदोच्चण्डानपि वेतण्डान्, अन्धीकुर्वन् पदातिजातं, अवरुन्धन् सेनापतीन्, परावर्तयन्नस्त्रशस्त्राणि, प्रभञ्जयन्नञ्जसैव जयध्वजान्, परिस्खलयन्महासुरानपि, संवर्त इव मारुतः समरसीमनि सर्वतोऽप्यक्रमेण पराचक्रमे। यावदित्थमस्पन्दत गन्धवाहः, तावदावर्तितलोचनो विरोचनः, प्र-

---

बृहत्' इत्यमरः। शङ्करशिरसि घटितं प्रथितं विकटं अमृदुलं यज्जटाजूटं जटावलयं तस्मिन् सङ्कटेन सम्बाधेन भ्रमन्ति यानि अभ्रसरिज्जलानि देवगङ्गोदकानि तेषां निर्झरः प्रवाहः तस्य झळझळेति यो घोषः ध्वनिः तद्वद्भीषणेन झङ्कारेण मुखरितः शब्दितः नभसो विभागो यस्मिन् कर्मणि तत्तथा। युगविगमस्य युगात्ययस्य उचितमनुरूपं रूपं स्वभावः। 'रूपं स्वभावे सद्वृत्तौ' इत्यमरः। आलम्ब्य आश्रित्य। आपन्नं विपदं प्राप्तं। 'आपन्न आपत्प्राप्तस्स्यात्' इत्यमरः। यत्सुराणां बलं तस्मिन्। अश्वीयं अश्वसमूहं। 'बृन्दे त्वश्वीयमाश्ववत्' इत्यमरः। जीर्णपर्णमिव जरच्छुष्कपत्रमिव दिक्षु विदिक्षु दिङ्मध्येषु। 'दिशोर्मध्ये विदिक् स्त्रियां' इत्यमरः। विघूर्णयन् भ्रामयन्। आरण्यकमरण्ये भवं। अरण्याद्वुञिति वुञ्प्रत्ययः। तरुकाण्डानां प्रकाण्डानां षण्डं सङ्घमिव रथानां षण्डं सङ्घं। 'षण्डं क्लीबे समूहे च' इति विश्वः। विघूर्णयन् भ्रामयन्। मदोद्दण्डान् मदोत्कटान् वेतण्डान् गजान् उपलानां प्रस्तराणां खण्डानिव शकलानीव अवकिरन्विक्षिपन्। कॄ विक्षेप इत्यस्माद्धातोर्लटश्शत्रादेशः उगिदचामिति नुम् पदातीनां जातं सङ्घं। अन्धीकुर्वन् अन्धं कुर्वन्। सेनापतीन् सेनाध्यक्षान् परावर्तयन् निवर्तयन्। अस्त्राणि च शस्त्राणि आयुधानि। 'आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियां' इत्यमरः। अञ्जसा झडित्येव। 'द्राग्झडित्यञ्जसाह्नाय' इत्यमरः। जयध्वजांश्च प्रभञ्जयन् भग्नान् कुर्वन्। महासुरानपि परिस्खलयन् पातयन्। संवर्त इव प्रळय इव। 'संवर्तः प्रळयः कल्पक्षय' इत्यमरः। समरसीमनि युद्धाङ्गणे सर्वतः परितोऽपि। अक्रमेण क्रमं विहायेति तात्पर्यार्थः। पराचक्रमे सञ्चचारेत्यर्थः। पराक्रमं चकारेति वा। परापूर्वात्क्रमतेः कर्तरि परोक्षे लिट्। यस्मिन् सति सर्वोऽपि जन्तुस्सञ्चरितुं समर्थो भवति स्वसञ्चारे तस्य सामर्थ्यं किंयदिति वक्तव्यमिति भावः। एवं समरोद्योगिनमालोक्य वायुमसुरा जहसुरित्याशयेनाह ॥ **यावदिति** ॥ गन्धवहः पवनः यावदित्थं अस्पन्दत पर्यचेष्टत

कटितसमराडम्बरश्शम्बरः, सावष्टम्भो जम्भः, समरमदोल्बणो बाणः, संग्रामैकरुचिर्नमुचिः, अतिबली च बलिः, आलक्ष्य वक्त्राणि परस्परं, ईषदिव स्मयमानाः, विस्मयमानाः पराक्रमे विबुधानामिदमूचिरे । हन्त कथममरा अपि पराक्रमन्ते, तेषु च दूत्योचितसंचारमन्थरश्श्वा मातरिश्वा ।

संरुन्धते निभृतमन्तरपि द्विजा यं
अन्नं यमाहुरपि कीटसरीसृपाणाम् ।
यो जायते शिथिलशूर्पपरिभ्रमैर-
प्योजायते कथमसावपि गन्धवाहः ॥ ३६ ॥

---

तावदावर्तितानि सर्वतो विन्यस्तानि घूर्णितानि वा लोचनानि येन सः । विरोचनः असुरः सङ्ग्रामे एका मुख्या रुचिर्यस्य सः नमुचिः । यद्वा सङ्ग्रामे एकस्मिन् रुचिरभिरतिर्यस्य स तथाभूतः असुरः नमुचिः । प्रकटितः आडम्बरः बृंहितं तूर्यरवो वा यस्य स तथोक्तः । 'आडम्बरस्तूर्यरवे गजेन्द्राणाञ्च गर्जित' इत्यमरः । शम्बरः असुरसेनाध्यक्षः । सावष्टम्भः सगर्वः । 'दर्पोऽवलेपोऽवष्टम्भ' इति विश्वः । जम्भः जम्भासुरः । मदेन उल्बणः स्फुटः प्रसिद्ध इति यावत् । 'स्फुटं प्रव्यक्तमुल्बणं' इत्यमरः । अतिबली बलिश्च परस्परं वक्त्राणि आलक्ष्य ईषदल्पं स्मयमानाः स्मितं कुर्वाणा इव विबुधानां वाय्वादीनां पराक्रमैर्विस्मयमानाः आश्चर्यं प्राप्नुवन्तस्सन्तः इदं वक्ष्यमाणमूचिरे जगदुः । वच परिभाषण इति धातोः कर्तरि लिट् । वचिस्वपीत्यादिना सम्प्रसारणं । शापग्रस्तस्यामी भृत्या अपि सुराः पराक्रमन्ते चेत्कस्य वा न विस्मय इति भावः ॥ **हन्तेति** ॥ हन्तेत्याश्चर्ये । अमरा अपि पराक्रमन्ते पराक्रमं कुर्वन्ति । उपपराभ्यामिति क्रमेरात्मनेपदम् । तेष्वमरेषु मातरिश्वा च वायुस्तु दूतस्य भावो दौत्यम् । दूतस्य भावकर्मणोरिति यत्प्रत्ययः । 'स्यात्सन्देशहरो दूतो दौत्यं तद्भावकर्मणोः' इत्यमरः । तस्य उचितः अनुरूपः यस्सञ्चारः तेन मन्थरः मांसलः श्वा पराक्रमत इति विपरिणामेनान्वयः । अत एव सर्वतो गच्छन् प्रहियत इति भावः । सामान्यतस्सुरेषु प्रागुक्तं पामरत्वं वायौ द्रढयितुं तस्य जनिलयप्रकारमाह ॥ **संरुन्धत इति** ॥ द्विजा अपि अन्तः हृदये निभृतं निश्चलं यथा तथा । यं वायुं संरुन्धते निबध्नन्ति प्राणायामादिनेति भावः । कीटानां क्रिमीणाम् । 'क्रिमयः कीटा' इति हलायुधः । सरीसृपाणां सर्पाणामपि । 'चक्री व्याळस्सरीसृप' इत्यमरः । यमन्नमाहुः ब्रुवन्ति । ब्रुवः पञ्चानामादित आहो ब्रुव इति ब्रूतेराहादेशः । यः गन्धवाहः । 'गन्धवाहानिलाशुगा' इत्यमरः । शिथिलानि यानि जीर्णानि

अथवा नैतावदस्मिन्नभिनिवेष्टव्यमस्माभिः, अनुकूल एव खल्वयमस्माकमाशुगानलज्वालासन्धुक्षणे सर्वथापि ।

यश्चेष्टतेऽवकाशेषु ये चाप्येनं समाश्रिताः ।
निरुन्धीमहि तान् सर्वान्नीरन्ध्रे शरपञ्जरे ॥ ३७ ॥

इति कतिपये दैत्या वात्यानिबर्हणकौतुकात्
धनुरनुगुणं यावज्ज्यावल्लिभिस्सह युञ्जते ।
प्रसभमभितस्तावत्सावज्ञदैत्यभटोज्झिता
दिशि दिशि जगत्प्राणप्राणच्छिदो न्यपतन् शराः ॥ ३८ ॥

---

शूर्पाणि प्रस्फोटनानि वेणुनिर्मिता नीरन्ध्राः कटविशेषा इत्यर्थः । 'प्रस्फोटनं शूर्पमस्त्री' इत्यमरः । तेषां परिभ्रमैः वीजनैः यो जायते असावपि वायुः कथं ओजायते ओजस्वीवाचरति । आयुधमात्ररहिताद्द्विजनियम्यस्य उपायमात्रानभिज्ञसर्पकीटादिग्रासयोग्यस्यापि वायोः पराक्रमे को वा चित्रं नाप्नुयादिति भावः । अस्मदनुकूले वायौ आग्रहो न कार्य इत्याशयेनाह ॥ अथवेति ॥ अथवा एतस्मिन्मरुति अस्माभिरेतावन्नाभिनिवेष्टव्यं आग्रहो न कार्यः अयमस्माकं सर्वथापि सर्वप्रकारैरपि । आशुगेषु शरेषु । 'आशुगौ वायुविशिखौ' इत्यमरः । अनलज्वालानां सन्धुक्षणे संयोजने अनुकूलः प्रयोजकः खलु । सङ्गी नावसीदतीति शास्त्रादिति भावः । सदागमनशीलस्य वायोर्निरोधः क्रियत इत्याह ॥ यश्चेति ॥ अवकाशेषु अनावृतप्रदेशेषु छिद्रेषु वा यः पवनश्चेष्टते वाति । ये च वा एनं वायुं समाश्रितास्सन्तो वर्तन्त इति शेषः । नीरन्ध्रे निरवकाशे छिद्ररहित इति यावत् । शरपञ्जरे तान् सर्वानपि निरुन्धीमहि निरोधं कुर्मः । निपूर्वाद्रुन्धतेर्लिङ् । उपायविदामस्माकं कस्य वा निग्रहो न सुकर इति भावः । एतस्मिन्नवसरे केचन क्षुद्रदैत्याः वायुं बबाधिर इत्याह ॥ इतीति ॥ इतीत्थं कतिपये केचन दैत्याः दितिपुत्राः । दित्यदित्यादित्यपत्युत्तरपदाण्ण्य इति ण्यप्रत्ययः । वातानां समूहो वात्या । पाशादिभ्यो य इति यप्रत्ययः । 'वात्या वातसमूहे स्याद्धूम्या स्याद्धूमसंहतौ' इत्यमरसुधायां । तस्या निबर्हणे निग्रहे कौतुकात् कुतूहलात् । 'कौतूहलं कौतुकञ्च कुतुकं च कुतूहलं' इत्यमरः । ज्यावल्लिभिः ज्याः मौर्व्यः वल्ल्यः लता इवेति उपमितं व्याघ्रादिभिरिति समासः । 'मौर्वी ज्या शिञ्जिनी गुणः' 'वल्ली तु व्रततिर्लता' इति चामरः । ताभिस्सह धनुः अनुगतः गुणः शब्दः यस्मिन् कर्मणि तत्तथा । 'गुणस्त्वावृत्तिशब्दादौ' इति विश्वः । यावद्युञ्जते घटयन्ते तावद्दिशि दिशि प्रतिदिशं अभितः परितः प्रसभं बलात्कारं जगत्प्राणस्य समीरणस्य प्राणान् भिन्दन्तीति तथा । भिदिर्विदारण इति धातोः

वाय्वर्कशक्रवरुणानलदैवतान्य-
प्यस्त्राणि निर्जरवरैरभिमन्त्रितानि ।
ईशांबभूवुरसुरेषु न शासनानि
राज्यच्युतस्य नृपतेरिव नागरेषु ॥ ३९ ॥
दनुजभुजविकृष्टकोदण्डदण्डोपसम्पातुक-
ज्वलदनलदुरापनाराचधारासमीराहताः ।
युगविगमसमुच्चलच्चण्डचण्डीशभूषोरग-
प्रतिभयमुखवातजातां दशामुज्जगुर्निर्जराः ॥ ४० ॥

---

क्विप् । सावज्ञं सहेळनं यथा तथा । 'अवज्ञावहेळनमसूर्क्षणं' इत्यमरः । दैत्यानां भटैरुज्झिताः उन्मुक्ताः शरा न्यपतन् निपेतुः । निपूर्वात्पतॢ गताविति धातोर्लङ् । को वा बली समीपवर्तिनं रिपुं न प्रहरेदिति भावः । भ्रष्टराज्यस्य नृपस्य प्रजासु शासनमिव सुरविनिर्मुक्तास्त्रादिकमसुरेषु वृथा समजनीत्याह ॥ वाय्विति ॥ वाय्वर्कशक्रवरुणानलाः दैवतानि अभिमानिदेवता येषां तानि । द्वन्द्वान्ते श्रुतो दैवतशब्दः द्वन्द्वावयवैर्वाय्वादिभिस्सम्बध्यते । तथाच वायुदैवतानीत्यर्थलाभः । तान्यपि निर्जरवरैः सुरश्रेष्ठैरभिमन्त्रितानि लक्षणया अभिमन्त्र्य विनिर्मुक्तानीत्यर्थः । अस्त्राणि असुरेषु राज्यात् प्राभवात् च्युतस्य भ्रष्टस्य नृपतेश्शासनानि आज्ञाश्शिक्षा वा नागरेषु पौरेष्विव नेशाम्बभूवुः समर्थानि न बभूवुरित्यर्थः । ईश ऐश्वर्य इति धातोरिजादेश्च गुरुमतोऽनृच्छ इत्याम् । ततः कृञ्चानुप्रयुज्यते लिटीति भूधातोरनुप्रयोगः । ततः कर्तरि लिट् । यद्देवाभिमानादस्त्राणां परपीडाकरत्वं स्यात्ते देवा एव पराभूताश्चेत्कुतस्तरां तद्दैवतकास्त्राणां परपराभवसामर्थ्यमिति भावः । प्रळयकालिकमृत्युभयादपि तात्कालिकमसुरेभ्यो भयं सुराणां दुस्सहमित्याशयेनाह ॥ तदन्विति ॥ तदनु दनुजानामसुराणां भुजैः पाणिभिः । भुजन्युब्जापाण्युपतापयोरिति सूत्राद्भुजशब्दस्य पाणिपरत्वं साधुत्वं च बोध्यम् । विकृष्टाः आकृष्टाः ये कोदण्डदण्डाः धनुर्दण्डाः । 'धनुश्चापो धन्वशरासनकोदण्डकार्मुकं' इत्यमरः । तेभ्य उपसम्पातुकाः समीपं प्रत्यागच्छन्तः । लषपतेत्यादिना उकञ्प्रत्ययः । ये ज्वलतः अनलस्य ज्वालाभिर्दुरापाः दुष्प्रापाः । ईषद्दुस्सुष्वित्यादिना आप्नोतेः खल्प्रत्ययः । नाराचाः सपक्षबाणाः । 'प्रक्ष्वेडनास्तु नाराचा' इत्यमरः । तेषां धारायाः परम्परायाः समीरेणाहताः प्रहृताः निर्जराः अमराः युगस्य विगमोऽवसानं प्रळय इति यावत् । तस्मिन् समुच्चलतः नर्तनं कुर्वतः । चण्डस्य अतिकोपनस्य । 'चण्डस्त्वत्यन्तकोपन' इत्यमरः । चण्डीशस्य चण्डीपतेः । चण्डीस्वरूपमुक्तं वासिष्ठरामायणे । 'चण्डी चतुरसञ्चारा सर्वमातृगणावृता । संसारवनविन्यस्ता व्याघ्री भूतौघघातिनी ॥' इति । चण्डीशस्वरूपं

**प्रचण्डे च वलति पवमाने, तूलवदुत्सार्यमाणेषु दूरत एव वारिधरेषु, सागरानपि शोषयतस्तस्य सनीडमागन्तुमनीहमानेषु च यादोगणेषु, स्वात्मैकशेषतया भग्नचेताः प्रचेताः, प्राकृतलोकसाधारणस्तटस्थ एव बहिरवतस्थे। अपिच रिपुचमूसमूहसमुत्सृज्यमानशरवर्षधर्षितेषु वर्मसु, भिद्यमानेषु चर्मसु, कर्मदेवाः 'कस्मादयमस्माकमाकस्मिको बुद्धिविपर्ययः,**

---

तत्रैव। 'अलाबुवीणामधुरः क्वणन्व्योमामलच्छविः। देवः किल महाकालो लीलाकोकिलबालकः॥' नर्तनोपयोगि तदाभरणं च तत्रैव: 'यस्या भूषणभङ्गेषु देवलोकान्तरावलिः। नरकाळी च मञ्जीरमाला कलकलोज्ज्वला॥ एकस्मिन् श्रवणे दीर्घा हिमवानस्थिमुद्रिका। अपरोऽपि महामेरुः कान्ता काञ्चनकर्णिका॥' इत्यादि। लिखितादवशिष्टं तत्रैव ज्ञेयम्। अत्र तु ग्रन्थविस्तरभयान्न लिख्यते। भूषाभूतस्योरगस्य सम्बन्धी प्रतिभयः भयङ्करः। 'भयङ्करं प्रतिभयं' इत्यमरः। यो मुखवायुः निश्वासपवनः तस्माज्जातामुत्पन्नां दशामवस्थामुज्जगुः शश्लाघिरे। उत्पूर्वात् गै शब्द इति धातोर्लिट्। बर्ह्णा तात्कालिकीं पीडामनुभवन् को वा जनः तदल्पां पीडां न बहुमनुत इति भावः। तदानीं वरुणस्य स्वभृत्या अपि समीपवर्तिनो न बभूवुरित्याह ॥ **तत इति** ॥ ततः प्रचण्डे दुस्सहे पवमाने वलति वाति सति वारिदेषु मेघेषु तूलवत् तूलेन कार्पासेन तुल्यम्। तेन तुल्यमित्यादिना वतिप्रत्ययः। निस्सार्यमाणेषु निरस्तेषु सत्सु। सागरानपि शोषयतस्तस्य पवनस्य वेगेन यादसां जलजन्तूनां गणेषु। 'यादांसि जलजन्तवः' इत्यमरः। सनीडं समीपं प्रति। 'सन्निकृष्टसनीडवत्' इत्यमरः। आगन्तुमायातुं आप्तुं वा अनीहमानेष्वसमर्थेषु सत्सु स्वस्य आत्मना एकेन शरीरमात्रेणेत्यर्थः। 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इत्यमरः। शेषतया शिष्टतया भग्नं दुःखितं चेतो यस्य स तथाभूतः। अत एव प्राकृतलोकः पामरजनः। 'विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः' इत्यमरः। 'लोकस्तु भुवने जन' इति च। तेन साधारणस्समानः। 'साधारणस्समानेऽपि' इत्यमरः। प्रचेताः वरुणः तटस्थः उदासीनः। 'उदासीनस्तटस्थस्स्यात्' इत्यमराधिकपाठः। बहिरेव। नासीरादिति शेषः। अवतस्थे तस्थौ। अवपूर्वात् तिष्ठतेर्लिट्। समवप्रविभ्यः स्थः इत्यात्मनेपदम्। को वा स्वशक्तिमुल्लङ्घ्य यतेतेति भावः। कर्मदेवास्तदानीं नासीरमपहाय प्रगता इत्याह ॥ **अपि चेति** ॥ वर्मसु कवचेषु। 'तनुत्रं वर्म दंशनं' इत्यमरः। रिपूणां चम्वस्सेनाः तासां समूहैस्समुत्सृज्यमानैश्शरैः धर्षितेषु छिन्नेषु सत्सु। मर्मसु सन्धिस्थानेषु। 'सन्धिस्थानानि मर्माणि मुखमूलं च कन्दकं' इति बाहटः। भिद्यमानेषु विदार्यमाणेषु सत्सु। कर्मणा देवाः यागादिभिस्तपोभिः प्राप्तदेवत्वा

**कस्मै वयमसुरैर्युध्यामहे, कस्य हेतोर्वध्यामहे, बुध्यामहे न हेतुमस्मिन्नायासे, के नो देवाः, के च नो दानवाः, सम्भृत्य तपांसि दुश्चराणि सम्प्राप्ता वयममरपदं, केन शक्या निग्रहीतुं, केन शक्या अनुग्रहीतुं, अधिष्ठास्यति यस्स्वर्गं, अतिथयस्तस्य वयं भवाम' इति कृतनिश्चयास्सम्मन्त्र्य परस्परं सङ्घशोऽपचक्रमुस्समन्ततोऽपि समरमुखात् । अथ ये**

---

इत्यर्थः । देवा द्विविधाः । आजानदेवाः कर्मदेवा इति । तत्राजानदेवा गवादिसृष्टेः प्रागेव ब्रह्मणा सृष्टा देवाः । 'ता एव देवतास्सृष्टा' इति श्रुतेः । 'आजानदेवास्ते प्रोक्ताः कल्पादौ ये स्वयम्भुवा । सृष्टास्सूर्यादयो देवा मुक्तकलाधिकारिणः ॥' इति वचनाच्च । आजानदेवानामधिकारसमाप्तौ मुक्तिरेव । मनुष्यलोकप्रवेशो नास्तीति यावदधिकारपरिसमाप्तिस्तावदाधिकारिकाणामित्यधिकरणे तत्सूत्रव्याख्यातृभिस्स्पष्टमुक्तम् । यजेत स्वर्गकाम इति श्रुत्या यज्वनां स्वर्गप्राप्तेरभिधानाद्यथाविध्यनुष्ठितकर्मभिः ये ब्राह्मणाः क्षत्रिया वा देवभूयं गताः ते कर्मदेवाः एषां मनुष्यलोकप्रवेशोऽस्त्येव । 'यावत्सम्पातमुषित्वा पुनरावर्तते' इति श्रुतेः । 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति स्मृतेश्चेति विवेकः । अस्माकमयं बुद्धेः विपर्ययो भ्रंशः कस्मात्कुतः आकस्मिकः अज्ञातहेतुकः वयं कस्मै प्रयोजनायेत्यस्य गम्यमानत्वादप्रयोगः । असुरैस्समं युध्यामहे युद्धं कुर्महे यद्वा असुरैर्युध्यामहे ताड्यामहे । कस्य हेतोः किन्निमित्तम् । अन्नस्य हेतोर्वसतीतिवत् षष्ठी । वयं बध्यामहे । पाशादिभिरिति शेषः । आयासे प्रयत्नसाध्ये अस्मिन् कर्मणि हेतुं न बुध्यामहे न जानीमहे । के नः देवा दानवाश्च के । दुश्चराणि कृच्छ्रसाध्यानि तपांसि चान्द्रायणादीनि संभृत्य अनुष्ठाय अमराणां पदं स्थानं । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । प्राप्ताः वयं केन निग्रहीतुं शक्याः केन वा अनुग्रहीतुं शक्याः । देवो दानवो वा यः स्वर्गमधिष्ठास्यति स्वर्गे स्थास्यतीत्यर्थः । अधिशीङ्स्थासां कर्मेत्यधिपूर्वस्य तिष्ठतेराधारस्य कर्मत्वं कर्मणि द्वितीयेति द्वितीया । तस्य वयमतिथयो भवामः । अतिथिलक्षणं तूक्तं धर्मशास्त्रे । 'सम्प्राप्तो वैश्वदेवान्ते सोऽतिथिस्स्वर्गसङ्क्रमः' इति । इति परस्परमन्योन्यं सम्मन्त्र्य आलोच्य । कृतनिश्चयाः कृतः निश्चयः निष्कर्षः व्यवस्था वा यैस्तथाविधास्सन्तः । सङ्घशः सङ्घीभूय । बह्वल्पार्थेत्यादिना शस्प्रत्ययः । समरस्य मुखात् । ल्यब्लोपे कर्मण्यधिकरणे चेति पञ्चमी । युद्धमुखभागं विहायेत्यर्थः । अपचक्रमुः प्रतस्थिरे । समन्ततः अन्यतरजयेनापीष्टसिद्धौ सत्यां को वा समरमुखं गत्वा प्राणान् त्यजतीति भावः । आहवमरणाद्देवभूयं गतानामसुराणामसुरदेवानां व्यापारमाह ॥ **अथेति** ॥ ये दनुजवीराः । आहवः युद्धमेव

केचिदाहवमखे हुतशरीरा दनुजवीरा देवभावमापद्य दिवमारूढा गूढाभिसन्धयस्ते किल सहृदया इव कञ्चित्कालमहृदया एव परिक्रम्य, परिज्ञातमर्माणः सर्वतो निर्वापयामासुरतर्किता एव गीर्वाणबलम्। अपसरतः कर्मदेवान्, अभिघ्नतो दैत्यदेवान्, आपततश्शरानाशीविषानिव दृष्टिविषान्, उत्सर्पतो विशृङ्खलमसुरभटानुल्लङ्घितवेलानिव कल्लोलान्महोदधेः, अप्रभवतः सेनापतीन्, अप्रतिपत्तिमूढमपि पश्यन्तः स्वामिनं, अपश्यन्तस्त्रातारं, अवशा देवमुनिशापतेजसा प्रविश्य हृदयानि प्रक्षोभ्यमाणाः, स्तब्धा इव, मुग्धा इव,

---

मखो यागः। 'सप्ततन्तुर्मखः क्रतुः' इत्यमरः। तस्मिन् हुतं प्रक्षिप्तं शरीरं यैस्ते त्यक्तशरीरा इति यावत्। देवभावं देवत्वमापद्य दिवं स्वर्गमारूढाः प्राप्ताः वर्तन्त इति शेषः। ते किल केचिद्दैत्यदेवाः अप्रशस्तं हृदयं येषां ते अहृदयाः। शाकपार्थिवादित्वात्समासः। अत एव निगूढः निगूहितः। अभितः अभिसन्धिः देवनिग्रहाभिप्रायो यैस्तथाभूतास्सन्तोऽपि। एवकारोऽप्यर्थः। 'अभिसन्धिरभिप्रायकामयोः' इति विश्वः। कञ्चित्कालं कञ्चित्काले। 'कालाध्वनोरत्यन्तसंयोग' इति द्वितीया। सहृदयाः हृदयाळव इव सुहृद इवेति यावत्। 'हृदयालुस्सहृदयः' इत्यमरः। परिक्रम्य चारित्वा परिज्ञातानि मर्माणि रहस्यानि यैस्ते। 'मर्म गोप्यं रहस्यं च' इत्यमरसुधायां हेमचन्द्रः। अतर्किताः शत्रुतया असम्भाविता एव॰ अमरबलं निर्वापयमासुः शमयामासुः। रहस्यज्ञाः के वीराः शत्रून्न नाशयन्तीति भावः। सुरयोधास्तत्क्षणमविदितजयोपायास्सन्तः चित्रलिखिता इव तूष्णीमवस्थाय कञ्चित्कालं प्रतस्थिर इत्याह॥ अपेति॥ अपसरतः अपगच्छतः कर्मदेवानभिघ्नतः प्रहरतः दैत्यदेवान् दृष्टिषु विषं गरळं येषां तथाविधान् आशीविषान् सर्पानिव स्थितान्। 'आशीविषो विषधर' इत्यमरः। आपततः समीपं प्रत्यागच्छतः शरानुल्लङ्घिता उत्सृष्टा वेला मर्यादा अब्ध्यम्बुविकृतिर्वा यैस्तथाविधाः। 'अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि' इत्यमरः। अत एव विशृङ्खलं निर्निरोधं यथा तथा उत्सर्पतः उद्गच्छतः महोदधेः कल्लोलानिव स्थितान्। असुराणां ये भटास्तान् अप्रभवतः असमर्थान् सेनानां पतयो नायकाः तानविद्यमाना प्रतिपत्तिः प्रज्ञा यस्यास्तां मूर्च्छितामित्यर्थः। चमूं सेनामपि पश्यन्तः। त्रातारं रक्षकं स्वामिनमपश्यन्तः। सायुधाः आयुधैस्सहिताः सवाहनाः विबुधानां भटाः। अवशा इत्यादीनि विधेयभूतानि विशेषणानि। अवशाः अस्वतन्त्राः देवमुनेर्दुर्वाससश्शापेनैव तेजसा हृदयानि प्रविश्य प्रक्षोभ्यमाणाः क्षोभ्यमाणा इव स्थिताः स्तब्धा निश्चला इव। मुग्धा इव मूढा इव।

दग्धा इव विषानलैः, दिग्धा इव मोहनचूर्णैः, लुब्धाः परं जीवितेषु, लब्धामपि जयश्रियं चिरादीषद्विवेकसुनियन्त्रणेन क्षणिकदुर्मन्त्रणेन विनाशयन्तः, पश्यन्तोऽप्यचक्षुषः, शृण्वन्तोऽपि बधिराः, जानन्तोऽपि जडाः, परिगृहीता इव दुर्यशसा, परिष्वक्ता इव भाग्यविपर्ययेन, विस्मृत्य कुलशीलानि, विसृज्य निश्शेषमपत्रपां, अवरोप्य निषङ्गं, आवेशयन्तः पृष्ठतो बुद्धिं, अवमुच्य जयायुधानि, आददानाः भिक्षाकपालानि पाणिभिः, आसर्गादाचमहाप्रळयादध्वरहविर्भिरेव द्विजन्मनामविश्रान्तपरिपुष्टतयेव, प्राप्ते समरे सायुधाश्च, सवाहना-

'मुग्धस्सुन्दरमूढयोः' इति विश्वः। विषानलैर्दग्धा इव। मोहनं प्रज्ञाशैथिल्यसम्पादकं चूर्णं भस्म तेन दिग्धा इव उद्धूळिता इव जीवितेषु परं जीवनेष्वेव लुब्धाः आसक्ताः। 'लुब्धोऽभिलाषुकः' इत्यमरः। चिरात् ईषद्विवेकस्य सारासारकलनस्य सुनियन्त्रणेन सम्बन्धेन। 'नियन्त्रणं स्यात्सम्बन्धः' इति हेमः। लब्धां जयश्रियमपि क्षणिकेन तात्कालिकेन दुर्मन्त्रणं दुरालोचनं तेन विनाशयन्तः नाशं प्रापयन्तः। पश्यन्तोऽप्यचक्षुषः अविद्यमानचक्षुष्का इत्युक्ते विरोधः तत्परिहारस्तु चक्षुर्मुख्यकार्यतत्तद्व्यक्तितदीयरूपतद्वैजात्यविषयकचाक्षुषरहिता इत्यर्थाश्रयणेन बोध्यः। शृण्वन्तोऽपि बधिराः नष्टश्रोत्रेन्द्रिया इत्युक्ते विरोधः परिहारस्तु तत्तदीयशब्दवैजात्यविषयकश्रावणप्रत्यक्षरहिता इत्यर्थाश्रयणेन ज्ञेयः। जानन्तोऽपि ज्ञानाश्रया अपि जडाः ज्ञानानाश्रया इति विरोधः तत्परिहारस्तु प्राणित्वप्रयुक्तयत्किञ्चिज्ज्ञानाश्रया अपि परिचितसन्निहिततत्तद्विषयकविशेषज्ञानरहिता इत्यर्थाश्रयणेन बोध्यः। दुर्यशसा अकीर्त्या परिगृहीता इव भाग्यस्य विपर्ययः व्यत्ययः। एवं च अभाग्येनेत्यर्थः। परिष्वक्ताः संसक्ता इव। ष्वञ्ज परिष्वङ्गे इति धातोः कर्मणि क्तः। कुलं कश्यपस्य ब्रह्मणस्सन्ततिः तच्च शीलानि प्राक्तनासुरविजयचातुर्याणि च विस्मृत्य पर्यालोच्य निश्शेषं निरवशेषं अपत्रपां लज्जां विसृज्य निषङ्गं इषुधिं अवरोप्य उज्झित्वा। पृष्ठतः पृष्ठभागे। सार्वविभक्तिकस्तसिः। बुद्धिं आवेशयन्तः विनिवेशयन्त इत्यर्थः। पलायनेच्छयेति यावत्। जयसम्पादकानि आयुधानि प्रहरणानि। शाकपार्थिवादित्वात्समासः। अवमुच्य त्यक्त्वा भिक्षार्थं कपालानि मृतास्थिपात्राणि। 'स्यात्कर्परः कपालोऽस्त्री कीकसं कुल्यमस्थि च' इत्यमरः। आददानाः स्वीकुर्वाणाः आ च सर्गात्सृष्टिसमयमारभ्येत्यर्थः। आ च महाप्रळयात् महाप्रळयमवधीकृत्येत्यर्थः। द्विजन्मनामध्वरेषु यागेषु यानि हवींषि तैरेव अविश्रान्तं सन्ततं परिपुष्टानां भावः परिपुष्टता त-

श्च, सैकता इव सेतवः, सर्वतोऽपि विजघटिरे विबुधभटाः।

धावद्दैवतयोधयूथपदवीसंरोधकौतूहल-
क्रामड्डामरघोरवैरिपरिषन्नासीरसीमोद्भवैः।
भेरीभाङ्करणैरमर्त्यनगरीसंवर्तमौहूर्तिकैः
सम्भ्रान्ताः प्रतिपेदिरे युधि निवृत्ताशा दिगीशा दिशः॥
वल्मीकेष्वहयो वसन्ति मुनयो घोरास्समीराशनाः
कान्तारेषु च कन्दरेषु लवणे सिन्धौ क वातास्थितिः।

या स्थूलतयेवेत्यर्थः। सैकताः सिकतामयाः सेतव इव सर्वतः परितोऽपि विजघटिरे चस्खलुः। परश्शतभटसाध्ये कार्ये बहवो भयद्रुताश्चेदवशिष्टा भटाः उपायतः स्खलनमन्तरा किं करिष्यन्तीति भावः। अग्न्यादिदिक्पतयोऽपि भीताः सन्तो दिगन्तान् प्रति दधाविर इत्याह ॥ धावदिति ॥ धावन्तः पलायमानाः दैवतान्येव योधाः भटास्तेषां यूथानि सङ्घाः तेषां याः पदव्यः, तासां संरोधे निरोधे कौतूहलेन कौतुकेन। 'कौतूहलं कौतुकं च' इत्यमरः। क्रामन्तः प्रसरन्तः ये डमरा एव डामराः विप्लवाः। प्रज्ञादित्वात्स्वार्थेऽण्प्रत्ययः। उपद्रवा इत्यर्थः। यद्वा डामराः भयहेतुसिंहनादादयो ध्वनिविशेषा इत्यर्थः। 'मुष्टिबन्धस्तु सङ्ग्राहो डिम्बे डमरविप्लवौ' इत्यमरः। डिम्बशब्दार्थमाह रभसः 'भयध्वनौ पुल्कसेऽपि डिम्बः प्लीहनि विप्लवे' इति। डामरशब्दः अशस्त्रकलहस्य नामेति क्षीरस्वामी। 'ईतिस्स्यादतिवृष्ट्यादिषट्के डिम्बप्रवासयोः' इति भास्करः। एवं कौतूहलेन क्रामन्तः प्रसरन्तः ये डामराः सिंहनादाः तैर्घोरं भीमं यद्वैरिपारिषदः शत्रुसङ्घस्य नासीरसीम तत्रोद्भूतैः निर्निरोधैः दुश्श्रवैरिति वार्थः। पाठान्तरे उद्भवैरुत्पन्नैरित्यर्थः। अथवा क्रामन्ती सञ्चरन्ती या डामरघोरवैरिपारिषदिति विशेषणविशेष्यभावः। अमर्त्यनगर्याः अमरावत्यास्संवर्तस्य प्रळयस्य मौहूर्तिकैः मुहूर्तविद्भिः दैवज्ञैरित्यर्थः। 'स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि' इत्यमरः। आवेदकैरिति यावत्। भेरीणां भाङ्करणैः ध्वनिभिरित्यर्थः। सम्भ्रान्ताः अनवस्थिताः चपला इति यावत्। अत एव निवृत्ता प्रगता आशा जयेच्छा येषां ते तथाविधाः दिगीशाः दिक्पतयः अग्न्यादयः दिशः प्रपेदिरे प्रापुरित्यर्थः। योद्धुमसमर्था जिजीविषवः के वा न पलायन्त इति भावः। दिक्पतिष्वेको वायुस्सार्वदेशिकशत्रुकृतया अन्यत्र गमनमनीहमानस्सन् शत्रुप्रयुक्तबाणान् स्वनामसाम्यात् स्वमित्राणीति ज्ञात्वा तानेव प्रविवेशेत्याह ॥ वल्मीकेष्विति ॥ वल्मीकेषु नाकुषु। 'वामलूरुश्च नाकुश्च वल्मीकं पुन्नपुंसकं' इत्यमरः। अहयः सर्पाः। 'अहिर्वृत्रासुरे शत्रौ सर्पे च' इति विश्वः। मुनयश्च वसन्ति कान्तारेषु दुर्गेषु कन्दरेषु दरीषु लवणे सिन्धौ

आक्रान्ते भुवने परैस्तृणमपि स्प्रष्टुं न शक्यं मया
किं कर्तव्यमिति व्यलीयत जवाद्दैत्याशुगेष्वाशुगः ॥ ४२ ॥

अनन्तरमित्थमतर्कितमनिमित्तं अपध्वंसमानमसुरबलमभितोऽपि विप्रकीर्णमिव भुवि निपत्य गगनतलं परिवहदिव भिन्नमर्यादमर्णवस्रोतः, शतशः परीक्षितमपि सौहार्दे सहस्रशो गृहीतजयमपि समरसंमर्दे, कदाप्यशिक्षितायुधग्रहमिव, अनाकर्णितसंग्रामसङ्कथमिव, वायसयूथमिव, वानरानीकमिव, केरळसैन्यमिव, ग्रामपालकजालमिव, करताळिकामात्रकातरममर्त्यबलमप्यालोकयन्, दशभिश्शतैरक्ष्णां वासवः स्व-

समुद्रे च घोराः भयङ्कराः समीराशना वायुभक्षकाः अजगरा इति शेषः । वसान्ति क्व वा सुस्थितिः सुखस्थितिः स्यात् । परैश्शत्रुभिः । 'परोऽरिपरमात्मनोः' इति विश्वः । भुवने लोके । आक्रान्ते सति । तृणमपि स्प्रष्टुं स्पर्शनं कर्तुं मया न शक्यं किं कर्तव्यमितीव आशुगो वायुः दैत्यानां आशुगेषु आशुगत्वजातिविशिष्टेषु । 'आशुगौ वायुविशिखौ' इत्यमरः । व्यलीयत गूढमनुप्रविवेशेत्यर्थः । परपरिभवदशायां को वान्यस्सहायो भवतीति भावः । कान्दिशीकयोधसङ्घं दृष्ट्वा इन्द्रश्चिन्तयामासेत्याह ॥ **अनन्तरमिति** ॥ अतर्कितमनुत्प्रेक्षितं यथा तथा अनिमित्तं अज्ञातानामत्तं यथा तथेत्यर्थः । अपध्वंसमानं न्यूनामित्यर्थः । भुवि निपत्य अभितोऽपि विप्रकीर्णं गगनतलमिव स्थितं निर्मर्यादावस्थितत्वादिति भावः । भिन्ना त्यक्ता मर्यादा वेला यस्मिन् कर्मणि तद्यथा तथा । परिवहत् प्रवहत् अर्णवस्य स्रोतः अम्बुसरणमिव स्थितं निर्निरोधत्वादिति भावः । 'स्रोतोऽम्बुसरणं स्वतः' इत्यमरः । एवंभूतमसुराणां बलं सौहार्दे विषये शतशः बहुशः । बह्वल्पार्थादित्यादिना शस्प्रत्ययः । परीक्षितं दृष्टमपि समरस्य सम्मर्दे प्रघट्टके सम्बन्धे सहस्रशः । पूर्ववत् प्रत्ययः । गृहीतस्सम्पादितो जयः येन तत्तथाभूतमपि । कदापि अशिक्षितं अनभ्यस्तं आयुधानां ग्रहणं स्वीकारो येन तत्तथाभूतमिव । अनाकर्णिता अश्रुता सङ्ग्रामस्य कथा प्रस्तावो येन तत्तथाभूतमिव । वायसानां कुलं यूथमिव । वानराणामनीकं सेनामिव । केरळानां केरळदेशीयानां सैन्यं सेनामिव । युद्धयात्रायां 'केरळाश्चपला रुष्टा हन्युस्स्वस्वामिनं प्रियं' इति योधाधमत्वेन केरळानामुक्तत्वादिति भावः । ग्रामपालानां खण्डभूपतीनां शुनां वा जालमिव समूहमिव करताळिकामात्रेण करताडनमात्रेण कातरं अधीरं । 'अधीरे कातरत्रस्नुभीरुभीरुकभीलुकाः' इत्यमरः । अमर्त्यानां बलं सैन्यमपि । 'सैन्यास्थिदर्परेतश्शक्तिस्थौल्येषु चेद्बलं

**यमेवमालोचयामास। अहो दुर्वाससो ब्राह्मण्यं, अहो निगमागमप्रामाण्यं, अहो पाशुपतेषु माहात्म्यं, अहो दुर्निमित्तेषु याथार्थ्यं, अहो कर्मपरिणतेः प्राबल्यं, अहो देहिषु श्रियश्चाश्चल्यं, अहो पुरुषकारस्य वैफल्यं, अहो परमेष्ठिनः कौशल्यं, आहवो नाम कियानयं, असुरा नाम कियन्त इमे, कीदृशाः पलायन्ते, कीदृशाः पराक्रमन्ते, किं बन्धुभिः, किं सचिवैः, किं बलेन, किं धनेन, किमनेन दम्भोळिना, किमन्ततोऽपि मया, कथं दृश्या दाराः, कथं दृश्याः पौराः,**

---

क्लीब' इति नानार्थमाला। वासवः स्वयमेव दशभिश्शतैस्सहस्रेणेत्यर्थः। अक्षिभिरालोकयन् पश्यन् सन्नेवमालोचयामास चिन्तयामास। बलरहितः को वा स्वामी चिन्तां न भजेतेति भावः। आलोचनप्रकारमेवाह ॥ **अहो इति** ॥ दुर्वाससो मुनेर्ब्राह्मण्यं अहो विस्मयावहम्। यतस्तदेकबलमवलम्ब्य सर्वं यथाकामं करोतीति भावः। निगमः वेदः आगमश्शास्त्रं तयोः। 'तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः' इत्यादिश्रुतिः। 'समागतं ब्रह्मनिष्ठं नावमन्येत कर्हिचित्। ब्रह्मतेजोवधादन्यत्कारणं नेष्टनाशने ॥' इति स्मृतिः। एवंरूपयोरित्यर्थः। प्रामाण्यं यथार्थबोधकत्वं। अहो इत्याश्चर्यार्थकस्सर्वत्र। अन्यथा कदाचिदेव न भवतीति भावः। कर्मणां परिणतेः परिपाकस्य प्राबल्यं फलाभिमुख्यं अहो देहिषु प्राणिषु श्रियश्चाश्चल्यं तारळ्यं अहो पुरुषस्य कारः कृतिः प्रयत्न इति यावत्। तस्य वैफल्यं नैरर्थक्यं अहो। बलवत्सम्बन्ध्यपि कालविशेषे न फलतीति भावः। परमेष्ठिनः कौशल्यञ्चातुर्यमहो। यतः नीचानुत्तमयति उत्तमान्नीचयतीति भावः। पाशुपतेषु पशुपतेः शिवस्य भक्तेषु माहात्म्यं सत्यवचनत्वादिकं अहो। कदाचिदप्यन्यथा न भवतीति भावः। दुर्निमित्तेषु प्रागुक्तप्रातिकूलपवनादिषु याथार्थ्यं अन्यूनानतिरिक्तशास्त्रोक्तफलसम्पादकत्वं अहो। आहवो रणः नाम प्रसिद्धः अयमसुरैस्सह कलहः कियान् किं महान् असुरा नाम प्रसिद्धा इमे पुरोवर्तिनः कियन्तः किं शूराः कीदृशाः कथम्भूताः पराक्रमन्ते। कीदृशाः कथम्भूताः पलायन्ते प्रधावन्ते। बन्धुभिः रक्तसम्बन्धिभिः किं न किमपि प्रयोजनमिति भावः। सचिवैर्मन्त्रिभिर्वा किं न किमपीति भावः। बलेन सामर्थ्येन किं धनेन किं दम्भोळिना वज्रेण वा किं। अन्ततः अवसाने। सार्वविभक्तिकस्तसिः। मयापि वा किं किमपि साध्यं नास्तीति भावः। दाराश्शची कथं दृश्याः द्रष्टव्याः। प्रागुक्तदम्भवीरवादानां कथनादिति भावः। पौराः पुरजनाः कथं दृश्याः तान् प्रति भयं त्यजत युष्मानहं पालयिष्या-

किमितो निहतेन जीवितेन, किं करिष्यति विपरीतो विधिरितोऽपि, न चिकीर्षामि सौवर्गमाधिपत्यं, न जिहीर्षामि दानवानामौद्धत्यं, यावदीदृशोऽहं न कस्यचिद्दृष्टिगोचरे पतेयं तावदस्मिन्नेव समरे तनुं त्यजामीति सन्नह्य पुरश्चरन् शचीपतिरशृणोदन्तरिक्षगां वाणीम् ।

अहो ते शक्र धीमान्द्यमग्रे भाव्यं किलान्यथा ।
अन्तर्धेहि रणादस्मादन्तर्धेहि च मद्गिरम् ॥ ४३ ॥
इत्याकाशगिरा शक्रो मत्या च क्रूरया स्वया ।
यावद्दोलायते तावदागत्याबोधयद्गुरुः ॥ ४४ ॥

मीत्यभिधानादिति भावः । इतः परमिति शेषः । निहतेन । भावे क्तः । मरणेन किं । जीवितेन जीवनेन किं । उभयथापि अमरावती दुर्लभेति भावः । यद्वा कर्तरि क्तः । निहतेन संहतेन मया किं । जीवितेन जीवता किं । यथा मृतान्मत्तः पुत्रदारादीनां प्रयोजनं नास्ति तथा विद्यमानादपि मत्त इति भावः । अथवा निहतेन संहृतप्रायेण जीवितेन जीवता जीवच्छवेनेति यावत् । विपरीतः प्रतिकूलः विधिः दैवं । 'विधिर्विधाने दैवेऽपि' इत्यमरः । इतोऽपि विद्यमानदुरवस्थातोऽपि । किमवस्थान्तरं करिष्यति । स्वर्गस्येदं सौवर्गं स्वर्गसम्बन्धीत्यर्थः । आधिपत्यं प्रभुत्वं न चिकीर्षामि कर्तुं नेच्छामीत्यर्थः । दानवानामौद्धत्यं न जिहीर्षामि अपहर्तुं नेच्छामीत्यर्थः । यावदीदृशः एवं भूतः अहं कस्यचिद्दृग्गोचर दृग्देशे न पतेयं यस्यकस्यचिद्दृग्विषयो न भवेयमित्यर्थः । तावदस्मिन्नेव समरे रणरङ्गे तनुं त्यजामि विसृजामीति सन्नह्य सन्नद्धो भूत्वा पुरश्चलन् सञ्चरन् । शचीपतिरिन्द्रः अन्तरिक्षं गच्छति भजतीत्यन्तरिक्षगा तां वाणीं वाचमशृणोत् शुश्राव । श्रु श्रवण इत्यस्य लङ् । भीतं भक्तं भगवान् हरिः कदा नोद्धरतीति भावः । वागानुपूर्वीप्रकारमाह ॥ अहो इति ॥ हे शक्र इन्द्र ते तव धियो मान्द्यं कार्याकार्यग्रहणाचातुर्यमहो विस्मयावहं । बृहस्पतिपारोशिक्षितस्यापि तव कथं प्रमाद इति भावः । अग्रे उत्तरकाले अन्यथा प्रकारान्तरेण भाव्यं भवितव्यं वर्तिष्यते । त्वदीयैस्सह तवैवामृतलाभादिकं भवेदिति भावः । अस्माद्रणात्कलहात् । ल्यब्लोपे कर्मणि पञ्चमी । रणं विहायेत्यर्थः । अन्तर्धेहि अदर्शनं भज । निगूढस्सन्नपसरेत्यर्थः । मद्गिरं मदुदीरितां वाचं अन्तर्मनसि धेहि निधेहि निक्षिपेति यावत् । आत्मनाशे संप्राप्ते को वा बुद्धिमान् सर्वं न त्यजतीति भावः । आकाशवाणीं श्रुत्वापि झडिति गन्तुं सन्दिदेहेत्याह ॥ इतीति ॥ इत्येवंप्रकारया आकाशगिरा । क्रूरया मुमूर्षाजनिकया स्वया मत्या बुद्ध्या च या·

हन्त कथमेतदमरपते धीमतोऽपि ते दुर्व्यवसितं, अविदितं न ते वेदितव्यं, अवशेषितं वा गुरूणामुपासनं, किं न जानासि भवितव्यतां, किं वाभिमन्यसे जयश्रियो नैयत्यम्। ननु श्रूयत एव पुराणेषु भवता, यत्किल मालिसुमालिसङ्गरे महति परिवर्तमाने पराचीने पतगपतौ भगवतापि परावृत्ते। अन्धकेन किलेदमधिष्ठितं त्रैलोक्यं, विध्यण्डान्येव कियन्ति विजितानि तारकेण। तदलमनुस्मर शापान्तवचनमत्याश्रमस्य मुनेः। भवेयुरपि कदाचिदन्यथा भाषितानि महेश्वरस्य, न तु

---

वत् डोलायते डोलेवानवस्थानं लेभे तावद्गुरुः बृहस्पतिरागत्य अबोधयत् अवशिष्टं वक्तव्यमिति शेषः। उपादिदेशेत्यर्थः। शूरतमः को वा रथिकः भीरुरिव पलायितुमुत्सहत इति भावः। बोधनप्रकारमेवाह त्रिभिर्गद्यैः॥ **हन्तेति**॥ अमराणां पतेश्श्रेष्ठस्य धीमतोऽपि प्रशस्तबुद्धिशालिनोऽपि। प्रशंसायां मतुप्। ते तव दुर्व्यवसितं दुष्टव्यवसायः दुर्बुद्धिरिति यावत्। एतत्। किं ते तव वेदितव्यं वेदितुं योग्यं सत् अविदितमज्ञातं नास्तीत्यर्थः। त्वं विदितवेद्योऽसीति भावः। गुरूणां विद्यागुरूणामुपासनं पर्युपासनमवशोषितं किं न किलेत्यर्थः। पर्युपासितैर्गुरुभिस्तुभ्यं रहस्यमपि उपदिष्टमेवेति भावः। भवितव्यतां कर्मायत्तसुखदुःखादिवैचित्र्यं न जानासि किं जानास्येवेत्यर्थः। सर्वस्य वेद्यस्य मया उपदिष्टत्वादिति भावः॥ **किं वेति**॥ महत्यधिके मालिसुमालिभ्यां तन्नामकासुराभ्यां भ्रातृभ्यां सह सङ्गरे परिवर्तमाने प्रवर्तमाने सति पतगपतौ गरुडे पराचीने निवृत्ते सति। भगवता गोविन्देनापि परावृत्ते विनिवृत्त इति यत् प्रधावितुं पश्चाद्दृष्टिना अभावीति यदित्यर्थः तत्पुराणेषु भवता श्रूयत एव। वाकारो भिन्नक्रमः। जयश्रियो जयलक्ष्म्याः नैयत्यं एकत्रावस्थानं अचाञ्चल्यमिति यावत्। किं किमर्थमभिमन्यसे अभिजानासीत्यर्थः। 'आपदः क्षणमायान्ति क्षणमायान्ति सम्पदः। क्षणं जन्मापि मरणं मुने किमिह न क्षणम्॥ अशूरेण हतश्शूर एकेनापि हतं शतम्। प्राकृताः प्रभुतां याताः सर्वमावर्तते जगत्॥' इत्यादिपुराणानि श्रुतवता त्वया श्रीनैयत्यन्नाभिमन्तव्यमिति भावः। वक्तव्यमुक्त्वा ईशोपदिष्टमर्थमनुवर्तयितुमिन्द्रं प्रोत्साहयति ॥ **अथेति**॥ इदं त्रैलोक्यं त्रिभुवनं केन किल केन वा अधिष्ठितमध्युषितं आश्रितमिति वार्थः। तारकेण शूरपद्मानुजेन कियन्ति कति विध्यण्डानि ब्रह्माण्डानि जितान्यासन्। तत्ततः अलं खेदं प्राप्येत्यादिः। आश्रमान् ब्रह्मचर्यादीनतिक्रान्तः अत्याश्रमः। तस्य अवधूतस्येत्यर्थः। मुनेर्दुर्वाससस्सम्बन्धिशापान्तस्य शापावधेर्वचनं उक्तिं अनुस्मर

जातु माहेश्वराणाम् । यत्पुरोदितं गोविन्द एव कुशलानि करिष्यतीति महर्षिणा, तदनूदितमग्रे भवितव्यमन्यथेत्यधुना परमेष्ठिना । तदेहि कञ्चित्कालमन्तर्हिता एव क्वचिदावसाम इत्यनुशिष्य शिष्यं अन्तर्धाप्य स्वयोगमायया तिरोदधे स्वयमपि देशिको देवतानाम् ।

विद्राणे वरुणे गते हुतवहे वैवस्वते मूर्च्छिते
सद्यो लोचनगोचरादपगते संक्रन्दनस्यन्दने ।
संवर्तव्यतिषक्तसप्तजलधिस्रोतःप्रभूतध्वनि-
स्फारः कोऽपि बभूव दानवबले हर्षाट्टहासध्वनिः ॥ ४५ ॥

---

महेश्वरस्य भाषणानि वचनानि कदाचिदन्यथा प्रकारान्तरेण भवन्ति माहेश्वराणां शिवभक्तानां भाषणानि अन्यथा प्रकारान्तरेण न भवेयुरेव । कुम्भकर्णपिपीलिकादिप्रार्थनावसरे प्रयुक्तस्य शिववचनस्य कालान्तरे विपरीतत्वादिति भावः ॥ **यदिति** ॥ पुरा महर्षिणा दुर्वाससा गोविन्द एव कुशलानि करिष्यतीति यद्वच उदितं अधुना तद्वचनं परमेष्ठिना ब्रह्मणा अग्रे भाव्यं किलान्यथेत्यनेनानूदितं पुनर्भाषितं तद्वचनादन्यदिदमाकाशवचनमिति न जानीहीति भावः । इन्द्रं प्रोत्साह्य तेन सह गुरुरन्तरधादित्याह ॥ **तदिति** ॥ तत्तः एह्यागच्छ कञ्चित्कालं । कालाध्वनोरत्यन्तसंयोगे द्वितीया । कस्मिंश्चित्काल इत्यर्थः । अन्तर्हिता एव केनचिदनवलोकिता एव । आवसामः तिष्ठामः । इति शिष्यमिन्द्रमनुशिष्य शिक्षां कृत्वा स्वस्य योगमायया योगशक्त्या शिष्यमन्तर्धाप्य अन्तर्धानं प्रापय्य देवतानां देवानां देशिको गुरुः बृहस्पतिः स्वयमपि तिरोदधे अन्तरधादित्यर्थः । लघुनोपायेन भाविफलावश्यम्भाववेदी को वा बुद्धिमान् गुरुप्रयत्नेनापि दुस्साध्यफले युद्धे अन्यत्रापि गत्वा प्राणान् त्यजतीति भावः । देवसेनाध्यक्षेषु प्रस्थितेषु लब्धविजया दैत्याः सिंहनादं चक्रुरित्याह ॥ **विद्राण इति** ॥ वरुणे विद्राणे विद्रुते सति । हुतं वहतीति हुतवहः । तस्मिन् गते निर्गते सति । वैवस्वते यमे । 'श्राद्धदेवो वैवस्वतोऽन्तक' इत्यमरः । मूर्च्छा अस्य सञ्जाता मूर्च्छितः तस्मिन् सति । तदस्य सञ्जातं तारकादिभ्य इतजितीतच्प्रत्ययः । सद्यः तत्क्षणं सङ्क्रन्दनस्य इन्द्रस्य स्यन्दने रथे लोचनानां गोचरो देशः तस्मात्तमपहायेत्यर्थः । ल्यब्लोपे कर्मणि पञ्चमी । यद्वा लोचनानां गोचरः विषयः तस्मात् लोचनविषये अनवस्थायेत्यर्थः । ल्यब्लोपे अधिकरणे पञ्चमी । उपगते सति । दानवानां बले संवर्ते प्रळये व्यतिषक्ताः मिलिताः ये सप्त जलधयः तेषां स्रोतस इव प्रवाहस्येव प्रभूतो महान् यो ध्वनिः तेन स्फारः अभिवृद्धः कोऽपि अवर्णनीयः हर्षेण कृतस्याट्टहासस्य क्ष्वेडितस्य ध्वनिः बभूव । शत्रुषु प-

चकितपलायितस्खलितमूर्च्छितनिष्पतित-
क्षतविबुधानुधावननिषेधिमहारथिकम्।
विजहि जहीहि पाहि निगृहाण गृहाण हरे-
त्युपचितनादमेदुरमवर्तत दैत्यबलम्॥ ४६ ॥

अपिच।

आवृत्यावर्तयन्तो दिशि दिशि तुरगान्वारणान्वारयन्तो
मुष्णन्तो भूषणानि प्रसभमभिनिपत्यायुधान्याहरन्तः।
घ्नन्तः सन्तर्जयन्तः पथि पथि विबुधान्मुक्तकेशान्दिगीशान्
अभ्येत्यामन्त्रयन्तः प्रजहसुरसुरास्सर्वतो निर्विशङ्कम्॥

---

लायितेषु सत्सु प्राप्तजयाः के वा योधाः हर्षवशादट्टहासादिकं न कुर्वन्तीति भावः। दैत्यबलमवस्कन्दनैकलोलुपं सत्तस्थावित्याह॥ चकितेति॥ चकिताः भीताः अत एव पलायिता प्रधाविताः अत एव स्खलिताः स्खलनपतिताः अत एव मूर्च्छा एषां सञ्जाता मूर्च्छिताः निश्वसिताः जीवनादृष्टवशादाश्वसिताः। क्षताः ताडिताः। एतत्समासे प्रथमं क्तान्तानां सर्वेषां परस्परं स्नातानुलिप्तवत्समासः। पश्चाद्विबुधशब्देन कर्मधारयः। एवञ्च इत्थम्भूतान् देवाननुसृत्य धावनं क्षिप्रगमनं स्वभटकर्तृकं तन्निषेधन्त इति तन्निषेद्धुं शीलं येषां त इति वा। तान्निषेधिनः महारथिकाः यस्मिन् तत्। भीतानां ताडनस्य च वीराणामसम्भावितत्वादिति भावः। दैत्यानां बलं सैन्यं। 'स्थौल्यसामर्थ्यसैन्येषु बलं नाकाकसीरिणोः' इत्यमरः। विजहि जहीहि विसृजेत्यर्थः। पाहि पालय निगृहाण निग्रहं कुरु गृहाण तामिति शेषः। हर अपहर। अरिमिति शेषः। इत्येवमुपचितेन अभिवृद्धेन नादेन ध्वनिना मेदुरं व्याप्तं सत् अवर्तत तस्थौ। सैनिकानां विभिन्नचित्तकत्वात्केचन अनुजगृहुः केचन निजगृहुरिति भावः। अथ यावदाश्वाससमाप्त्यवस्कन्दनप्रकारमेवाह॥ आवृत्येति॥ असुराः दिशि दिशि प्रतिदिशं तुरगानावृत्य परिवृत्य सर्वतः परिवार्येति यावत्। आवर्तयन्तः स्वसैन्यं प्रति विनिवर्तयन्तः। वारणान् गजान् वारयन्तो निवारयन्तः। भूषणानि मुष्णन्तः अपहरन्तः। अभिनिपत्य आगत्य प्रसभं बलात्कारं आयुधान्याहरन्तः सङ्गृह्णन्तः पथि पथि प्रतिमार्गं। वीप्सायां द्विरुक्तिः। मुक्ताः विमुक्ताः केशा लक्षणया तद्ग्रन्थयो यैस्तान्विबुधान्। लब्धानिति शेषः। घ्नन्तः प्रहरन्तः सन्तर्जयन्तः धिक्कुर्वन्तः असुरा दैत्याः निर्विशङ्कं निर्भयं यथा तथा। दिगीशान् दिक्पतीनभ्येत्य गत्वा। युद्धायेति शेषः। आमन्त्रयन्तः आह्वानं कुर्वन्तस्सन्तः। प्रजहसुः हासञ्चक्रुः। प्रभ्रष्टसर्वस्वमसमीचीनं जनं के वाऽह-

किञ्च ।

शस्त्राशस्त्रिक्षतपतिसुतालोकशोकावलुप्त-
प्राणस्त्रैणव्रजमशरणध्वस्तलुप्तापणान्तम् ।
धावद्देवप्रवरसमरोदन्तयाथार्थ्यबोध-
भ्राम्यत्पौरं नगरमभवज्जर्जरं निर्जराणाम् ॥ ४७—४८ ॥

ततो मुहूर्तादेव मूर्ता इव कोपानलविस्फुलिङ्गा मुनेर्बलिमुखा मखद्विषः पराक्रमेण महता परिक्रामन्तस्तिरोहिते म-

---

ङ्गारिणो न हसन्तीति भावः । अवस्कन्दनसमये अमरपुरं अतीव सातङ्कं बभूवेत्याह ॥ किं चेति ॥ निर्जराणां सुराणां जर्जरं गलितरामणीयकं नगरं पुरं शस्त्राशस्त्रीत्यादिप्रथमान्तत्रयं विधेयविशेषणमिति बोध्यम् । शस्त्रैश्च शस्त्रैश्च प्रहृत्येदं युद्धं प्रवृत्तं शस्त्राशस्त्रि तेन क्षतानां हतानां पतीनां सुतानां चालोकाद्दर्शनात् । 'आलोको दर्शनोद्योतौ' इत्यमरः । यश्शोकस्सन्तापः तेनापलुप्ताः नष्टाः प्राणा यस्य स तथाभूतः । यः स्त्रीणामयं स्त्रैणः स्त्रीसम्बन्धी । स्त्रीपुंसाभ्यां नञ्स्नञौ भवनादिति नञ्प्रत्ययः । व्रजस्समूहो यस्मिन् तत् । 'समूहनिवहव्यूह' इत्यमरः । न विद्यन्ते शरणानि रक्षकाः गृहा वा यस्य यस्मिन्वा । 'शरणं गृहरक्षित्रोः' इत्यमरः । अत एव ध्वस्तः स्रस्तः अत एव लुप्तः आपणानां पण्यवीथीनां अन्तः स्वरूपं यस्मिन् तत् । 'अन्तोऽस्त्री निश्चये नाशे स्वरूपेऽग्रेऽन्तिके कर' इति भास्करः । धावन्तः पलायमानाः देवानां प्रवराः श्रेष्ठा यस्मात्तथाविधम् । यत्समरं युद्धं तस्योदन्तः वृत्तान्तः । 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्त' इत्यमरः । तस्य यथाथार्थ्यं प्रामाण्यं तस्य बोधः वेदनं तस्मै भ्राम्यन्तः विघूर्णमानाः पौरा यस्मिन् तत्तथाभूतमभवत् । अथवा एवमन्वयः । शस्त्राशस्त्रीत्यादिविशेषणत्रयोपेतं निर्जराणां पुरं जर्जरमभवादिति । यद्वा शस्त्राशस्त्रीत्यादिपदत्रयसहितजर्जरपदं द्वितीयान्तं मत्वा क्रियाविशेषणतया योज्यम् । ममताकारिणि नाथे पुर्याः पलायिते पौराणां वा कथं यथापूर्वमवस्थितिस्स्यादिति भावः । सुधर्माप्रवेशकालिकमसुरवृत्तान्तं वक्तुमुपक्रमते ॥ तत इति ॥ मुहूर्तादेव मुहूर्तं विहायैव । ल्यब्लोपे पञ्चमी । मूर्तिश्शरीरमेषामस्तीत्यर्थे अर्श आदिभ्योऽजित्यच्प्रत्ययः । मूर्तिमन्तः मुनेर्दुर्वाससः कोपानलस्य स्फुलिङ्गा इव कणा इव स्थिताः । 'त्रिषु स्फुलिङ्गोऽग्निकण' इत्यमरः । बलिः मुखं प्रमुखो येषां ते बलिमुखाः । मखद्विषः असुराः । महता पराक्रमेण शौर्येण । परिक्रामन्तः गच्छन्तस्सन्तः रणमूर्धनि रणरङ्गे मरुत्वति देवेन्द्रे द्रागेव सपद्येव । 'द्राङ् मङ्क्षु सपदि द्रुत' इत्यमरः । तिरोहिते अन्तर्हिते सति । पलायित इति प्रधावित इति प्रमीतः मृत इति अमरावतीं प्रवि-

रुत्वति द्रागेव रणमूर्धनि पलायित इति, प्रमीत इति प्रविष्टोऽमरावतीमिति च तादात्विकैः प्रवादभेदैः तत्त्वमनवबुध्यमाना अपि, भवतु नाम सर्वथैव वयं प्रविशेम तावदमरावतीं, परिशोधयेम ततः प्रवृत्तिं शचीपतेः, अपहरेम सुरकामिनीः, अवस्कन्देम कोशमन्दिरं, अधितिष्ठेम सुधर्मां, आक्रामेम त्रैलोक्यमिति कृतनिश्चयाः, कल्पद्रुमा बलेः, कामधेनुर्बाणस्य, हास्तिकं नमुचेः, अश्वीयं शम्बरस्य, चिन्तामणिर्जम्भस्य, विलासिन्यो विरोचनस्य, वारुणं पदमस्य, वायवीयं तस्य, वैश्रवणीयममुष्य, वैश्वानरीयमेतस्य, प्रविष्टं प्रवेष्टुः, अपहृत्य लब्धमपहर्तुः, प्रहृत्य लब्धं प्रहर्तुः, आलोकितुरालोकितं, उपायवक्तु-

---

ष्ट इति । तदात्वभवाः तादात्विकाः तात्कालिका इत्यर्थः । 'तत्कालस्तु तदात्वं स्यात्' इत्यमरः । तैः प्रवादभेदैः वृत्तान्तभेदैः । तत्त्वं याथार्थ्यमनवबुध्यमाना अजानन्तोऽपि । भवतु अस्तु नाम । तावदादौ अमरावतीं प्रविशेम प्रवेशं कुर्याम । ततश्शचीपतेः प्रवृत्तिं वृत्तान्तं परिशोधयेम अन्वेषणं कुर्याम सुरकामिनीः अपहरेम अपहारं कुर्याम । कोशानां अर्थौघानां मन्दिरं धनसदनमिति यावत् । 'कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः' इत्यमरः । अवस्कन्देम स्वीकुर्याम । सुधर्मां देवसभायां । अधिशीङ्स्थासां कर्मेत्यधिपूर्वस्य तिष्ठतेराधारस्य कर्मत्वं कर्मणि द्वितीयेति द्वितीया । अधितिष्ठेम वर्तेम 'स्यात्सुधर्मा देवसभा' इत्यमरः । त्रिलोका एव त्रैलोक्यम् । स्वार्थे ष्यञ्प्रत्ययः । आक्रामेम अधीनं कुर्याम । इत्येवं कृतः निश्चयः यैस्तथाविधास्सन्तः । बलेः कल्पवृक्षाः स्वीया भवन्त्विति शेषः । बाणस्य कामधेनुः स्वीयास्तु । नमुचेः नमुचिनाम्नोऽसुरस्य हस्तिनां समूहो हास्तिकं । अचित्तहस्तिधेनोष्ठगिति समूहार्थे ठक्प्रत्ययः । 'हास्तिकं गजता वृन्दं' इत्यमरः । शम्बरस्य अश्वानां समूहः अश्वीयम् । केशाश्वाभ्यां यञ्छावन्यतरस्यामिति समूहार्थे अश्वशब्दाच्छप्रत्ययः । 'वृन्दे त्वश्वीयमाश्ववत्' इत्यमरः । चिन्तामणिर्जम्भस्य । विरोचनस्य विलासिन्यः । अस्य पार्श्वस्थस्येत्यर्थः । वरुणस्येदं वारुणम् । तस्येदमित्यण् । पदं स्थानम् । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । तस्य असन्निहितबुद्धिस्थस्येत्यर्थः । वायोरिदं वायवीयं वायुसम्बन्धीत्यर्थः । अमुष्य पुरःस्थितस्य वैश्रवणस्य कुबेरस्येदं वैश्रवणीयं । वृद्धाच्छः । एतस्य सन्निहितस्य वैश्वानरीयमग्निसम्बन्धि पदं । प्रवेष्टुः प्रवेशं कुर्वतः । प्रविष्टं प्रवेशकर्म । अपहर्तुरपहारं कुर्वतः । अपहृत्य लब्धं अपहृतं वस्त्वित्यर्थः । प्रहर्तुः पुंसः प्रहृत्य लब्धं प्रताडनं

रर्धं, उत्तरसाधकस्य तदर्धं, समसमयप्रवृत्तयोस्तु साधारणं वस्तु, परतस्तु यथारुचि परस्परच्छन्देनेति समयबन्धेन पर्यवस्थाप्य पताकिनीं, आरुह्य मतङ्गजानत्युन्नतान्, आलोकयन्तो नगरोपशल्यानि, प्रशंसन्तः प्राकारदुर्गसामग्रीं, परिहसन्तो बुद्धिलाघवं प्रतिद्वन्द्विनां, निर्दया विपक्षजातीयेषु, निर्विशङ्का दुर्गगुल्मेषु, ग्राहयन्तो वधूदर्शं, घातयन्तः पुरुषदर्शं, आकर्णयन्तः कर्णामृतान्याक्रन्दितानि नाकसदां, हसन्तो दर्शंदर्शमशरणान्वध्यमानान्, कुप्यन्तो दयालुषु, कु-

---

कृत्वा सम्पादितमित्यर्थः। आलोकितुः द्रष्टुरित्यर्थः । आलोकितं दृष्टं वस्तु उपायस्य इतिकर्तव्यतायाः प्राप्तिनिमित्तस्य वा वक्ता उपायवक्ता । वचेस्तृच्प्रत्ययः । तस्य । 'उपायः कर्म चेष्टा च' इत्यमरः । अर्धं समांशः । 'पुंस्यर्धोऽर्धं समेंऽशके' इत्यमरः । उत्तरस्य उत्कार्थस्य साधकः तस्य । 'उत्कार्थस्तूत्तरो मत' इति विश्वः । तदर्धं अवशिष्टसमांश इत्यर्थः । समसमये एककाले प्रवृत्तयोः प्रविष्टयोस्तु वस्तु साधारणं समानमित्यर्थः । 'साधारणन्तु सामान्यं' इत्यमरः । परतस्तु अन्यत्र तु । इतराभ्योऽपि दृश्यन्त इति सप्तम्यास्तसिः । रुचिमाभिरतिमनतिक्रम्य यथारुचि । अव्ययं विभक्तीत्यादिना समासः । परस्परेषामन्योन्येषां छन्देन अभिप्रायेण । 'अभिप्रायवशौ छन्दौ' इत्यमरः । समयस्य शपथस्य बन्धेन बन्धनेन । 'समयाश्शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । पताकिनीं सेनां पर्यवस्थाप्य परितः स्थापयित्वा । अत्युन्नतान्मतङ्गजानारुह्य । नगरस्य उपशल्यानि सीमावधिदेशान् । 'ग्रामान्तमुपशल्यं स्यात्' इत्यमरः । आलोकयन्तस्सन्तः प्राकारमार्गाभ्यां सालवीथीभ्यां सहिता च सा सामग्री चेति शाकपार्थिवादित्वात्समासः । प्राकारमार्गं तदुपयोगिनीं युद्धोपयोगिनीं सामग्रीं चेत्यर्थः । प्रशंसन्तः श्लाघमानाः प्रतिद्वन्द्विनां विरोधिनां । 'प्रतिरोधिप्रतिद्वन्द्विविरोधिपरिपन्थिनः' इत्यमरशेषः । बुद्धेर्लाघवं चाञ्चल्यं परिहसन्तस्सन्तः । विपक्षजातीयेषु शत्रुतुल्येषु कर्मदेवेष्वित्यर्थः । निर्दयाः कृपारहिता इत्यर्थः । दुर्गाः दुःखेन गन्तुं शक्याः । ईषद्दुस्सुष्वित्यादिना गमेः खल्प्रत्ययः । ये गुल्माः सेनाः स्तम्बा वा । 'गुल्मा रुक्स्तम्बसेनाश्च' इत्यमरः । निर्विशङ्काः निर्भयास्सन्तः । वधूमिव दृष्ट्वा वधूदर्शं । उपमाने कर्मणि चेति णमुल्प्रत्ययः । ग्राहयन्तः स्वीकारयन्तः । पुरुषमिव दृष्ट्वा पुरुषदर्शं घातयन्तः प्रहारयन्तः । एवं कर्णयोरमृतानि तत्तुल्यानीत्यर्थः । नाकसदां स्वर्गिणां आक्रन्दनानि परिदेवनानि आकर्णयन्तः । अविद्यमानं शरणं संरक्षको येषां तान् महामुनीन् नारदादीन् दर्शंदर्शं दृष्ट्वा दृष्ट्वा ।

तूहलिनो दारुणेषु, विसर्जयन्तो नैर्ऋतीयान् जात्यभिमानि विद्रावयन्तः कर्मदेवानट्टहासैः, उन्माथयन्तो गोपुरद्वारं, उल्लङ्घयन्तः प्राकारं, अपश्यन्तश्शरणागतान्, अशृण्वन्तो याच्ञाक्षराणि सुरर्षीणां, आज्ञापयन्तो जिह्वाच्छेदममरवैतालिकानां, चरणावकर्तनं चाराणां, चपेटाघातममरमौहूर्तिकानां, अङ्गुलिच्छेदमक्षरलेखिनां, आस्यविदारणममात्यानां, भञ्जयन्तः प्रतिमा देवतानां, अपमार्जयन्तः सुरपराक्रममालेख्यसमर्पितं, अशरणहन्यमानरक्तधारावसिक्तं, अग्रचरणग्राहमाकृष्यमाणमुनिजनशरीरसम्मृष्टं, अनुपददह्यमानदेवतागारधूमधू-

---

आभीक्ष्ण्ये णमुल्प्रत्ययः । हसन्तस्सन्तः पूर्ववच्छेषः । निर्ऋतेः रक्षस इमे नैर्ऋतीयास्तान् जातौ रक्षस्त्वजातौ अभिमानेन प्रेम्णा विसर्जयन्तः त्यजन्तः त्याजयन्तश्चेत्यर्थः । अट्टहासैस्सकरताळहासैः । 'हासे सकरताळे स्यादट्टहासः पुमानथ' इति भास्करः । कर्मदेवान्विद्रावयन्तः प्रधावयन्तस्सन्तः । गोपुरद्वारं उन्माथयन्तः विनिपातयन्तः । प्राकारं उल्लङ्घयन्तः तरन्तः । शरणं रक्षक इत्यागतान् । 'शरणं गृहरक्षित्रोः' इत्यमरः । अपश्यन्तः । सुरर्षीणां याच्ञाक्षराणि । 'याच्ञा भिक्षार्थनार्दना' इत्यमरः । प्रार्थनारूपाणि वचांसीति फलितोऽर्थः । अशृण्वन्तस्सन्तः । अमराणां वैतालिका बोधकराः तेषां । 'वैतालिका बोधकरा' इत्यमरः । जिह्वाया रसनायाः छेदं आज्ञापयन्तस्सन्तः चाराणां चरणानां अवकृन्तनं छेदनं अवपूर्वात् कृती छेदन इति धातोर्ल्युट्प्रत्ययः । मौहूर्तिकानां कार्तान्तिकानां । चपेटाभ्यां विस्तृताङ्गुळिपाणिभ्यामाघातं ताडनं कपोलेष्विति भावः । 'पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुळौ' इत्यमरः । अक्षरलेखिनां लिपिकाराणां अङ्गुळीनां छेदनं । अमात्यानां मन्त्रिणां । 'मन्त्री धीसचिवोऽमात्य' इत्यमरः । आस्यस्य मुखस्य विदारणं विदळनम् । 'वक्त्रास्ये वदनं तुण्डं' इत्यमरः । आज्ञापयन्तस्सन्त इति पूर्वेणान्वयः । प्रतिमारूपाणि दैवतानि शिवविष्ण्वादिप्रतिकृतीरित्यर्थः । भञ्जयन्तः स्फोटयन्तः आलेख्ये चित्रफलके समर्पितं विन्यस्तं चित्ररूपतयेति भावः । सुराणां पराक्रमं शौर्यम् । 'शौर्योद्योगौ पराक्रमौ' इत्यमरः । अवमार्जयन्तः विनाशयन्तः सन्तः । अशरणं रक्षकरहितं अत एव हन्यमानं यत्प्राणिजालं तस्य रक्तधाराभिस्सिक्तम् । अग्रचरणयोर्गृहीत्वा अग्रचरणग्राहमाकृष्यमाणानि यानि मुनिजनानां शरीराणि तैस्सम्मृष्टं शोधितम् । अनुपदं पदेपदं । वीप्सायामव्ययीभावः । दन्दह्यमानानि अतिशयेन भस्मीक्रियमाणानि या-

पितं, अपकृष्यमाणकुलपालिकाजनाहन्यमानमुखवाद्यनादमेदुरं, अपहृतसर्वस्वदीनजनाक्रोशजयाशीर्वचोमुखरं, आकस्मिकपतदशनिनिर्घोषनिर्वर्तितलोहयन्त्रनिनादमङ्गळं, अभितःपतदुल्कासहस्रदीपमालापरिष्कृतं, अनुप्रविश्य नगरं; अभिवन्द्य पुरोधसं भार्गवं, अपक्रान्तहर्यक्षमेरुगुहासधर्मां सुधर्मामध्यासाञ्चक्रिरे । आसीनाः क्षणममरसभान्तरे, परिष्वज्यमानाः परस्परं, प्रशस्यमाना वन्दिमागधैः, अभिनन्द्यमानाः कुलवृद्धैः,

---

नि देवतागाराणि देवालयास्तेषां धूमेन धूपितं सञ्जाततापम् । तापपर्यायाद्धूपशब्दात्तदस्य सञ्जातमित्यनेनेतच्प्रत्ययः । अपकृष्यमाणाः आकृष्यमाणा ये कुलपालिकाजनाः कुलस्त्रीजनाः । 'कुलस्त्री कुलपालिका' इत्यमरः । ताभिराहन्यमानानि ताड्यमानानि यानि मुखान्येव वाद्यानि वाद्यस्थानापन्नानि तेषां निनदेन शब्देन मेदुरं व्याप्तम् । 'सान्द्रः स्निग्धस्तु मेदुरः' इत्यमरः । अपहृतानि विनाशितानि सर्वाणि स्वानि द्रव्याणि यैस्तथाविधाश्च ते दीनजनाश्चेति कर्मधारयः । तेषां आक्रोशैः रोदनैः सहितानि यानि जयाशिषां वचांसि । मुषितैकदेशप्रत्यर्पणायेति भावः । तैर्मुखरम् । यद्वा अपहृतसर्वस्वानां विनष्टद्रव्याणां दीनानां स्वाभाविकदरिद्राणां च यथासङ्ख्यं आक्रोशैः रोदनैः जयाशिषां वचोभिश्च मुखरं सशब्दमित्यर्थः । आकस्मिकं अज्ञातहेतुकं यथा तथा । पतन्तः ये अशनयः शम्भवः । 'शतकोटिस्स्वरुश्शम्भुर्दम्भोळिरशनिर्द्वयोः' इत्यमरः । तेषां निर्घोषेण ध्वनिना निर्वर्तितः अनुष्ठितः लोहयन्त्राणां शतघ्नीनां निनादेन शब्देन । राज्ञां पुरप्रवेशनिर्गमकालयोर्निर्वर्तनीयेनेति भावः । तेन मङ्गळम् । अभितः पतन्ति उल्कानां निर्गतज्वालानाम् । 'उल्का स्यान्निर्गतज्वाला' इत्यमरः । सहस्राण्येव ये दीपाः तेषां मालाभिः राजिभिः परिष्कृतमलङ्कृतं नगरममरपुरं अनुप्रविश्य । पुरोधसं पुरोहितं भार्गवं शुक्राचार्यम् । 'उशना भार्गवः कविः' इत्यमरः । 'पुरोधास्तु पुरोहित' इति च । अभिवन्द्य नमस्कृत्य । अपक्रान्ताः अपगताः हर्यक्षाः सिंहाः यस्यास्सा । 'हर्यक्षः केसरी हरिः' इत्यमरः । तथाभूता या मेरोस्सुवर्णाद्रेः गुहा कन्दरः तया सधर्मां सदृशीं सुधर्मां देवसभायां अध्यासाञ्चक्रिरे तस्थुरित्यर्थः । अधिशीङ्स्थासां कर्मेति कर्मत्वं अधिपूर्वादास उपवेशन इति धातोर्दयायासश्चेत्याम् । कृञ्चानुप्रयुज्यत इति कृधातोरनुप्रयोगः ततो लिडिति प्रक्रिया बोध्या । पुरप्रवेशानन्तरं पुरे दानवैरनुष्ठितं वृत्तं वर्णयितुमारभते ॥ **आसीना इति** ॥ अमरसभायाः सुधर्माया अन्तरे क्षणं आसीनाः वर्तमानाः । परस्परमितरेतरं अभिष्वज्यमानाः आश्लिष्यमाणाः । वन्दिभिः स्तुतिपाठकैः मागधैः घाण्टिकैः । अनयोरीषद्विशेषः अतो न पौनरुक्त्यम् । 'वन्दिनः स्तुतिपाठकाः' 'चा-

अनुगृह्यमाणा भार्गवेण, निष्क्रम्य ततो बहिरचिरपरिगृहीतविजयेन्दिरापरिरम्भसम्भृतकुचकुम्भकुङ्कुमक्षोदैरिव सेनारजोभिरभिरञ्जिताः, निरङ्कुशचङ्क्रम्यमाणविशृङ्खलदैत्यसङ्घबाहाबलोन्मुक्तहाहारवमालक्ष्य सर्वतो नगरं, उल्लोलजलधिकल्लोलहल्लोहलशमनशीलया वेलयेव तनीयस्या विरमतेति कयाचिदेवाज्ञया चिरलब्धसुस्थमिव पर्यवस्थाप्य नगरं, क्षणादाघोषयामासुरास्कन्दनोपरमजयकाहळीम् । आदिष्टाश्च दिक्पालपदेष्वसुरवराः स्वयमनतिक्रामन्तो धर्ममौशनसं, अनुलङ्घमाना बलेः शासनं, अनुवर्तमाना हिरण्याक्षदर्शितां स-

---

क्रिका घाण्टिकास्समाः, स्युर्मागधाः' इति सर्वत्रामरः । प्रशस्यमानाः स्तूयमानाः कुलवृद्धैरभिनन्द्यमानाः श्लाघ्यमानाः । भार्गवेणानुगृह्यमाणाः अनुग्रहभाजनीकृताः । ततः सुधर्मातः बहिः निष्क्रम्य निर्गत्य अचिरं तत्कालं परिगृहीता स्वीकृता या विजयेन्दिरा तस्याः परिरम्भेण आलिङ्गनेन सम्भृतानि सम्पादितानि कुचकुम्भयोस्सम्बन्धीनि यानि कुङ्कुमानि अङ्गरागविशेषाः तेषां क्षोदैश्चूर्णैरिव स्थितैः । 'अथ कुङ्कुमं काश्मीरजन्माग्निभवं' 'चूर्णे क्षोदस्समुत्पिञ्जपिञ्जलौ' इति चामरः । सेनानां रजोभिः पांसुभिरभिरञ्जिताः व्याप्ताः । असुरा इति शेषः । सर्वतः परितः निरङ्कुशं लक्षणया निर्भयं यथा तथेत्यर्थः । चङ्क्रम्यमाणाः अतिशयेन चरन्तः विशृङ्खलाः निर्निरोधाः ये दैत्यानां सङ्घाः तेषां बाहाः भुजाः । 'बाहाबाहुभुजास्स्मृता' इत्यमरसुधायां दामोदरः । तद्बलैः शौर्यैरुन्मुक्तः कृतः हाहारवो यस्मिंस्तत् । नगरं आलक्ष्य दृष्ट्वा । उल्लोला महान्तः ये जलधेः कल्लोलाः तरङ्गाः । 'महत्सूल्लोलकल्लोलौ' इत्यमरः । तेषां हल्लोहलः वेगः तस्य शमनं विलोपनं शीलं स्वभावो यस्यास्तया । तनीयस्या सूक्ष्मया वेलया मर्यादयेव स्थितया । 'वेला कालमर्यादयोरपि' इत्यमरः । विरमत तूष्णीम्भवत इति कयाचिद्यस्यकस्यचित्सम्बन्धिन्येत्यर्थः । आज्ञया निदेशेन । आस्कन्दनाद्बलादाक्रमणादुपरमः तूष्णीम्भावः स च जयश्चेत्येतयोर्बोधिका च सा काहळी चेति शाकपार्थिवादित्वात्समासः । तां काहळीं शङ्खवाद्यं आघोषयामासुः नादयामासुः । अथ तेषामाधिकारिकक्रमानाह ॥ **आदिष्टा इति** ॥ दिक्पालानां पदेषु स्थानेषु आज्ञप्ता नियुक्ताः स्वयं औशनसं उशनसा शुक्रेण प्रणीतं धर्ममनतिक्रामन्तः अत्यजन्तः अनुलङ्घमाना इति यावत् । बलेः शासनं निदेशं अनुलङ्घमाना अनुत्सृजन्तः अनतिक्रामन्त इति यावत् । हिरण्याक्षेण प्राचीनासुरेण दर्शितां सरणिं मार्गमनुसृत्य वैदिकं वेदोक्तं पन्थानं अवलुम्पन्तः छिन्दन्तः । अप्रमत्ताः असुरा इति शेषः । स्वं

रणि, अवलुम्पन्तो वैदिकं पन्थानं, अप्रमत्ताः स्वं स्वमाधिकारमनुपालयाञ्चक्रिरे।

देवद्विषश्चिरतरं निरयेषु मग्ना-
नुत्तार्य दैवतपदेषु निवेशयन्तः।
रक्षोघ्नमन्त्रकुशलाञ्छतशो महर्षीन्
प्रत्याक्षिपन्नरकवेश्मसु दैत्यदूताः ॥ ४९ ॥

ब्रह्मर्षयोऽपि दनुजेन्द्रसभां प्रविष्टा
मन्त्राक्षराणि मघवादिपदाङ्कितानि।
ऊहेन दानवपदान्युपवेशयन्तो
हर्षाय पेठुरसुरेन्द्रपुरोहितानाम् ॥ ५० ॥

---

स्वीयं अधिकारं प्रक्रियां 'प्रक्रिया त्वधिकारः स्यात्' इत्यमरः। अनुपालयांचक्रिरे पालयामासुः। स्वर्गसाम्राज्यलाभानन्तरं असुराः किं कुर्वन्तीत्यत आह ॥ **देवेति** ॥ दैत्यानां दूताः सन्देशहराः चिरतरं निरयेषु नरकेषु। 'निरयो दुर्गतिस्त्रियां' इत्यमरः। मग्नान् स्थितानिति तात्पर्यार्थः। देवानां द्विषोऽसुरानित्यर्थः। उत्तार्य उत्तरणं कृत्वा दैवतानां मरुद्वसुप्रभृतीनां पदेषु स्थानेषु निवेशयन्तः स्थापयन्तस्सन्तः। रक्षांसि यातूनि घ्नन्तीति रक्षोघ्नाः ते च ते मन्त्राश्च। 'रक्षोहणोवलगहन'इत्यादिमन्त्राः तेषु कुशलान् समर्थान्। शतशः अनेकशः अनेकानित्यर्थः। महान्तश्च ते ऋषयश्चेति कर्मधारयः। तान् नरका एव वेश्मानि सदनानि तेषु प्रत्यक्षिपन् पातयामासुः। स्वाभ्युदयकाले स्वीयान् के वा नोद्धरन्तीति भावः। केचन महर्षयोऽपि तदनुकूला एव बभूवुरित्याह ॥ **ब्रह्मेति** ॥ ब्रह्मर्षयोऽपि दनुजानामसुराणामिन्द्रस्य बलेः सभां सुधर्मापरपर्यायामिति भावः। प्रविष्टास्सन्तः मघवादिपदैरिन्द्रादिवाचकपदैरङ्कितानि चिह्नितानि सहितानीत्यर्थः। यानीति शेषः। मन्त्राणां अक्षराणि वर्तन्त इति शेषः। तेषामक्षराणां स्थान इति शेषः। ऊहेन दानववाचकानि च तानि पदानि च उपवेशयन्तः प्रक्षिपन्तस्स.

ऊहो नाम मन्त्रस्थप्रातिपदिकविभक्तिस्थाने आदेशवत्क्रतुकालोपयोगिप्रातिपदिकविभक्तिवचनान्तरप्रक्षेप इति मीमांसकाः। यथा इन्द्राय त्वा जुष्टं निर्वपामीति मन्त्रे इन्द्रायेत्यस्य स्थाने सूर्यायेति अग्नय इत्यस्य स्थाने सोमायेति सूर्याग्निसोमपदानामन्यतमस्योचितप्रक्षेपः तिङन्तस्थलेऽपि स नो मृडयतां तौ नो मृडयेतां ते नो मृडयन्तामित्यादि। तथाच इन्द्रो मे बले श्रित इति मन्त्रे इन्द्रपदस्थाने बलिपदं एवं तन्नो वरुणो राजेति मन्त्रे वरुणपदस्थाने शम्बरपदप्रक्षेपं असुरेन्द्रस्य पुरोहितानां हर्षाय पेठुः जेपुः। स्वक्षेमलाभार्थं के वा अकार्यं कर्तुं ने-

विद्वांसः प्रथमेऽभवन्विवसनास्सौत्रान्तिकास्साधवो
मुख्या माध्यमिकास्त्रिलोकगुरवश्चार्वाकतन्त्रे स्थिताः ।
पाषण्डा निगमागमव्यसनिनः कालः कलिश्शाश्वतो
दैत्ये शासति देवराज्यमजनि त्रैलोक्यमित्थं तदा ॥

अपक्रान्तश्च तदा शचीपतिः, अभिगम्य सह सर्वैस्सुपर्वभिरखिलभुवनसुन्दरं मन्दरं शैलं अनुज्ञया बृहस्पतेः अन्त-

हन्त इति भावः । तदानीं नास्तिकानामेव प्राबल्यमित्याह ॥ **किञ्चेति** ॥ दैत्ये दितिपुत्रे बलौ । देवराजस्य इन्द्रस्य कर्म देवराज्यं यद्वा देवानां राज्यमाधिपत्यं राज्ञः कर्म भावो वा राज्यमिति वृत्तेः । शासति अनुतिष्ठति सति । चार्वाकाणां प्रत्यक्षैकप्रामाण्यवादिनां तन्त्रे शास्त्रे स्थिताः विवसना दिगम्बराः देहात्मवादिनः प्रथमे श्रेष्ठा अभवन्नित्यर्थः । 'तन्त्रं प्रधाने सिद्धान्त' इत्यमरः । सौत्रान्तिकाः इन्द्रियात्मवादिनः एते तदा साधवः सभ्या अभवन्नित्यर्थः । यथा आस्तिकानां धर्मशास्त्रज्ञा इति भावः । माध्यमिकाः आलयविज्ञानधारात्मवादिनः एते मुख्याः प्रथमगणनीयाः । त्रिलोकगुरवः तत्त्वोपदेष्टार आसन् । अत्रेदं बोध्यं नास्तिकानां बुद्धशिष्यत्वाद्बौद्धा इति संज्ञा । बुद्धस्य चत्वारः शिष्याः सौत्रान्तिको वैभाषिको योगाचारो माध्यमिक इति । तथा सुगतस्य शिष्यास्सौगताः तेषामार्हता इति नामान्तरम् । एत एव तत्र तत्र नास्तिका इति चार्वाका इति क्षपणका इति लोकायतिका इति बहुभिर्नामभिः व्यवह्रियन्ते । तेषां परस्परवैलक्षण्यादिकं ग्रन्थविस्तरभयात्प्रकृतानुपयोगाच्च न लिख्यत इति । पाषण्डाः शिवविष्ण्वाद्यन्यतमैकोत्कृष्टत्ववादिनः । तथा चोक्तं 'शिवविष्णुगणाध्यक्षसूर्यदुर्गासु कस्यचित् । एकस्योत्कर्षवादी यस्स पाषण्ड इतीरित ॥' इति । अमरकारस्तु 'पाषण्डास्सर्वलिङ्गिन' इत्याह । निगमागमयोः वेदशास्त्रयोः व्यसनिनः शास्त्रव्यसनं शास्त्रपरिशीलनमेव तद्वन्त इति तात्पर्यार्थः । अभवन्निति योजना । कलिकालस्तुरीययुगकाल एव । 'चतुर्थेऽपि युगे कलिः' इत्यमरः । शाश्वतः 'शाश्वतस्तु ध्रुवो नित्यः' इत्यमरः । स्थिरः अभवन् । देवराज्यं देवसाम्राज्यं दैत्ये दितिपुत्रे बलौ शासति सति पालयति सति । त्रिलोका एव त्रैलोक्यं त्रिभुवनमित्यर्थः । इत्थमुक्तप्रकारमभवत् तस्थौ परीक्षिदादिमहाराजेषु पालयत्स्वपि यः कलिः प्रवर्तितुमुत्सहते स कलिर्दैत्ये शासति सति प्रवर्तत इति किमु वक्तव्यमिति भावः । दैत्यवृत्तान्तमुपवर्ण्य इदानीं देववृत्तान्तं वर्णयितुमारभते ॥ **अपेति** ॥ तदा तत्काले अपक्रान्तः प्रस्थितः शचीपतिरिन्द्रस्सर्वैस्सुपर्वभिः देवैः सह निखिलभुवनेषु सुन्दरं दर्शनीयं मन्दरमद्रिं बृहस्पतेर्गुरोराज्ञया अभिगम्य प्राप्य क्वचिदन्तर्हित एव तिरोहित एव वर्षाणां शरदां गणान् सङ्घानतिवाह-

**हिंत एव कतिचिदतिवाहयामास वर्षगणान् ॥**

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकं-
शतप्रबन्धनिर्वाहकश्रीमन्महाव्रतयाजिश्रीमदप्पयदीक्षित-
सोदर्यश्रीमदाच्चान्दीक्षितपौत्रेण नारायणदीक्षितात्मजेन
श्रीभूमिदेवीगर्भसंभवेन श्रीनीलकण्ठदीक्षितेन
विरचिते श्रीनीलकण्ठविजये चम्पुकाव्ये
प्रथम आश्वासः ॥

---

यामास गमयामासेत्यर्थः । महदप्रियकारी को वा निर्विशङ्कः परेषां दृग्भाजनं भवितुमुत्सहत इति भावः ॥

इति श्रीमद्भारद्वाजवेल्लालमहादेवसूरिविराचिते नीलकण्ठविजयव्याख्याने
विबुधानन्दाख्याने प्रथमाश्वासविवृतिः ॥

## अथ द्वितीयाश्वासः ॥

ततश्शतमखादयो युधि विरोधिभिर्निर्जितां
श्रियं पुनरभीप्सवः क्रतुभुजो भुजोपार्जिताम् ।
विचित्रमणिसुन्दरं विपुलकन्दरं मन्दरं
समेत्य तपसानयन्निमिषवत्सहस्रं समाः ॥ १ ॥

तत्र च वसतां तपोधनानामध्वरहाविर्भागमपहरत्सु दूतमुखेन दानवेषु, अकाले वा यत्नमयज्ञेन वा रहसि प्रदातुमभ्यर्थनयाप्यसम्मन्यमानेषु शास्त्रैकशरणेषु तापसेषु, तप्यमानाः

यदीयचरणाम्भोजभजनाद्वासवादयः ।
तेरुर्दुःखार्णवं देवास्तं वन्दे परमेश्वरम् ॥

ननु कान्दिशीका देवाः किं कृतवन्त इति चेत्तदाह ॥ **तत इति** ॥ शतं मखाः यागाः यस्य सः इन्द्रः स आदिः येषां ते । क्रतुभुजः आहुतिभुजः देवाः । युधि युद्धे । 'अस्त्रियां संयत्समित्याजिसमिद्युधः' इत्यमरः । विरोधिभिः अरिभिः । 'असुहृत्प्रत्यवस्थातृप्रतिपक्षविरोधिनः' इत्यमरः । निर्जितां विजितां अपहृतामिति यावत् । श्रियं राज्यलक्ष्मीं पुनरप्याप्तुं सम्पादयितुमिच्छन्तः अभीप्सवस्सन्तः विचित्रैरनेकविधैर्मणिभिः पद्मरागादिभिः सुन्दरं दर्शनीयं विपुलाः विशालाः कन्दराः दर्यः यस्मिन् तम् । 'दरी तु कन्दरो वाऽस्त्री' इत्यमरः । मन्दरमद्रिं समेत्य प्राप्य सहस्रं सहस्रसङ्ख्याकाः समाश्शरदः । 'हायनोऽस्त्री शरत्समा' इत्यमरः । तपसा ऐकाग्र्येण 'मनसश्चेन्द्रियाणामप्यैकाग्र्यं परमं तप' इति स्मृतेः । निमिषेण तुल्यं निमिषवत् । तेन तुल्यं क्रिया चेद्वतिरिति वतिप्रत्ययः । अनयन् गमयामासुरित्यर्थः । विनष्टां श्रियं प्राप्तुं विवेकिनः के वा न यतन्त इति भावः । इदानीमाहुतिभुजां वृत्तमुपवर्ण्य यज्ञभागरहितानां देवविशेषाणां वृत्तान्तं वर्णयति ॥ **तत्र चेति** ॥ तत्र वसतां तपः दानयज्ञादि धनं येषां तेषां च अध्वरेषु यागेषु यानि हवींषि तेषां भागं दानवेषु दूतेन भृत्येनैव मुखेन अपहरत्सु सत्सु । शास्त्रं 'यश्शास्त्रविधिमुत्सृज्य वर्तते कामकारतः । न स सिद्धिमवाप्नोति' इत्यादिशास्त्रम् । एकं मुख्यं शरणं रक्षितृ येषां तेषु तापसेषु ऋषिषु अभ्यर्थनया प्रार्थनयापि अकाले अनुचितकाले वा अयज्ञेन स्वाहाकारस्वधाकारऋत्विक्सदस्यादिव्यवस्थारहिततूष्णींहविःप्रक्षेपादिलक्षणकर्मणा वा । रहसि विविक्तदेशे दातुं असम्मन्यमानेषु अननुमन्यमानेषु सत्सु । क्षुधा बुभुक्षया । 'अशनाया बुभुक्षा क्षुत्' इत्यमरः । तप्यमानाः पीड्यमानाः विबुधाः

क्षुधा विबुधाः, हुत्वा हवींषि हुतवहे, दत्तानि तेनैव पुनस्तान्युपयुञ्जानाः कालं महान्तमतिवाहयाञ्चक्रिरे। अपरे पुनः केचिदतिवेलश्रद्धामात्रशरणानधिगम्य मूर्खान् अमुनैव शरीरेण दिवमारोपयामो भवतस्सबान्धवान्, अत्रैवानीय दर्शयिष्यामस्सुरसुन्दरीरिति प्रलोभयन्तः, पशुपक्षिसुराकुम्भपायसापूपप्रचुरानलभन्त महोपहारान्। अपि च पुनरवरूढान् कर्मक्षये दिवः कर्मदेवानावृत्य 'किं कुर्वन्ति दानवाः, किं वदन्त्यस्मान् कथाप्रसङ्गेषु, किमितिवृत्तमेषामनुमतं पितामहेन, किं वा न तदवतीर्णमद्यापि तस्य कर्णपथं, किमाहुरसुरमौहूर्तिकाः, कीदृशो भार्गवस्य वृत्तान्तः, कथमास्ते वैजयन्तः, कस्य वशे नन्दनो-

---

सुराः हुतवहे लौकिकाग्नौ हवींषि दत्वा प्रक्षिप्येत्यर्थः। धातूनामनेकार्थत्वात् । पुनः तेन अग्निना दत्तानि वितीर्णानि हवींष्येव उपभुञ्जानाः अभ्यवहरन्तस्सन्तः। महान्तं बहुं कालं अतिवाहयाञ्चक्रिरे क्षपयामासुरित्यर्थः। अपरे केचित्पुनः अतिवेलं नितान्तं श्रद्धामात्रं आस्तिक्यबुद्धिमात्रं शरणं रक्षितृ येषां ते तान् मूर्खान् मूढान् अवैदिकानिति शेषः । 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः' इत्यमरः । सबान्धवान् भवतः अमुना शरीरेण दिवं स्वर्गं आरोपयिष्यामः अत्र लोक एव सुरसुन्दरीरानीय सांनिध्यं प्रापय्य दर्शयिष्याम इति प्रलोभयन्तः प्रतारयन्तस्सन्तः । सुराकुम्भः मद्यभाण्डं स च पायसं च अपूपाश्च ते एतैः प्रचुरान् बहुळान् उपहारान् उपायनानीत्यर्थः। 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः। अलभन्त प्रापुः। अन्नाभावे के वा देहाभिमानिनः परान्न वञ्चयन्तीति भावः॥ **अपि चेति** ॥ कर्मणां स्वानुष्ठितसत्कर्मजन्यापूर्वाणां क्षये नाशे सति दिवः। ल्यब्लोपे कर्मणि पञ्चमी। दिवं विहायेत्यर्थः। पुनरवरूढान् पुनरापततः भूमिं प्रतीति शेषः । कर्मदेवान् पूर्वोक्तलक्षणान् आवृत्य परिवृत्येत्यर्थः । दानवाः किं कुर्वन्ति कथानां लोकवृत्तानां प्रसङ्गेषु प्रसक्तिषु अस्मान् किं वदन्ति कथंभूतान् कथयन्तीत्यर्थः। एषां अस्माकं वृत्तं किमिति किंभूतमिति वदन्तीत्यस्यानुषङ्गः । पितामहेन ब्रह्मणा अनुमतं किं अङ्गीकृतं किं एतदित्यस्य गम्यमानत्वादप्रयोगः। अथवा अनुमतं किं विदितं किमित्यर्थः। किंवा आहोस्वित् । अद्यापि तस्य ब्रह्मणः कर्णपथं श्रोत्रदेशं तद्वृत्तं नावतीर्णं न प्राप्तमित्यर्थः। असुराणां मौहूर्तिकाः मुहूर्तज्ञानिनः किमाहुः किं ब्रुवन्तीत्यर्थः । भार्गवस्य उशनसः वृत्तान्तः कीदृशः कथम्भूतः वैजयन्तः इन्द्रप्रासादः कथमास्ते वर्तते नन्दनसंज्ञकं उद्या-

द्यानं, उद्भ्रान्तश्चतुर्दन्त इति श्रुतं, उच्चैःश्रवसः प्रवृत्तिमेव नोपलभामहे' इत्यनुयुञ्जानाश्चकितचकितमवलोक्य समन्ततः, किञ्च ब्रह्मलोकगमनोचितान् महर्षीन्मुमूर्षतः परीत्य परिहरन्तः प्राणक्लेशमपि वरदानैः, निवेदयत प्रसङ्गेन नः कष्टामिमां दशां भगवति पितामहे, न विस्मरतास्मदभ्यर्थनामध्यात्मविचारव्यासङ्गेनेत्युद्बोधयन्तः, स्वयमस्वप्नतया स्वप्नदृशस्तपोधनान् परिपृच्छन्तः पर्यवसानं मुनिशापस्य, निन्दन्तः स्वानि जन्मानि, निश्वसन्तो दीर्घमुष्णञ्च मुहुर्मुहुः वलाहकमिव चातकाः, वाचस्पतेरागमनमाकांक्षन्तश्चिरमवतस्थिरे।

अत्रान्तरे सुरगुरुर्दुरितं सुराणां
अल्पावशेषमवयन् प्रणिधानयोगात्।

---

नं उपवनं कस्य वशे अधीनतायाम्। चत्वारः दन्ताः यस्य सः चतुर्दन्तः ऐरावतः उद्भ्रान्तः निर्मद इति श्रुतम्। 'प्रभिन्नो गर्जितो मत्तस्समावुद्वान्तनिर्मदौ' इत्यमरः। उच्चैःश्रवसः हयस्य प्रवृत्तिं वृत्तान्तं नोपलभामहे न जानीमहे इति समन्ततः अवलोक्य चकितं सभयं यथा तथा। अनुयुञ्जानाः पृच्छन्तस्सन्तः ब्रह्मलोकस्य गमनं तस्योचितानर्हान् मुमूर्षतः मर्तुमिच्छतः। ब्रह्माणश्च ते ऋषयश्चेति कर्मधारयः। तान् परीत्य आवृत्य वराणां दानैः प्राणानां प्रयाणं देहेन वियोगः तेन यः परिक्लेशः बाधा तमपि परिहरन्तः वारयन्तस्सन्तः। प्रसङ्गेन प्रसक्तानुप्रसक्त्या। दृष्टामिमां वर्तमानां नः अस्माकं दशां अवस्थां भगवति माहात्म्यवति। 'भगश्श्रीकाममाहात्म्यवीर्य' इत्यमरः। पितामहे ब्रह्माणि विषये निवेदयत विज्ञापयत आत्मन्यध्यात्मं आत्मविषयक इति यावत्। यः विचारः ऊहापोहात्मकमानसक्रियाविशेषः। तस्य व्यासङ्गेन सम्बन्धेन अविच्छेदेनेति यावत्। अस्मत् अस्माकं अभ्यर्थनां प्रार्थनां न विस्मरत विस्मरणं मा कुरुतेत्यर्थः। इतीत्थमुद्बोधयन्तः प्रेरयन्तस्सन्तः स्वयं अस्वप्नतया स्वापरहिततया स्वप्नान् पश्यन्तीति स्वप्नदृशः स्वप्नाध्यायविदः स्वप्नद्रष्टॄनिति यावत्। मुनिशापस्य मुनिदत्तशापस्य पर्यवसानं अवधिं परिपृच्छन्तस्सन्तः। स्वानि स्वीयानि जन्मानि उत्पत्तीः निन्दन्तः गर्हयन्तस्सन्तः। दीर्घमुष्णं च निश्वसन्तस्सन्तः। मुहुर्मुहुः चातकाः पक्षिविशेषाः वलाहकमिव वारिवाहमिव। वाचस्पतेः जीवस्य। 'जीव आङ्गिरसो वाचस्पतिश्चित्रशिखण्डिजः' इत्यमरः। आगमनं काङ्क्षन्तः इच्छन्तस्सन्तः। अवतस्थिरे ऊषुः। समवप्रविभ्यस्स्थ इत्यात्मनेपदं लिट्। भगवद्भजनवशेन क्षालितपापराशीन् सुरान् प्रत्यागत्य गुरुः कुशलाद्यपृ-

अभ्येत्य निर्जरवरैरभिवन्द्य भक्त्या
पर्यावृतस्सदसि किञ्चिदिदं बभाषे ॥ २ ॥

'दिष्ट्या कुशलिनो वश्चिरादद्राक्षम् । दिष्ट्या चोत्तीर्णप्रायोऽयमापदर्णवः । दिष्ट्या च दुर्लभमिदं तपोवनमहो भवद्भिरासादितम् । वाराणसीव भारते वर्षे दयितं गौरीदयितस्य परममिदमेवायतनमिळावृते । आरसातलादा च शान्त्यतीतकला-

---

च्छादित्याह ॥ अत्रान्तर इति ॥ अत्रान्तरे अस्मिन्नवसरे सुराणां गुरुः हितोपदेष्टा बृहस्पतिः । प्रणिधानस्य ध्यानधारणसमाधित्रयस्य योगात् सन्नहनात् अवलम्बनादिति यावत् । यद्वा प्रणिधानं ध्यानधारणसमाधित्रयमेव योगः उपायः तस्मादित्यर्थः । उक्तार्थस्तु पातञ्जलसूत्रव्याख्याने लिखितः । 'ध्यानं तथा धारणं च समाधिश्चेति तत्त्रयम् । प्रणिधानामिति प्राहुर्योगसिद्धान्तकोविदाः ॥' इति वचनं च । 'योगस्सन्नहनोपाय' इत्यमरश्च । सुराणां दुरितं अल्पेन अल्पांशेन अवशेषं अवशिष्टं अवयन् विदन् सन् अभ्येत्य आगत्य मन्दरामिति शेषः । निर्जराणां देवानां वरैः श्रेष्ठैः अभिवन्द्यमानः नमस्क्रियमाणः तैरेव पर्यावृतः परिवृतस्सन् । अभिवन्द्य भक्त्येति पाठे निर्जरवरैः भक्त्या अभिवन्द्य पर्यावृत इत्यन्वयः । सदसि सभायां किञ्चिदिदं वक्ष्यमाणप्रकारं वचः बभाषे उवाच । भाषणप्रकारमाह ॥ दिष्ट्या कुशलिन इति ॥ दिष्ट्या दैवेन कुशलिनः क्षेमवतः वः युष्मान् चिरात् बहुकालात् अद्राक्षं अपश्यम् । अयं मुनिशापलक्षणः आपदेव अर्णवश्च दिष्ट्या दैवेनोत्तीर्णप्रायः किंचिदवशेषं यथा तथा तीर्ण इत्यर्थः । दुर्लभं दुष्प्रापं इदं तपोयोग्यं वनं दिष्ट्या भवद्भिरासादितं प्राप्तम् । अहो इत्याश्चर्ये । भारते भरतस्य राज्ञस्सम्बन्धिनि । तस्येदमित्यण्प्रत्ययः । वर्षे धात्रीनवमांशे । 'स्याद्वृष्टौ लोकधात्र्यंशे वत्सरे वर्षमस्त्रियां' इत्यमरः । किंच । महर्षिव्यासरचिते जम्बूद्वीपेऽपि भारतमिति रभसः । 'पुन्नपुंसकयोर्वर्षं जम्बूद्वीपाब्दवृष्टिषु' इति रुद्रः । 'वर्षं स्थानं विदुः प्राज्ञा इमं लोकं च भारतम् ।' इति भारविः । 'उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । वर्षं तद्भारतं नाम भारती यत्र सन्ततिः ॥' इति । वाराणसीव काशीव इळावृते वर्षे इदं मन्दरसंज्ञकं आयतनमेव गौरीदयितस्य उमावल्लभस्य परमत्यन्तं दयितं प्रेमास्पदं आरसातलात् पातालमारभ्येत्यर्थः । 'अधो भुवनपातालबलिसद्मरसातलं' इत्यमरः । आ च शान्त्यतीतकळाभवनात् शान्तिं शान्तिनामकलां अतीता अतिक्रान्ता शान्त्यतीता । तथाभूतायाः कलायाः अतीतशान्तिसंज्ञिकायाः भवनं स्थानं आकाशः तमभिव्याप्येत्यर्थः । आकाशस्य अतीतशान्तिकलाभवनत्वं श्रीमदाचार्यैरुक्तम् । 'भूमौ निवृत्तिरुदिता पयसि प्रतिष्ठा विद्यानले मरुति शान्तिरतीतशा-

**भुवनात्सन्ति महान्ति स्थानानि सर्वागमविदितानि परश्शतानि भवानीपतेः। परं तु मन्दर इव तस्य दृशां न किञ्चन सुन्दरमन्यदायतनम्। अन्यत्र पञ्चतपसोऽपि मुनेरावसथेषु शाम्भवेषु, स्वैरचारी विशिष्यत इति श्रुतमेव भवद्भिरपि वृ-**

---

न्तिः। व्योम्नीति याः किल कलाः कलयन्ति विश्वं तासां हि दूरतरमम्ब पदं त्वदीयम् ॥' इति । पाताळमारभ्य अन्तरिक्षलोकपर्यन्तं शिवस्थानानि सन्तीत्यत्र प्रमाणन्तु 'आकाशे तारकालिङ्गं पाताळे हाटकेश्वरम् । मर्त्यलोके महाकालं' इति पूर्वमेघव्याख्याने महोपाध्यायोदाहृतवचनम् । यद्वा केन अग्निना लं खण्डनं प्रळयकालिकाग्निना ताप इति यावत् । इतः प्राप्तः कलः सङ्कर्षणाग्निप्रयोज्यतापो यैस्ते तथा । इतकलानतिक्रान्ताः अतीतकलाः दहरशाण्डिल्योपासकाः शान्त्वेति तृतीयातत्पुरुषः । तेषां भवनं सत्यलोकः तमभिव्याप्येत्यर्थः । 'को ब्रह्मात्मानिलार्काग्निशमनस्पर्शकेकिषु' इत्येकाक्षरे । 'लः खण्डने त्विष्वादानेस्त्री' इति च नानार्थरत्नमाला । सर्वागमेषु सर्वशास्त्रेषु । विदितानि व्याख्यातानि परश्शतानि अनेकानि । 'परश्शताद्यास्ते येषां परा सङ्ख्या शतादिकात्' इत्यमरः । महान्ति श्लाघ्यानि भवान्याः पतिः शिवः तस्य स्थानानि आयतनानि सन्ति परन्तु तथापि मन्दर इव तस्य शिवस्य दृशां अन्यत् मन्दरातिरिक्तं किंचिदल्पमपि आयतनं सुन्दरं दर्शनीयं न भवतीति शेषः । अन्यत्र शैवक्षेत्राभिन्नप्रदेशेषु पञ्च पञ्चयज्ञरूपाणि तपांसि यस्य सः पञ्चतपाः तस्मात् । अथवा दक्षिणाग्निगार्हपत्याहवनीयसभ्यावसथ्यलक्षणपञ्चाग्निसाध्यं तपः यस्य सः पञ्चतपाः । यद्वा दानयज्ञस्वाध्यायैकाग्र्यानशनव्रतलक्षणानि पञ्चरूपाणि तपांसि यस्य सः पञ्चतपाः । स्वाध्याययज्ञादीनां नारायणोपनिषदि तपस्त्वेन व्यवहारात् । आहोस्वित् पचि विस्तारे इत्यस्मादन्प्रत्ययः । पञ्चं विस्तृतं तपः चान्द्रायणादिलक्षणं यस्य सः पञ्चतपाः । 'तपो लोकान्तरेऽपि च । चान्द्रायणादिधर्मे च न स्त्री शिशिरमाघयोः' इति रभसः । यद्वा तपः व्रतं 'माघे पुमान् व्रते क्लीबे तप' इति नानार्थरत्नकोशात् । तथाच विस्तृतं तपः शिरोव्रतलक्षणं व्रतं आथर्वणिकानां ब्रह्मविद्याभ्यासपूर्वकाले क्रियमाणं यस्य सः पञ्चतपाः । 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णं' इति श्रुतेः । अथवा तपन्त्येभिरिति करणार्थे तपधातोरौणादिकाद्बाहुळकादसुन्प्रत्ययः । स्थण्डिलदिक्चतुष्टये प्रतिष्ठिताः चत्वारोऽग्नयः उपरि सूर्यश्चेति पञ्चसङ्ख्यानि तपांसि तापकारणानि यस्य स्थण्डिलोपविष्टस्य मुनेः

पञ्चतपाः । तस्मादपि शाम्भवेषु शम्भुसम्बन्धिषु आवसथेषु स्थानेषु । 'स्थानावसथवास्तु च' इत्यमरः । स्थित इति शेषः । स्वैरेण अनिरोधेन स्वच्छन्देन

द्धमुखात्। अमृतप्राप्तिहेतुश्चायमस्मादृशामिव भवादृशामपि शैलराजः। किं बहुना

कालोऽत्यगादशुभहेतुरुपस्थितं वः
कल्याणमद्य न चिरादिति भासते नः।
उत्तिष्ठतोच्चलत याम तु धाम धातुः
उष्ट्रासिकाभिरधुना किमनर्थिकाभिः॥ ३॥'

इति प्रवृत्तया भाविमहासंविधानलभ्ययापि भाग्यवशादधुनैव स्वतोलब्धया सुधयेव वाचा वाचस्पतेराप्यायितस्सुरपतिरिदमाचचक्षे। 'अद्यैतत्पावनमजनि तपोवनं, अद्य नस्तपांसि परिपेचिरे, प्रशेमुरद्य नः कलुषाणि, पर्युपास्थिषत म-

---

वा चरितुं शीलं यस्य सः स्वैरचारी उत्सृष्टश्रुतिमार्गः कामिजन इति यावत्। 'मन्दस्वच्छन्दयोस्स्वैर' इत्यमरः। विशिष्यते विशिष्टः क्रियते। तथोक्तं सूतसंहितायां शिवमाहात्म्यखण्डे चिदम्बरमाहात्म्ये। 'अन्यत्र पञ्चतपसो मुनेर्वाताशनादपि। श्रीमद्दक्षिणकैलासे स्वैरचारी विशिष्यते' इत्यादि। वृद्धानां मुखादपि भवद्भिरपि श्रुतमेव विदितशिवक्षेत्रमाहात्म्यानां भवतामेतद्विषयेऽस्माभिः किं वक्तव्यमिति भावः। अयमावासभूतः शैलराजश्च अस्मादृश इव भवादृशामपि अमृतस्य। 'अमृतं दिवि खे मोक्षे यज्ञशेषे सुराशने' इति विश्वः। प्राप्तौ हेतुः कारणं अस्मद्विधानां मोक्षकारणं भवद्विधानां सुधाप्राप्तिकारणमिति भावः॥ **काल इति**॥ अशुभस्यामङ्गळस्य हेतुः निमित्तं कारणं कालः पापफलानुभवकालः अत्यगात् अतिययौ। वः युष्माकं कल्याणं मङ्गळं न चिरात् झडिति उपस्थितं प्राप्तं स्यादिति शेषः। इत्येवमद्येदानीं नः अस्माकं भासते चित्ते स्फुरतीत्यर्थः। उत्तिष्ठत उत्थानं कुरुत चलत गमनं कुरुत धातुर्ब्रह्मणः धाम स्थानन्तु। 'उटजं धाम निवेशः शरणं क्षयः' इत्यमरः। याम लोट्। प्राप्नुवाम अधुना अनर्थिकाभिः प्रयोजनरहिताभिः उष्ट्रस्येवासिकाभिः शिरांस्युन्नमय्य स्थितिभिः किं फलं न किमपीत्यर्थः। गुरुवचनात्सन्तुष्टो देवेन्द्रो गुरुं प्रत्यवोचदित्याह॥ **इतीति**॥ इत्येवं प्रवृत्तया प्रसृतया भावि भविष्यत् यन्महासंविधानं देवासुरसङ्घटनपुञ्जीभवनादिलक्षणं तेन लभ्यया प्राप्तव्यया भाग्यस्य अदृष्टस्य वशात् अधुनैव स्वतः लब्धया सुधयेव स्थितया। 'पीयूषममृतं सुधा' इत्यमरः। वाचस्पतेः गुरोः वाचा आप्यायितः तर्पितः सुरपतिरिदं वचः आचचक्षे जगाद। तत्प्रकारमेवाह॥ **अद्येति**॥ अद्य एतत्तपोयोग्यं वनं तपोवनं पावनं पवित्रं अजनि आसीत्। अद्य नोऽस्माकं तपांसि चान्द्रायणादीनि परिपे-

ङ्गळानि, परथा कथं भवदीयानां पात्रीभवेम शासनाक्षराणाम् ।

चेतो यद्भवतश्चिरन्तनवचस्सन्दर्भगर्भस्थिते
वस्तुन्यस्तमितप्रपञ्चमलिनिम्न्यामज्जमामज्जति ।
तद्दुर्मोचतमोविमोहितमतिष्वस्मास्वकस्मादिदं
सक्तं यत्पशुषु द्विपात्स्वपि ततो धन्या वयं न्यायतः ॥

किं बहुना । अद्य भवत्सम्भावनासम्पादितस्यानन्दस्य परं

---

चिरे पक्वानि बभूवुः फलदानोन्मुखानि बभूवुरिति यावत् । अद्य नः कलुषाणि दुरितानि । 'कलुषं वृजिनैनोऽघमंहोदुरितदुष्कृतं' इत्यमरः । प्रशेमुः नेशुरित्यर्थः । मङ्गळानि शुभानि पर्युपस्थितानि सन्निहितानि आसामासुरिति शेषः । परथा अन्यथा एवं नचेदिति यावत् भवदीयानां युष्मदीयानां शासनं हितोपदेशः तद्रूपाणां अक्षराणां वचसां कथं पात्रीभवेम भाजनभूतास्स्याम अनुकूलकालमन्तरा आगत्य हितं नोपदिशन्त्येव गुरव इति भावः । बृहस्पतिं ब्रह्मनिष्ठत्वेन स्तौति ॥ **चेत इति** ॥ यद्भवतश्चेतः चित्तं कर्तृ चिरन्तनानि पुरातनानि यानि वचांसि श्रुतयः तेषां यःसन्दर्भः । 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥' इत्यादिशास्त्रसिद्धतात्पर्यलिङ्गषट्कलक्षणः । यथोचितपदविन्यासलक्षणो वा आनुपूर्वीलक्षणो वेत्यर्थः । तस्य यः गर्भः अन्तःप्रदेशः तस्मिन् स्थिते वेदैकवेद्य इति भावः । धातुमये देहे आन्तरतमो धातुः मज्जेत्युच्यते तामभिव्याप्यामज्जम् । अथवा आसमन्तात् मज्जं शुद्धमित्यर्थः । टुमस्जो शुद्धाविति धातुः । श्वन्नुक्षन्निति निपातनात्साधुः । अथवा मज्जा सारः आसमन्तान्मज्जा यस्य तदिति विग्रहः । 'सारो मज्जा नरि त्वक्स्त्री' इत्यमरः । सूक्ष्मविषयेषु सर्वत्र प्रवर्तमानमित्यर्थः । 'लज्जावद्राजवन्मज्जा मांससारास्थिसारयोः' इति भागुरिः । 'मज्जोक्तो मज्जया सह' इति द्विरूपकोशः । अस्तं विलापलक्षणं लयं इतः गतः प्रपञ्च एव मलिनिमा मालिन्यं यस्य तत्तथाभूते । प्रपञ्चलयाधिष्ठान इति फलितार्थः । वस्तुनि स्वात्मनि ब्रह्मणि मज्जति लीनं भवति तदात्मना एकीभवतीति फलितार्थः । तदिदं भवच्चित्तं कर्तृ यद्यस्माद्दुःखेन मोचयितुं शक्यं दुर्मोचम् । ईषद्दुस्सुष्वित्यादिना खल्प्रत्ययः । यत्तमः तमोगुणः तेन विमोहिताः विमूढाः कृताः मतयः बुद्धयो येषां ते तथाभूतेषु । द्वौ पादौ येषां ते द्विपादः तेषु पशुषु पशुकल्पेष्विति भावः । अस्मास्वपि अकस्मात् अज्ञातहेतोः निर्निमित्तमिति भावः । सक्तं सङ्क्रान्तमासीत् ततस्तस्माद्वयं न्यायतः युक्तिवशेन धन्याः पुण्यवन्तः । 'सुकृती पुण्यवान् धन्यः' इत्यमरः । महत्सुकृतमन्तरा को वा महदनुग्रहभाजनमिति भावः । प्रकारान्तरेण बृहस्पतिं स्तौति ॥ **अद्येति** ॥

पारमपश्यन्तो वयमस्मदानन्दादनेकशतगुणं भवदानन्दमुपपादयन्तीं भगवतीं श्रुतिमपि न विस्रम्भामहे । आजानतो हि राजानः कदाचिदाक्रामन्ति परान्, आक्रम्यन्ते च तैरिति चक्रनेमिक्रमस्सर्वजनीन एव । तदपि भवदीया .जयन्त्येव न जीयन्त इत्यैकान्त्यमनुसन्दधतो वयमियदपत्रपामहे व्यथामहे च । भवतः पुनरीषत्करोऽस्मदनुग्रहस्संकल्पमात्रसाधनस्य यथा हि भवज्जातीया एव भूमिचरान् दिवमारोपयितुं,

---

अथेदानीं भवत्कृतया सम्भावनया सम्माननया अनुग्रहेणेति यावत् । संपादितस्य कल्पितस्य आनन्दस्य परं पारं पर्यवसानभूमिं अपश्यन्तः अजानन्तः वयं देवाः अस्मत् अस्माकं देवानामानन्दात् भवतः आनन्दं अनेकशतानि गुणाः आवृत्तयो यस्य सः । 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इत्यमरः । तथाभूतमानमुपपादयन्तीं वदन्तीं प्रतिपादयन्तीमिति यावत् । भगवतीं श्रीमतीं श्रुतिं श्रोत्रियस्य चाकामहतस्येति प्राथमिकवाक्यमारभ्य स एको बृहस्पतेरानन्द इत्येतदन्तामानन्दवल्लीमपि न विस्रम्भामहे न विश्वसिमः आम्नायोऽप्यनुभवपराहताश्चेत् कश्श्रद्दधीतेति भावः । लोकस्थितिमनुरुध्याह ॥ आजानेति ॥ जनी प्रादुर्भाव इति धातोः भावे घञ्प्रत्यये जानमिति रूपं भवति जानं च जनिरेव जानमारभ्य आजानं तस्मात् । इतराभ्योऽपि दृश्यन्त इति प्रथमायां तसिः । एवं च.उत्पत्तिमारभ्येत्यर्थः । राजानः कदाचित्परान् रिपून् । 'परोऽरिपरमात्मनाः' इत्यमरः । आक्रामन्ति जयन्तीत्यर्थः । कदाचित्तैररिभिराक्रम्यन्ते जीयन्त इति । चक्रस्य नेमेः अन्तभागस्येव क्रमः रीतिः स्वभाव इति यावत् । 'चक्रं रथाङ्गं तस्यान्ते नेमिस्स्त्री स्यात्प्रधिः पुमान्' इत्यमरः । सर्वजनीनः सर्वजनेषु सिद्धः सर्वजनेषु साधुरिति वार्थः । प्रोत्साहयन् गुरुं प्रत्याह ॥ तदपीति ॥ तदपि तथापि भवदीयाः युष्मत्पक्षवर्तिनः जयन्ति अरीनभिभवन्त्येव । न जीयन्ते न परिभूयन्त इति ऐकान्त्यं प्रसिद्धिम् । 'एकान्तं निश्चिते शैघ्रये प्रसिद्धौ पुन्नपुंसकं' इति रभसः । अनुसन्दधानाः ध्यायन्तस्सन्तः । एकांशमनुसन्दधत इत्येकः पाठः वयं इयदेतावत् अपत्रपामहे लज्जामहे व्यथामहे च संकल्पमात्रं मानमेव । 'संकल्पः कर्म मानसं' इत्यमरः । चित्तस्फुरणमिति यावत् । साधनं अस्मदुद्धरणनिमित्तं यस्य स तथाभूतस्य भवतः पुनः तव तु अस्मत् अस्मासु विषये अनुग्रहः दुःखापनयनलक्षणः प्रसादः ईषत्करः अतीव सुकर इत्यर्थः । यथाहि भवता सजातीयाः भवज्जातीयाः भवादृशा इत्यर्थः । मुनय एव भूमौ चरन्तीति भूमिचराः भूमिष्ठा इत्यर्थः । तान् दिवमारोपयितुं आरोहयितुं त्रिशङ्कुं विश्वामित्र इवेति भावः । दिविचरान् स्वर्गवासिनः भुवमवरोपयितुं अवरो-

दिविचरान् भुवमवरोपयितुं, आस्वादयितुं सुरापगां, आच-मितुं सप्त सागरान्, विफलयितुं महास्त्राणि, विष्टम्भयितुं वि-श्वम्भरमपि प्रगल्भन्ते, तथा श्रुतिशतप्रतिपन्नयाथात्म्ये भव-तो माहात्म्ये दण्डापूपिकान्यायघण्टाघोष एव नश्शरणम् । तदलं पल्लवितैर्वचोभिः, अनुगृहाण स्वयमस्मान्, अस्ति यदि भक्तव्यसनानवलोकनसङ्कल्पः । अथ साजात्याभिमानेन दु-र्वाससः एव वचनं सत्यापयितुमध्यवसायस्तदेहि, यत्र निनी-षसि तत्र नेष्यामहे, येनानुकम्पयिष्यसि तेनानुकम्प्यामहे,

---

हयितुमित्यर्थः । सुरमुनयो नहुषामिवेति भावः । सुरापगां आस्वादयितुं पातुं जह्नुर्यथेति भावः । सप्त सागरान् आचमितुं अगस्त्यो यथेति भावः । महास्त्राणि विफलीकर्तुं व्यर्थयितुं विश्वामित्रयुद्धे वसिष्ठो यथेति भावः । विश्वम्भरं वासुदेव-मपि विष्टम्भयितुं स्तब्धं कर्तुं सनत्कुमारो यथेति भावः । प्रगल्भन्ते समर्था भवन्ति तथा श्रुतीनां शतेन अनेकेन प्रतिपन्नं ज्ञातं याथात्म्यं यथात्मत्वं यस्य तत्तथाभूते भवतः माहात्म्ये महिमनि विषये घण्टाघोषशब्दस्य लक्षणया घ-ण्टाघोषसदृशोऽर्थः । एवञ्च यथा घण्टायाः घोषः ध्वनिः सर्वैः सेन्द्रियप्रबुद्धैः असन्देहं श्रूयते तथा सर्वैः तथाविधैः श्रूयमाणः दण्डापूपिकान्याय एव नः श-रणं रक्षकः । दण्डापूपिकान्यायो नाम दण्डो मूषिकैर्भक्षित इत्युक्ते दण्डगुम्फिता अपूपिका आखुभिर्भक्षिताः किमिति प्रष्टव्यांश एव न वर्तत' इति । तथाच दिविचरान् भूचरयितुं भूचरान् दिविचरायितुं यथाकामं कर्तुं सामर्थ्यशालिनां युष्माकं अस्मदुद्धरणसामर्थ्यमस्ति वेत्यत्र सन्देहप्ररोह एव नास्तीति भावः । वक्तव्यमुक्त्वा तूष्णीम्भूते देवेन्द्रे विज्ञातरहस्यो गुरुः आखण्डलादिभिस्सह सत्यलोकं प्रति जगामेत्याह वाक्यद्वयेन ॥ **तदिति** ॥ ततस्मात् पल्लवितैस्सञ्जा-तकिसलयैः वचोभिरलं बहूक्तिभिः प्रयोजनं नास्तीति भावः । भवतो भक्ताना-मस्माकं यद्व्यसनं राज्यभ्रंशादि तदनवलोकने तददर्शने विषये सङ्कल्पः मनोरथः। 'सङ्कल्पः कर्म मानसं' इत्यमरः । अस्ति यदि अस्मान् नः स्वयमप्रेरित इति भावः । अनुगृहाण अनुग्रहं कुरु । अस्मदीयसाम्राज्येन अस्मान् पुनस्संयोज-येत्यर्थः । अथवा समाना जातिः मुनित्वलक्षणा यस्य सः । सजातिर्दुर्वासाः स-जातेर्भावः साजात्यं तस्मादभिमानेन प्रेम्णा दुर्वाससः मुनेः वचनमेव सत्यापयितुं सत्यं कर्तुं अध्यवसायः निश्चयः यदि इहि गच्छ । इण् गताविति धातोः लोटि इहीति रूपम् । यत्र निनीषसि नेतुमिच्छसि प्रापयितुमिच्छसीत्यर्थः । तत्र नेष्यामहे यास्या-मः । येनानुकम्पयिष्यसि तेनानुकम्प्यामहे अनुकम्पिता भवामः । अनुगृहीताः क्रियामहे इति यावत् । सर्वथा सर्वैः प्रकारैर्वयं भवतः चरणे न्यस्ताः समर्पिताः

**सर्वथा न्यस्तात्मानो वयं भवच्चरणे, किं करचरणे कदाचिदस्ति जिज्ञासा कीदृशस्तदभिप्राय इति, न यदि किङ्करजनेऽपि मादृशि तथेति मन्तव्यं' इति कृतव्यवसायस्य सुत्राम्णो वचसि चित्रीयमाणश्चित्रशिखण्डिजस्समम्भाखण्डलादिभिस्सत्यलोकमभिप्रतस्थे । अमराश्च तमनुवर्तमानाः, वर्तमानाः पथि वैमानिकानां, दैत्यदानवयातुधानाध्यासितानि सिद्धचारणविद्याधराद्यावसथानि विलङ्घ्य, ततोऽविदूरादुत्सन्नकिन्नरीगानचातुर्यं, उपशान्तगान्धर्वतौर्यमौखर्यं, असम्भावितकर्मदेवसम्मर्दं, अनाशङ्कनीयब्रह्मर्षिसञ्चारसङ्कथं, अतिनीचरक्षःपिशाच**

आत्मानः कायाः येषां ते । 'आत्मा यत्नो धृतिर्बुद्धिस्स्वभावो ब्रह्म वर्ष्म च' इत्यमरः । करचरणे हस्तपादादिविषये तवाभिप्रायः कीदृशः कथंभूत इति कदाचित् जिज्ञासा ज्ञातुमिच्छा न इति शेषः अस्ति किं नेत्यर्थः । न यदि नास्ति यदि मादृशि मद्विधे किङ्करजने । 'सेवकाः किङ्करा भृत्याः' इति रभसः । तथेति मन्तव्यं ज्ञातव्यं इति कृतव्यवसायस्य बद्धनिश्चयस्य सुत्राम्णः इन्द्रस्य वचसि चित्रीयमाणः चित्रं कुर्वाणः चित्रशिखण्डिजो वाचस्पतिः आखण्डलादिभिस्सह इन्द्रादिभिस्समं सत्यसंज्ञिकः लोकः तं सत्यलोकं ब्रह्मलोकं प्रति अभिप्रतस्थे ययौ । पथिकदेवानां वृत्तं वर्णयन् त एव सत्यलोकसमीपमापुरित्याह ॥ **अमराश्चेति** ॥ तमिन्द्रमनुवर्तमानाः अनुगच्छन्तः अत एव वैमानिकानां विमानचारिणां पथि मार्गे वर्तमानाः प्रतिष्ठमानाः अमराश्च दैत्यदानवयातुधानैः राक्षसप्रभेदैः अध्यासितानि अध्युषितानि आक्रान्तानीति भावः । सिद्धचारणविद्याधराणां देवयोनिविशेषाणाम् । आवसथानि स्थानानि । 'स्थानावसथवास्तु च' इत्यमरः । विलङ्घ्य अतिलङ्घ्य ततः विदूरात् विशेषतो दूरदेशे अवस्थायेत्यर्थः । ल्यब्लोपे कर्मण्यधिकरणे चेत्यधिकरणवाचकात् पञ्चमी । अथवा ततः स्वीयमार्गात् किञ्चिदुल्लिख्य अविदूरात् समीपे अवस्थायेत्यर्थः । उत्सन्नं विनष्टं किन्नरीणां किन्नरस्त्रीणां गानचातुर्यं आलापवैदग्ध्यं यस्मिन् तत् । उपशान्तं अप्रवृत्तं गान्धर्वं गन्धर्वसम्बन्धि तौर्यं मुरजादिसम्बन्धि मौखर्यं नादो यस्मिन् तत् । तुरीधातोः ऋहलोर्ण्यदिति ण्यत्प्रत्ययः । ततः गुणं बाधित्वा बाहुळकात् हलि चेति दीर्घः । ततः तूर्यमिति रूपम् । तूर्यं मुरजादि तत्सम्बन्धि तौर्यमिति प्रक्रिया । असम्भावितः असम्पादितः कर्मदेवानां सम्बन्धी सम्मर्दः पुञ्जीभवनं यस्मिन् तत् । अनाशङ्कनीया असम्भावनीया ब्रह्मर्षीणां सञ्चारस्य सङ्कथा यस्मिन् तत् । अतिनीचाः यानि रक्षांसि ये पिशाचाः तेषां मदिरागण्डूषेण मद्यनिष्ठीवनेन रू-

**मदिरागण्डूषदूषितमन्दाकिनीतीरतरुषण्डगूढचरदेवर्षिमण्डलं, आखण्डलनगरोपशल्यमन्तःकरणशल्यमालोकयन्तः, पुरा हंसावतंसितैस्सर्वगामिभिरप्सरोजनतौर्यत्रिकालंकृतैर्विमानैरति वाह्यमानतयाऽगृह्यमाणतत्तत्प्रदेशसौन्दर्यमगृह्यमाणद्राघिमाणमध्वानमधुना पद्भ्यामेवाक्रम्यमाणतया गृहीतविपरीतमतिक्रामन्तः, पदेपदे श्राम्यन्तः पथि, पथिकजनसाधारणमपि तत्तत्पदेष्वातिथ्यं गूढसञ्चारवशादलभमानाः, दानवसेनागतागतोचितान् कथञ्चिदतिलङ्घ्य कानपि कक्ष्याभेदान् दिवः, त-**

षिता संयोजिता। दूषितेति पाठे कलुषितेत्यर्थः। या मन्दाकिनी गङ्गा तस्यास्तीरे ये तरवः तेषां षण्डे गूढं अविदितं यथा तथा चरं सञ्चारि देवर्षीणां सुरमुनीनां मण्डलं समूहो यस्मिन् तत्। अत एव अन्तःकरणशल्यं हृदयकण्टकमिव स्थितं नगरस्यामरावत्याः उपशल्यं ग्रामान्तप्रदेशम्। 'ग्रामान्तमुपशल्यं स्यात्' इत्यमरः। आलोकयन्तः पश्यन्तस्सन्तः। पुरा स्वर्गनिवासकाले हंसैः अवतंसितैः सञ्जातापीडैः हंसविभूषितैरिति यावत्। सर्वत्र गन्तुं शीलं येषां ते सर्वगामिनः तथाभूतैः। अप्सरोजनैः आरप्स्यमाणं करिष्यमाणं यत्तौर्यत्रिकं नृत्तगीतवाद्यानां त्रयम्। 'तौर्यत्रिकं नृत्तगीतवाद्यं नाट्यमिदं त्रयं' इत्यमरः। तेन अलङ्कृतैः मण्डितैः विमानैः अतिवाह्यमानतया सन्तीर्यमाणतया अगृह्यमाणमविदितं ते च ते प्रदेशाश्च तत्तत्प्रदेशाः तेषां सौन्दर्यं कामनीयकं यस्य स तथाभूतम्। एवमगृह्यमाणं अनवगतं द्राघिम दैर्घ्यं यस्य स तथाभूतम्। अधुना पद्भ्यां पादाभ्यां आक्रम्यमाणतया क्षुण्णतया। अक्रममाणतयेति पाठे प्रतिष्ठमानतयेत्यर्थः। तं गृहीतं ज्ञातं तद्विपरीतं पूर्वोक्ताद्विलक्षणकामनीयकलक्षणं विभेदः यस्य स तथाभूतम्। अयं भावः विमानसञ्चारदशायां देवैः पूर्वं यत्र यत्र कामनीयकं दैर्घ्यं च दृष्टं नाभूत् इदानीं पादसञ्चारदशायां तत्र तत्र तैरेव देवैः पूर्वस्माद्विपरीतमतीव दैर्घ्यं अतीव रामणीयकं च दृष्टमभूदिति बोध्यम्। अतिक्रामन्तः अतिगच्छन्तः पथि मार्गे पदे पदे प्रतिपदमित्यर्थः। श्राम्यन्तः आयस्यन्तः। किञ्च ते ते च ते पन्थानश्च तत्तत्पथाः तेषु तेषु मार्गेष्वित्यर्थः। पथिकजनानां पान्थानां साधारणं सुलभं आतिथ्यं अतिथेः क्रियमाणं अन्नदानादिलक्षणं कर्मापि। 'क्रमादातिथ्यातिथेये अतिथ्यर्थेऽत्र साधुनि' इत्यमरः। गूढः इतराविदितः यः सञ्चारः तद्वशात् अलभमानाः अप्राप्नुवन्तः दानवसम्बन्धिनीनां सेनानां गमनागमनयोः उचितान् योग्यान् कानपि कतिचिदपि दिवस्स्वर्गसम्बन्धिनः कक्ष्याणां धनिकागारप्रकोष्ठावृतप्रदेशानां भेदान् प्रभेदान् अत्रायं विवेकः आवृतो द्वारप्रदेशः कक्ष्या अनावृतो द्वारप्रदेशोऽङ्गमिति। कथञ्चित् कृच्छ्रेण अतिलङ्घ्य अतिक-

पोभिरपि दुरापं तपोलोकसमीपमापेदिरे । प्रविष्टमात्राश्च ते परिहृतरजस्तमोगन्धानुबन्धतया परिणतसत्त्वैकसारेषु तत्रत्यवस्तुषु महीचरा इव महेन्द्रभोगेष्वदृष्टचरं विशेषमालक्षयन्तो विसिस्मियिरे । अपिच पुनरात्मविज्ञाननिरस्तावरणतया निस्सीमविकसदकृत्रिमज्योतिषां, अधिकारमलक्षपणाय केवलमनुत्तरं योगैश्वर्यमनुभवतां, अत्रभवतां सनकसनन्दनसनत्कुमारादिमहायोगिनां, मूकेष्विव वाग्मिनां, मूर्खेष्विव बुद्धिमतां, अन्धेष्विव चक्षुष्मतां, अधनेष्विव महेश्वराणां, कीटे-

---

म्य । 'कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धन' इत्यमरः । 'कक्ष्या कच्छे वरत्रायां काञ्च्यां गेहप्रकोष्ठक' इति नानार्थरत्नमाला । तपोभिरपि कृच्छ्रचान्द्रायणादिभिरपि दुरापं दुर्लभं तपोलोकस्य सत्यलोकस्य समीपं अन्तिकं आपेदिरे प्रापुः । प्रविष्टमात्राश्च प्रविशन्त एव ते देवाः परिहृतः विसृष्टः रजस्तमसोः गुणयो गन्धः लेशः तस्यानुबन्धो येषां तेषां भावस्तत्ता तया । परिणतः प्राप्तः सत्त्वं सत्त्वगुण एव एकसारो मुख्यस्थिरांशो येषां ते तथाभूतेषु तत्रत्यानि तत्रभवानि वस्तूनि पदार्थाः तेषु महीचरा भूलोकवासिनः महेन्द्रस्य देवेन्द्रस्य भुज्यन्त इति भोगाः विषयाः तेष्विव । अदृष्टचरं अदृष्टपूर्वम् । भूतपूर्वे चरडिति चरट्प्रत्ययः । विशेषं वैलक्षण्यं आलक्षयन्तः पश्यन्तस्सन्तः विसिस्मियिरे विस्मयं चक्रुः । सत्यलोकनिवासिनस्सावज्ञं स्वर्गिणो दृष्ट्वा परस्परं हसन्तो निनिन्दुरित्याह ॥ **अपि च पुनरिति** ॥ अपिच आत्मज्ञानेन ब्रह्मज्ञानेन निरस्तं दूरीकृतं अविद्यालक्षणं आवरणं तिरस्करिणी वस्त्रं येषां तेषां भावस्तत्ता तया । निस्सीमं निर्मर्यादं यथा तथा विकसत्प्रकाशमानं अकृत्रिमं नित्यं ज्योतिः ब्रह्मज्योतिर्येषां ते तथाभूतानां अधिकारः एतावत्कालपर्यन्तं त्वयात्रैव वर्तितव्यमितीश्वरनियोगः । 'प्रक्रिया त्वधिकारस्स्यात्' इत्यमरः । स एव मलं पापम् । 'मलोऽस्त्री पापविट्किट्टानि' इत्यमरः । तस्य क्षपणाय केवलं पापनाशायैव क्षाळनायेति यावत् । अनुत्तरं स्वापेक्षया तृष्णान्तररहितं श्रेष्ठमिति यावत् । 'श्रेष्ठेऽनुदीच्यां प्रतिवाग्घाने च क्लिष्वनुत्तरं' इति रत्नमाला । योगैः यमाद्यष्टाङ्गयोगैः ऐश्वर्यं अणिमादिलक्षणं अनुभवतां भजतां अत्रभवतां पूज्यानामित्यर्थः । सनकसनन्दनसनत्कुमारा एवादयो येषां तथाविधा योगिनो ध्यानिनः । 'योगस्सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः । तेषां सम्बन्धिनीः वाच एषां सन्तीत्यर्थे वाचो ग्मिनिरिति ग्मिन्प्रत्यये वाग्मिन इति रूपम् । तेषामतिवक्तॄणां । 'वाचोयुक्तिपटुर्वाग्मी' इत्यमरः । मूकेषु वाग्व्यापाररहितेषु यथेत्यर्थः । 'अवाचि मूकोऽथ मन' इत्यमरः । बुद्धिमतां विवेकिनाम् । प्रशंसायां मतुप् । मुग्धेष्विव मूढेषु यथेत्यर्थः । 'मुग्धस्सुन्दरमूढयोः'

ष्विव सरीसृपाणां, सरीसृपेष्विव चतुष्पदां, चतुष्पात्स्विव मानवानां, मानवेष्विव महीभृतां, महीभृत्स्विव मरुतां, मरुत्स्विव मरुत्वतो, मरुत्वत्यपि पतन्तीमवज्ञामुकुळितां दृशमवलोकयन्तः, शृण्वन्तश्च तेषामेव 'हन्त वराकश्शतमन्युर्नामायमेव परितोष्य यश्शतेनाश्वमेधैरपि भगवन्तमिन्दुशेखरं प्रार्थयामास दानवामिषं स्वाराज्यम्। पश्यत पश्यत कुबेरमिमं पशुपाशविमोचिना पाशुपतव्रतेन समाराध्य परमात्मनं सखासि ममेत्यनुगृहीतोऽपि यः पिशाच इव धनपालतां वव्रे। किं बहुना। आत्मभूतोऽप्ययमष्टमूर्तेर्भगवतो वैश्वानरः विफलीकृत्य

---

इत्यमरः। चक्षुष्मतां विपुलचक्षुष्काणां अन्धेष्विव दृग्रहितेषु यथेत्यर्थः। 'किलासी सिध्मलोऽन्धोऽदृक्' इत्यमरः। महेश्वराणां महैश्वर्यशालिनां अधनेष्विव दरिद्रेषु यथेत्यर्थः। सरीसृपाणां सर्पाणाम्। 'चक्री व्याळस्सरीसृपः' इत्यमरः। कीटेष्विव क्रिमिविशेषेषु यथेत्यर्थः। चतुष्पदां गोव्याघ्रादीनां सरीसृपेष्विव सर्पेषु यथेत्यर्थः। मानवानां चतुष्पात्स्विव पशुषु यथेत्यर्थः। महीभृतां राज्ञां मानवेष्विव नरेषु यथेत्यर्थः। मरुतां देवानाम्। 'हस्तौ तु पाणिनक्षत्रे मरुतौ पवनामरौ' इत्यमरः। महीभृत्स्विव राजसु यथेत्यर्थः। मरुत्वतः इन्द्रस्य। 'इन्द्रो मरुत्वान् मघवा' इत्यमरः। मरुत्स्विव देवेषु यथेत्यर्थः। मरुत्वति इन्द्रेऽपि तथा पतन्तीं अवज्ञयावहेळनेन मुकुळितां विकासरहिताम्। 'अवज्ञावहेळनमसूर्क्षणं' इत्यमरः। दृशं दृष्टिं अवलोकयन्तस्सन्तः शृण्वन्तश्च तेषामित्यस्य किं न निगूहन्तीति पद्योत्तरगद्यस्थेन इत्यादिपरिहासवचांसीत्यनेनान्वयः। य इन्द्रः शतेनाश्वमेधैः क्रतुभिरपि भगवन्तमिन्दुशेखरं शिवं परितोष्य तोषयित्वा दानवानां असुराणां आमिषं भोग्यम्। 'आमिषं त्वस्त्रियां मांस उत्कोचे भोग्यवस्तुनि' इति रत्नमाला। स्वाराज्यं स्वर्गसाम्राज्यं प्रार्थयामास वव्रे। अयमेव वराकः तुच्छः शतमन्युरिति प्रसिद्धः। पश्यन्तीति पशवः प्राणिनः तेषां यस्संसारलक्षणः पाशः तस्य मोचिना मोचकेन पशुपतेरिदं पाशुपतं तेनैव व्रतेन। 'लिङ्गे प्राणं समाधाय प्राणे लिङ्गन्तु शाम्भवम्। सशरीरे मनः कृत्वा न किञ्चिच्चिन्तयेद्धृदि॥ सदाचारश्शिवे भक्तिर्लिङ्गे जङ्गम एकधीः। लाञ्छने शरणं भक्तिर्भक्तस्थलमिति स्मृतम्॥' भक्तस्थलादिषट्स्थलाभ्यासलक्षणनियमेनेत्यर्थः। परमात्मानं परमशिवं समाराध्य पूजयित्वा मम महेश्वरस्य सखा मित्रं असीति अनुगृहीतोऽपि अनुकम्पितोऽपि यः कुबेरः पिशाच इव धनपालतां धनसंरक्षकत्वं वव्रे वृतवान्। तमिमं कुबेरं पश्यत। किं बहुना वैश्वानरः अग्निः भगवतः अष्टमूर्तेः परमेश्वरस्य आत्म-

विवेकं, उपास्य चिरतरं कालमुमारमणमपि, आसाद्य हव्यवाहतामन्नहरोऽस्मि देवानामित्यभिमन्यते कृतकृत्यमात्मानम् । हन्त चिरादिमान् देवपशूनद्राक्ष्म ।

किन्न निगृह्णन्ति मनः किन्न भजन्ते जनाश्शिवं शरणम् ।
अभिसन्धिभेदमात्रान्मोक्षो (क्षा?) पायेन बध्यन्ते ॥ ४ — ५ ॥'

इत्यादीनि परिहासवचांसि, पश्यन्तस्तरतमभावमैश्वर्येषु, परित्यजन्तस्स्वर्गाधिराज्यदुर्मदं, अपत्रपानष्टदृष्टयस्स्वयमाधिपत्यादस्मदीयादत्र भिक्षाटनं ज्याय इति मेनिरे ।

अथ सुरगुरुमागतं सशिष्यं
स्वयमवधार्य धिया सनत्कुमारः ।

भूतोऽपि शरीरभूतं ऽपि । 'आत्मा यत्नो धृतिर्बुद्धिस्स्वभावो ब्रह्म वर्ष्म च' इत्यमरः । उमारमणं पार्वतीपतिं [illegible] बहुकालं उपास्य ध्यात्वापि विवेकं सारासाराकलनं अपास्य विफलीकृत्य हव्यवाहतां हुतवहत्वं आसाद्य देवानां अन्नहरः अन्नहर्ता अस्मीति आत्मानं कृतकृत्यं निर्वर्तितसकलकार्यं अभिमन्यते अभिजानाति । हन्तेत्याश्चर्यखेदयोः । 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः' इत्यमरः । चिरात् बहुकालात् इमान् देवा एव पशवः देवाः पशव इव वा एतान् अद्राक्ष्म दृष्टवन्तः ॥ **किमिति** ॥ जनाः मनः चित्तं कर्म न निगृह्णन्ति किं न निरुन्धन्ति । किं रुन्धन्त्येवेत्यर्थः । तथा शिवं शरणं रक्षकं सन्तं न भजन्ते किं सेवन्त एवेत्यर्थः । तथापीति शेषः । अभिसन्धेः फलाकाङ्क्षायाः फललिप्सायाः इति यावत् । भेदमात्राद्भेदादेव कामवशादेवेति यावत् । मोक्षस्य अपायः व्यतिरेकः राहित्यमिति यावत् । तेन बध्यन्ते निबध्यन्ते तेषां कामिनामेवं दुरवस्थेति भावः । इत्यादीनि एवमादीनि परिहाससहितानि वचांसि सोपालम्भवचनानीति भावः । शृण्वन्तस्सन्तः ऐश्वर्ये तरतमभावं तारतम्यं पश्यन्तः । स्वर्गस्य आधिराज्येन आधिपत्येन यो मदः तं परित्यजन्तः अपत्रपया लज्जया नष्टाः दृष्टयः येषां ते तथाभूतास्सन्तः अस्मदीयात् स्वर्गाधिपत्यात् स्वर्गसाम्राज्यात् । ल्यब्लोपे पञ्चमी । अत्र सत्यलोके भिक्षार्थं अटनं सञ्चारः ज्यायः श्रेय इति मेनिरे बुबुधिरे । उत्तरोत्तरं श्रेयः के वा नाकाङ्क्षन्त इति भावः । इदानीं ब्रह्मलोकवासिनां गुरुं प्रति अभिमुखागमनसनत्कुमारसमीपप्रापणे वर्णयितुमारभते सपद्येन गद्येन ॥ **अथेति** ॥ अथ ब्रह्मलोकान्तिकप्राप्त्यनन्तरं सनत्कुमारः ब्रह्ममानसपुत्रः स्वयं धिया योगजबुद्ध्या सशिष्यं शिष्येणेन्द्रेण सहितमित्यर्थः । सुराणां गुरुं बृहस्पतिं आगतं प्राप्तं अवधार्य निश्चित्य अमुष्य गुरोः सभाजनाय

अपगततमसो महाप्रभावान्
अशिषदमुष्य सभाजनाय शिष्यान् ॥ ६ ॥

प्रस्थिताश्च ते परस्परालापेषु, अथर्वशिखाप्रवर्तकतामाङ्गिरसाख्ययोगरहस्यप्रवर्तकतामृग्यजुषोद्घुष्टप्रभावतामप्यनुस्मृत्य, प्रशंसन्तो ब्रह्मपुत्रं भगवन्तं तमाङ्गिरसं, प्रशंसन्तश्च गूढचर्यारतं महर्षिं संवर्तशिवाचार्यं मरुत्तानुग्रहवाराणसीनिषेवणव्रताद्युपाख्यानेन, शंसन्तश्च संवर्तानुजमाङ्गिरसं सर्वतन्त्रेषु प्रवचनपारदर्शनप्रबन्धनिर्माणप्रतिभाव्यवहारकौशलैः, प-

---

आनन्दनाय । 'आनन्दनसभाजने' इत्यमरः । सम्माननायेति यावत् । अपगतानि प्रगतानि तमांसि अज्ञानवृत्तयो येषां ते तथाभूतान् । अत एव महान् प्रभावः प्रकृष्टचेष्टारूपः भावः । 'भावस्सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु' इत्यमरः । माहात्म्यं येषां ते तथाविधान् शिष्यान् आशिषत् आदिदेश ॥ **प्रस्थिता इति** ॥ प्रस्थिता विनिर्गताः ते च सनत्कुमारशिष्यास्तु परस्परं आलापेषु सम्भाषणेषु अथर्वशिखाया एतन्नामिकायाः पञ्चरुद्रान्तःपातिन्याः कस्याश्चिदुपनिषदः प्रवर्तकः प्रवक्ता अध्यापक इति यावत् । तस्य भावस्तत्ता तां आङ्गिरसा प्रणीतः आङ्गिरस इत्याख्या नाम यस्य सः एवंविधो यो योगः योगग्रन्थः तस्मिन् यानि रहस्यानि गूढार्थाः तेषां प्रवर्तकः प्रकाशकः तस्य भावस्तत्ता ताम् । एवं ऋक् च यजुश्च ऋग्यजुषे ऋग्यजुषाभ्यां उद्घुष्टः वर्णितः प्रभावो महिमा यस्य सः तस्य भावस्तत्ता तामपि । स्मारंस्मारं चित्रशिखण्डिनं आङ्गिरसं मुनिं ब्रह्मणः पुत्रं सुतम् । आङ्गिरसो ब्रह्मपुत्रत्वं वक्ष्यते । भगवन्तं भूतागत्यादिज्ञानवन्तम् । तदुक्तम् । 'उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति' इति । प्रशंसन्तः स्तुवन्तस्सन्तः गूढचर्यायां आलिङ्गाश्रमे अवधूताश्रम इति यावत् । रतं आसक्तं महर्षिं संवर्तशिवाचार्यं बृहस्पतेर्ज्येष्ठभ्रातरम् । तदुक्तमाश्रयमाहात्म्यपद्धतौ । 'द्वावेतावर्तिविख्यातौ सुतावङ्गिरसो मुनेः । श्लाघ्यावाश्रयतो जीवसंवर्तशिवसंज्ञकौ ॥' भारते आदिपर्वणि चैतयोरग्रजानुजभावो वर्णितः । मरुत्तो नाम वेदप्रतिपाद्यः कश्चन राजा तस्मिन्ननुग्रहः याजनलक्षणः वाराणस्याः काश्याः निषेवणं काशीवास इति यावत् । तदेव व्रतं नियमः एतदादीनां अन्येषां महिम्नां उपाख्यानेन कथनेन प्रशंसन्तः स्तुवन्तः । संवर्तस्य संवर्तशिवाचार्यस्य अनुजं अवरजं आङ्गिरसं बृहस्पतिं च सर्वतन्त्रेषु निखिलसिद्धान्तेषु । 'तन्त्रं प्रधाने सिद्धान्त' इत्यमरः । प्रवचनं अध्यापनं तच्च पारदर्शनं अन्तावलोकनं तच्च प्रबन्धानां ग्रन्थानां निर्माणं निर्मितिः प्रतिभा नवनवोन्मेषशालिनी प्रज्ञा व्यवहारः विजिगीषुकथा तत्र कौशलं चातुर्यं चे-

रिहरन्तश्च लोकायतिकतन्त्रतीर्थकरताप्रयुक्तमपकर्षमपि बाह्यतन्त्रप्रवर्तकपरमेश्वरनिदर्शनोपदर्शनेन, समागम्य यथाविधि सन्नताश्च स्वगुराविव सह शिष्यैस्सुराचार्यं सनत्कुमारसमीपमानिन्यिरे ।

सनत्कुमारेण समागमे गुरोः
निशाम्य वृत्ता विविधास्तदर्हणाः ।
निशम्य वादेष्वथ चास्य चातुरीं
विशिष्य तस्मिन्नमरा विनेमिरे ॥ ७ ॥

आङ्गिरसोऽपि प्रणम्य भक्त्या महत्या परमेष्ठिनमिव सनत्कुमारं, आवेद्य देवकार्यं, अनुज्ञाप्य च तेन पाकशासनं,

---

त्येतैः प्रशंसन्तः । बाह्यानि यानि तन्त्राणि अवैदिकसिद्धान्ताः तेषां प्रवर्तकः प्रवक्ता परमेश्वरः शिवो विष्णुर्ब्रह्मा । तथोक्तं पुराणेषु । 'पाञ्चरात्रं पाशुपतं तथा वैखानसाभिधम् । वेदभ्रष्टान् समुद्दिश्य कमलापतिरुक्तवान्' इत्यादि । परमेश्वर एव निदर्शनं दृष्टान्तः तस्य उपदर्शनेन प्रदर्शनेन लोकायतिकानां नास्तिकानां तन्त्रं सिद्धान्तः तत्प्रतिपादकम् । यद्वा तन्त्रं प्रधानं मुख्यं तीर्थं शास्त्रम् । 'तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजस्सु च' इति हेमचन्द्रः । 'जैना माध्यमिका लोकायतिका नास्तिकास्समाः' इत्यजयः । 'तन्त्रं प्रधाने सिद्धान्ते' इत्यमरः । तस्य करता प्रणेतृत्वं तत्प्रयुक्तं तदुत्पन्नं अपकर्षं न्यूनभावमपि परिहरन्तः वारयन्तस्सन्तः समागम्य संप्राप्य यथाविधि विधिमनतिक्रम्य स्वगुरौ सनत्कुमार इव सन्नताः प्रणताश्च सन्तः शिष्यैस्सह सनत्कुमारस्य समीपं अन्तिकं आनिन्यिरे गमयामासुः । सनत्कुमारसन्निधौ बृहस्पतये सञ्जातसम्माननसभाजनादिकं दृष्ट्वा तस्मिन् देवा अतीव नम्रा बभूवुरित्याह ॥ **सनदिति** ॥ गुरोः बृहस्पतेः समागमे समागमने वृत्ताः विविधाः अनेकविधाः ताश्च ताः अर्हणाश्चेति कर्मधारयः । तथाविधान्मधुपर्काद्युपचारानित्यर्थः । ताः निशाम्य दृष्ट्वा । निपूर्वस्य शमधातोः चाक्षुषज्ञानार्थकत्वमाह माधवः । अथ पूजानन्तरं सनत्कुमारेण ब्रह्मपुत्रेण सह वादेषु आलापेषु अस्य चातुरीं चातुर्यं अनुत्तरप्रश्नकरणानाशङ्कोत्थानोत्तरप्रदानलक्षणं निशम्य श्रुत्वा विशिष्य विशेषाकारेण अतिशयेनेति यावत् । तस्मिन् गुरौ अमराः देवाः विनेमिरे नम्रा बभूवुः । सनत्कुमारसम्भावितः बृहस्पतिः स्वयं बुद्धिमानपि तन्मुखागतब्रह्मसविधवक्तव्यः तमापृच्छ्य यथान्यायं तेन विसृष्टः देवैस्सह ब्रह्मावसथं ययावित्याह ॥ **आङ्गिरस इति** ॥ आङ्गिरसः बृहस्पतिरपि परमेष्ठिनं पितामहमिव स्थितं सनत्कुमारं महत्या भक्त्या अनुरागेण प्रणम्य

**अनुव्रज्य परिष्वज्य गाढं, आदिश्य चतुर्मुखोपसर्पणेतिकर्तव्यतां; अनुगृह्य शिवेन चेतसा, विसृष्टस्तेन, विनयातिशयादादृष्टिपथादादधानश्शिरस्यञ्जलिं, आस्थाय महान्तं योगं, आवर्तयन् प्रणवमेव, सहामरैराससाद महतावधानेन हैरण्यगर्भमायतनम्। गच्छन्तः पथि**

**वाग्देवीवदनारविन्दगलितब्रह्मोद्यविद्याशत-**
**ग्रन्थग्रन्थिविभेदजातकुतुकब्रह्मर्षिहर्षस्तवैः।**

देवकार्यं इन्द्रादिप्रयोजनं निवेद्य विज्ञाप्य तेन सनत्कुमारेण पाकशासनमिन्द्रं प्रति अनुज्ञाप्य अनुज्ञां दापयित्वा पश्चात् तेन सनत्कुमारेण अनुव्रज्य अनुव्रजनं कृत्वा गाढं दृढं परिष्वज्य आश्लिष्य चतुर्मुखस्य ब्रह्मणः उपसर्पणे समीपगमने इतिकर्तव्यतां च इत्थंकर्तव्यत्वं ब्रह्मान्तिकं गत्वा तत्रैवं वक्तव्यमित्थं कर्तव्यमिति निखिलं कर्तव्यताप्रकारमपीति तात्पर्यार्थः। आदिश्य उक्त्वा शिवेन शुभानुध्यानिना चेतसा मनसा च अनुगृह्य अनुग्रहं कृत्वा विसृष्टः त्यक्तः विनयातिशयात्। ल्यब्लोपे पञ्चमी। विनयोत्कर्षमाश्रित्येत्यर्थः। दृष्टयाः पन्थाः मार्गः दृष्टिपथशब्दो लक्षणया दृग्गोचरीभवनबोधकः। तथा च आदृष्टिपथादित्यस्य दृग्गोचरीभवनमारभ्येत्यर्थः। शिरसि अञ्जलिं युतप्रसृतिहस्तौ पाणी। 'पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमान्' इत्यमरः। आदधानः निक्षिपन्नित्यर्थः। महान्तमधिकं योगं सन्नतिं आस्थाय आबध्य। यद्वा योगं ध्यानं उपायं युक्तिं वा। 'योगस्सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः। प्रणवमोङ्कारमेव। 'ओङ्कारप्रणवौ समौ' इत्यमरः। तत्तदागमोदितानि तत्तद्वेदप्रतिपादितानि। 'हिरण्यगर्भस्समवर्तताग्रे' इत्यादीनि ब्रह्मसूक्तानि ब्रह्मप्रतिपादकमन्त्रानित्यर्थः। आवर्तयन् अपकृज्जपन्नेव अमरैस्सह महता अधिकेन अवधानेन ऐकाग्र्येण हिरण्यगर्भस्य ब्रह्मणः इदं हैरण्यगर्भं आयतनं यज्ञस्थानं। 'चैत्यमायतनं तुल्य' इत्यमरः। आससाद जगाम। महायज्ञमन्तरा कथं महदनुग्रहस्सिध्यतीति भावः। पथि गच्छतां सुराणां वृत्तान्तमाह ॥ **गच्छन्तः पथीति** ॥ **वागिति** ॥ कर्णाभ्यर्णं कर्णसमीपं गतैः प्राप्तैः वाग्देव्याः सरस्वत्याः वदनारविन्दात् मुखकमलात् गलिताः च्युताः ब्रह्मोद्याः ब्रह्मप्रतिपादकाः या विद्याः वेदतदङ्गन्यायमीमांसाधर्मशास्त्रलक्षणाः तासां शतेषु ये ग्रन्थाः तेषु ग्रन्थेषु ये ग्रन्थयः अप्रतिपत्तिविप्रतिपत्त्यन्यथाप्रतिपत्तयः तेषां विभेदेन विश्लथनेन। भिद्यते हृदयग्रन्थिरित्यादौ ग्रन्थिशब्दस्य अन्यथाप्रतिपत्तिपरत्वं तच्छ्रुतिव्याख्यातृभिरुक्तम्।

१. प्रणवमिव तत्तदागमोदितब्रह्मसूक्तानि इति व्याख्यातृसम्मतः पाठः।

कर्णाभ्यर्णगतैर्निर्वृत्तनिखिलक्लेशा दिगीशास्तदा
निर्वव्रुर्न च वव्रुरव्रणमपि स्वर्गं पुनर्गाहितुम् ॥ ८ ॥

अपि चाद्राक्षुरविदूर एव ते निरस्तरजस्तमोव्यतिकरतया निर्मलसत्त्वप्रकाशराशिमिव, निष्कळङ्कशशाङ्केष्टकासङ्घसङ्घटितमिव, निरन्तरज्वलदविन्धनज्वालापरिवर्तपिण्डितदुग्धसागरोर्मिनिर्मितमिव, चिरनिपानघनीभूतशारदाशिरश्चन्द्र-

जातमुत्पन्नं कुतुकं कौतूहलं येषां तथाविधानां ब्रह्मर्षीणां सर्वान्धोभिः हर्षोत्पन्नैः स्तवैः स्तुतिभिः। तदा निरस्ताः निर्गताः निखिलाः क्लेशाः अविद्यास्मितारागद्वेषाभिनिवेशलक्षणपञ्चक्लेशाः येषां ते तथाविधाः दिगीशाः देवाः निर्वव्रुः सुखिता बभूवुः। अपगतः व्रणः दैत्यबाधालक्षणः यस्य स तथाविधमपि पुनः स्वर्गं गाहितुं अवगाढुं च न वव्रुः नाङ्गीचक्रुरित्यर्थः। को नाम महत्पदं प्राप्य तदल्पं पदमिच्छतीति भावः। यद्वा कर्णाभ्यर्णं श्रोत्रान्तिकं गतैः प्राप्तैः हे वाग्देवीवदन वाग्देवी सरस्वती वदनेषु यस्य सः तथाभूत हे अरविन्दगलित वासुदेवनाभिकमलोत्पन्न हे ब्रह्मेज्य वेदपारायणपरायण। 'वेदस्तत्त्वं तपो ब्रह्म' इत्यमरः। विद्याश्चतुर्दश। तदुक्तम्। 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश' इति। तासु शतमित्युपलक्षणं अनेके ये ग्रन्थाः सूत्रभाष्यप्रकरणात्मकाः। 'अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखं' इति सूत्रलक्षणम्। 'सूत्रार्थो वर्ण्यते यत्र पदैस्सूत्रानुकारिभिः।' इति भाष्यलक्षणम्। 'शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितं' इति प्रकरणलक्षणम्। तेषु ग्रन्थय इव ग्रन्थयः दुर्भेददुर्बोधा अर्थाः तेषां निर्भेदो विश्लथनं विबोधनमिति यावत्। तस्मिन् जातं कुतुकं कुतूहलं यस्य तस्य सम्बुद्धिः इति ब्रह्मर्षीणां हर्षस्तवैः निरस्ताः निष्कासिताः निखिलाः क्लेशा अविद्यादयो येषां ते तथाविधाः देवाः निर्वव्रुः सुखं प्रापुः। अव्रणं बाधारहितमपि पुनः स्वर्गं गाहितुं गन्तुं न वव्रुः न वृतवन्त इत्यर्थः। सप्तकक्ष्योपेतं हिरण्यगर्भभवनं वर्णयति ॥ **अपि चाद्राक्षुरिति** ॥ निरस्तः निर्गतः रजस्तमसोर्गुणयोः व्यतिकरस्सम्पर्को यस्य सः तस्य भावस्तत्ता तया। निर्मलस्य रजस्तमोलक्षणमलरहितस्य सत्त्वस्य सत्त्वगुणस्य प्रकाशा दीप्तयः। काशृ दीप्तावित्यतोऽच्प्रत्ययः। तेषां राशिं पुञ्जमिव स्थितम्। 'स्यान्निकायः पुञ्जराशी' इत्यमरः। निष्कळङ्काः कळङ्करहिताः शशाङ्काः बालचन्द्राः त एव इष्टकाः चतुष्कोणशिलाविशेषाः तासां सङ्घेन सङ्घटितं निबद्धमिव स्थितम्। निरिन्धनं यथा तथा ज्वलन् यः अविन्धनः उदकेन्धनः बडबानलः तस्य ज्वालानां परिवर्तेन परितोऽवस्थानेन पिण्डिताः घनीभूताः मण्डतां प्रापिता इति यावत्। ये दुग्धसागरस्य क्षीरसमुद्रस्य ऊर्मयस्तरङ्गाः तै-

**चन्द्रिकाविकीर्णनीहारसारसाधितमिव, त्रैविक्रमचरणाक्रमाविद्धविध्यण्डकपालनिरर्गळनिर्गळदळकनन्दानिपातधौतमिव, विमलभास्वरप्रभावभासितनभोविभागं, अपास्तकळङ्कानुषङ्गतयेव धूमादिमार्गचङ्क्रमपङ्किलचरणपशुजनानाक्रमणीयं, अशेषभुवनसर्गावशेषसारैरिव विलक्षणैश्शब्दादिभिर्विषयैरुपस्कृतं, अनु-**

---

र्निर्मितं विरचितमिव स्थितम् । चिरं निपातेन निपतनेन घनीभूतः पिण्डीभूतः शरच्चन्द्रचन्द्रिकया विकीर्णः व्याप्तश्च यो नीहारः हिमं तस्य यः सारः तेन साधितं निर्मितमिव स्थितम् । धवळतमत्वादिति भावः । त्रैविक्रमः त्रिविक्रमस्य भगवतः सम्बन्धी यश्चरणः तस्य क्रमेण विन्यासेन विद्धं विस्फुटितं यद्विध्यण्डं ब्रह्माण्डं तस्य कपालात् कटाहसदृशावयवात् निरर्गळं निर्निरोधं यथा तथा निर्गळन्ती निपतन्ती या अलकनन्दा गङ्गा तस्याः निपातेन निपतनेन धौतं क्षाळनमिव स्थितम् । विमलस्य रूपान्तरासंवलितस्य भास्वरस्य शुक्लभास्वरस्य शुक्लभास्वरवर्णस्य प्रभाभिर्दीप्तिभिः अवभासितः प्रकाशितः नभोविभागो यस्य सः तथाभूतम् । अपास्तो निरस्तः कळङ्कस्य अङ्कस्य अनुषङ्गः सम्बन्धः तस्य भावस्तत्ता तयेव । हेतूत्प्रेक्षालङ्कारः । धूमः आदिर्येषां ते धूमादयः त एव मार्गस्सरणिः अस्मिन् चङ्क्रमणेन मुहुर्मुहुर्गमनेन पङ्किलाः पङ्कवन्तः । 'पङ्कः कर्दमपापयोः' इति विश्वः । तथाविधाश्चरणाः येषां ते तथाभूताः ये पशुजनाः पशुकल्पा जनाः तैरनाक्रमणीयं प्राप्तुमशक्यम् । अत्रेदं बोध्यं देवयानः पितृयाण इति द्विविधः पन्थाः तस्य देवयानस्य अर्चिरादिमार्ग इत्येका संज्ञा पितृयाणस्य धूमादिमार्ग इत्येका संज्ञा ये तु केवलं कर्मिणस्तेषां धूमादिमार्ग एव तत्र सञ्चरतां पुनः पुनर्गमनागमनं भवतः तेषां ब्रह्मलोकप्राप्तिर्नास्ति । ये तूपासकास्तेषामार्चिरादिमार्ग एव तत्र गतानां पुनरावृत्तिर्नास्ति क्रमेण ब्रह्मलोकप्राप्तिश्च भवति । तथा च श्रुतिः । 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान् मासेभ्यस्संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवस्स एतान् ब्रह्म गमयतीत्येष देवयानः पन्था' इति । 'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान् षड्दक्षिणैतिमासांस्तान् नैते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति तस्मिन् यावत्संपातमुषित्वाथैतमेवाध्वानं पुनरावर्तन्त' इति । अशेषाणि समस्तानि यानि भुवनानि लोकाः तेषां सर्गादवशिष्यन्त इत्यवशेषाः अवशिष्टास्तथाविधाश्च ते साराश्च तैः । 'सारो बले स्थिरांशे च' इत्यमरः । अत एव विलक्षणैः प्रकृष्टैः विजातीयैरिति यावत् ।

श्रवमयैः प्राकारैराभ्युदयिकोपासनामयैर्गोपुरैरात्मोपासनामयीभिः कक्ष्याभिः प्रणवमयेन चास्थानमण्टपेन परिशोभितं, निजनिजकार्यनिवेदनावसरप्रतीक्षितत्तल्लोकाधिकारिकारितसम्मर्द-बहिर्द्वारवितर्दिकाभागं, आगन्तुकगन्धर्वकिन्नराप्सरस्समारब्धतौर्यत्रिकमौखर्यपूरितप्रथमकक्ष्यं, अनभिसन्धिमत्कर्मयोगनिर्मलकर्मन्दिवृन्दपरिकर्मितद्वितीयकक्ष्यं, अतिगहनन्यायसाङ्ख्य-

---

शब्दादिभिर्विषयैः। 'रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी' इत्यमरः। उपस्कृतम्। अनुसृत्य श्रूयन्त इत्यनुश्रवाः वेदाः तन्मयैः तद्विकारैः प्राकारैस्सालैः। 'प्राकारो वरणस्साल' इत्यमरः। अभ्युदयः अन्नब्रह्मवर्चसादिलाभः प्रयोजनं यासां ताः आभ्युदयिकाः या उपासनाः विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहात्मिकाः तन्मयैर्गोपुरैः। 'पुरद्वारं तु गोपुर' इत्यमरः। आत्मनः ब्रह्मणो या उपासनाः विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहाः तन्मयीभिः तत्स्वरूपाभिः कक्ष्याभिः हर्म्यप्रकोष्ठप्रदेशैः। 'कक्ष्या प्रकोष्ठे हर्म्यादेः' इत्यमरः। प्रणवः ओङ्कारः तन्मयेन तत्स्वरूपेण। 'ओङ्कारप्रणवौ समौ' इत्यमरः। आस्थानमण्टपेन सभामण्टपेन च। 'सभासमितिसंसदः! आस्थानी क्लीबमास्थानं' इत्यमरः। परिशोभितं सर्वतः प्रकाशितम्। अत्रेदमवधेयम्। उपासना नाम विजातीयज्ञानाव्यवहितसजातीयज्ञानधारा सामान्यत उपासना द्विविधा आभ्युदयिकोपासनात्मोपासनाभेदात्। तत्रादित्यपुरुषोपासनाक्षिपुरुषोपासनादयः आभ्युदयिकोपासनाः। दहरोपासनाशाण्डिल्योपासनादयः आत्मोपासना इति। निजानिजानां स्वस्वानां कार्याणां निवेदनावसरं विज्ञापनासमयं प्रतीक्षन्ते अन्विच्छन्तीति प्रतीक्षिणः ये तत्तल्लोकानामधिकारिणः आधिकारिपुरुषाः तैः कारितः अनुष्ठापितः सम्मर्दस्संबाधः येषु ताः तथाविधाः। बहिर्द्वाराणां वेदिकानाम्। 'द्वारमात्रेऽपि गोपुरं' इत्यमरः। भागाः प्रदेशाः यस्य तत् आगन्तव एवागन्तुकाः गृहागताः। 'स्यादावेशिक आगन्तुः' इत्यमरः। ये गन्धर्वाश्च किन्नराश्च अप्सरसश्च ताः ताभिस्समारब्धस्य तौर्यत्रिकस्य नृत्तगीतवाद्यत्रयस्य यन्मौखर्यं अनुरणनध्वनिः तेन पूरिता भरिता प्रथमकक्ष्या प्रथमहर्म्यप्रकोष्ठभागो यस्य तत्तथाभूतम्। 'कक्ष्या प्रकोष्ठे हर्म्यादेः' इत्यमरः। अभिसन्धिः फलेच्छा येषां ते अभिसन्धिमन्तः ते न भवन्तीत्यनभिसन्धिमन्तः ते च ते कर्मैव योगः तेन निर्मलाः शुद्धान्तःकरणाः ये कर्मन्दिनो भिक्षवः। 'भिक्षुः परिव्राट् कर्मन्दी' इत्यमरः। तेषां वृन्देन समूहेन परिकर्मिता परिमण्डिता द्वितीयकक्ष्या द्वितीयप्रकोष्ठभागो यस्य तत्। अति अत्यन्तं गहनं दुःखं अभ्यासकाले येषां तानि अतिगहनानि। 'गहनं वनदुःखयोः' इति नानार्थरत्नमाला। अथवा अतिगहनानि दुःखकराणि दुरवगा-

**योगादिदर्शनतत्त्वावमर्शव्यसनकर्शितकणादकपिलपतञ्जलिप्रमुखविद्वदुद्दामजल्पकथाघोषभूषिततृतीयकक्ष्यं, अतिविचित्रतरत्रयीशिखरोपपादितोपासनाभेदवासनासनाथमुनियूथदर्शिताश्चर्यतुर्यकक्ष्यं, अतिरहस्यवैश्वानरदहरादिविद्यापरिचयानवद्यमहर्षिदर्शितोपासनाप्रपञ्चपञ्चमकक्ष्यं, अतिदूरविसृष्टदृष्टानुश्रविकविषयामिषरिरंसागन्धपरमहंसावतंसितषष्ठकक्ष्यं, अतिचा-**

हानीति तात्पर्यत इत्यर्थः । न्यायश्च साङ्ख्यं च योगश्च ते आदयो येषां तानि यानि दर्शनानि शास्त्राणि । 'दर्शनं दर्पणस्वप्नशास्त्रबुद्ध्यक्षिदृष्टिषु' इति नानार्थरत्नमाला । तेषु यानि तत्त्वानि परमार्थास्सिद्धान्ताः तेषामवमर्शो भावनं पर्यालोचनमिति यावत् । अस्मिन् यद्व्यसनं विफलोद्यमः । 'व्यसनं त्वशुभे शक्तौ विपत्तौ निष्फलोद्यमे' इति नानार्थरत्नमाला । तेन कर्शिताः क्लेशं प्राप्ताः कणादश्च कपिलश्च पतञ्जलिश्च त एव प्रमुखाः प्रभृतयो येषां ते तथाविधाः । ये विद्वांसः तेषामुद्दामाः श्रेष्ठाः या जल्पकथाः विजिगीषुकथाः तासां घोषेण कलकलेन भूषिता अलङ्कृता तृतीयकक्ष्या यस्य तत् । अतिविचित्रतराः अत्यन्तपरस्परविलक्षणाः यास्त्रयीशिखरैर्वेदान्तैरुपपादिताः प्रतिपादिता उपासनास्तासां भेदाः प्रकाराः तेषां वासनया संस्कारेण सनाथानि सहितानि यानि मुनीनां यूथानि सङ्घाः तैर्दर्शितं आश्चर्यं यस्याम् । 'विस्मयोऽद्भुतमाश्चर्यं' इत्यमरः । तथाविधा तुरीया चतुर्थी कक्ष्या गृहप्रकोष्ठभागो यस्य तत् । 'कक्ष्याकच्छे वरत्रायां काञ्चयां गेहप्रकोष्ठके' इति नानार्थरत्नमाला । अतिरहस्यानि अतिगोप्याः अप्रकाशनीया इति यावत् । याः दहरवैश्वानरौ आदी यासां तास्तथाविधाः विद्या उपासनाः तासां परिचयेन दृढाभ्यासेन अनवद्याः निदुष्टाः ये महर्षयः तैर्दर्शिता ये उपासनानां विभिन्नचिदनन्तरितैकजातीयचिद्धारालक्षणानां प्रपञ्चा विस्तृतयः स्तोमा वा यस्यां सा । 'प्रपञ्चो विस्तृतौ स्तोमे रचनायां विपर्यये' इति नानार्थरत्नमाला । तथाभूता पञ्चमी कक्ष्या यस्य तत् । अत्र दहरोपासना नाम 'अथ यदिदमस्मिन् ब्रह्मपुरे' इत्यादिश्रुतिसिद्धा । वैश्वानरोपासना तु 'एष वै सुतेजा आत्मा वैश्वानरोऽयं त्वमात्मानमुपास्स' इति छान्दोग्यश्रुतिसिद्धा । कक्ष्याशब्दश्शुद्धान्तशब्दपर्यायोऽप्यस्ति । 'कक्ष्यान्तरेऽपि शुद्धान्त' इत्यमराच्चेति विवेकः । अतिदूरं विसृष्टाः त्यक्ता ये अनुश्रवेण वेदेन प्रोक्ता आनुश्रविकाः ते च ते विषयाः त एवामिषाः भोग्यवस्तूनि । 'आमिषं त्वस्त्रियां मांस उत्कोचे भोग्यवस्तुनि' इति नानार्थरत्नमाला । तेषु रिरंसा रन्तुं क्रीडितुमिच्छा रिरंसा सा च गन्धस्स्मयः स च तौ यैस्ते । 'गन्धो गन्धकसम्बन्धामोदलेशस्मयेषु च' इति नानार्थरत्नमाला । विविधा ये परमहंसास्संन्यासिनः ।

**तुर्यपर्यवस्थापितानुश्रवतात्पर्यपर्यालोचनापनीतविपरीतान्वयशङ्काकळङ्कनिरङ्कुशकुशलजनालंकृतसप्तमकक्ष्यं, प्रसङ्ख्यानपरासङ्ख्यभृग्वङ्गिरोवसिष्ठादिगरिष्ठाधिकारिकमुनिमण्डलमाण्डितास्थानमण्टपं, अपदं विपदां, अगोचरं वाचां, अनाशङ्कनीयमर्वाचां, अगम्यमाचारमात्रशरणैः, असाध्यमध्वरैः, अलभ्यमधिकैरपि तपोविपाकैः, दुरारोहं महादानैः, दुरवगाहमाहवसाहसैः, असम्भावनीयं मनसापि स्वायम्भुवं भवनम्।**

---

हंसः परमहंसश्च कुटीचकबहूदकौ।' इति संन्यासिकथायां सूतसंहितावचनात् तैरवतंसिता अलङ्कृता षष्ठी कक्ष्या यस्य तत्। अतिचातुर्येण अतिकौशलेन पर्यवस्थापितं सुनिष्कृष्य निर्णीतं यदनुश्रवाणां वेदानां तात्पर्यं अभिप्रायः ब्रह्मपरत्वमिति यावत्। तस्य पर्यालोचनया परिभावनया अनुसन्धानेनेति यावत्। अपनीतौ सन्त्याजितौ यौ विपरीतः व्यत्यस्तः यः अन्वयः श्रुतपदानां योजना स च शङ्का सन्देहस्सा च ते एव कळङ्कौ यैस्ते तथाविधा ये निरङ्कुशा निर्निरोधाः कुशलाश्चतुराश्च जनाः तैरलङ्कृता सप्तमी कक्ष्या यस्य तत्। प्रसङ्ख्याने निर्विकल्पकसमाधौ प्रकृतिपुरुषविवेकसाक्षात्कारे वा प्रसङ्ख्यानेऽप्यकुसीदस्येति पातञ्जलसूत्रे तद्व्याख्यातृभिः प्रसङ्ख्यानपदस्य एतदर्थकत्वाभिधानात्। पराः आसक्ताः ये असङ्ख्याः सङ्ख्यारहिताः भृग्वङ्गिरोवसिष्ठादयो गरिष्ठाः श्रेष्ठा आधिकारिका मुनयः तेषां मण्डलेन समूहेन। 'पूगो वितानं ककरो मण्डलं चक्रवाळकं' इत्यमरः। मण्डितः भूषितः आस्थानमण्टपस्सभामण्टपो यस्य तत्। 'सभासमितिसंसदः। आस्थानी क्लीवमास्थानं' इत्यमरः। विपदां सङ्कर्षणाग्निबाधादीनां अपदं अनास्पदम्। वाचामगोचरं अविषयम्। अर्वाचामधमानां अनाशङ्कनीयमसम्भावनीयम्। आचारस्सत्सम्प्रदायानुवर्तनं तदेव तन्मात्रं शरणं रक्षितृ येषां ते तैः केवलमाचारनिपुणैरित्यर्थः। 'शरणं गृहरक्षित्रोः' इत्यमरः। अगम्यं अप्राप्यम्। अध्वरैः यज्ञैः असाध्यं सम्पादयितुमशक्यमित्यर्थः। 'यज्ञस्सवोऽध्वरो याग' इत्यमरः। अधिकैः तपसां कृच्छ्रचान्द्रायणादीनां विपाकैरप्यलभ्यं लब्धुमशक्यम्। महादानैः भूदानादिभिः दुरारोहं दुःखेन आरोढुं शक्यम्। आहवा युद्धानि। 'सङ्ग्रामाभ्यागमाहवाः' इत्यमरः। तेषु यानि साहसानि बहुप्रकारा दण्डोपायास्तैः। 'साहसं तु दमो दण्ड' इत्यमरः। दुरवगाहं प्रवेशानर्हं मनसा सङ्कल्पविकल्पात्मकेनापि अन्तःकरणविशेषेण असम्भावनीयमिदमित्थमिति तर्कितुमशक्यमित्यर्थः। स्वयम्भुवश्चतुराननस्येदं तत्सम्बन्धि भ-

---

. अनाशंसनीयमर्वाचां प्रमाणानां इति पाठान्तरम्।

**स्वाध्यायाध्ययनादृतेन विधिना दृष्ट्यापि नालोकिताः**
**सभ्यैः प्रत्युत सर्वभोगविमुखैरुत्सारिता दूरतः।**
**नृत्यन्त्यस्सुरसुभ्रुवः परमधुस्तत्र व्यथां मानसीं**
**आनन्दैकपदेऽपि धामनि कलाकौशल्यवैफल्यतः ॥ ९ ॥**

**अपि च।**

**प्राकारगोपुरविहारवितर्दिकानां**
**मूलेषु यत्र हरिनीलशिलाविभङ्गाः।**
**सक्ताश्चिरादिव जयन्ति युगान्तधूम-**
**सन्तानसङ्घटितसान्द्रमषीविलेपाः ॥ १० ॥**

**प्रविशन्तश्च तमालयं, 'ननु प्रातरागतस्य पुरुहूतनाम्नो**

---

वनं सद्म अविदूरतः नातिदूर एव। सप्तम्यास्तसिः। अद्राक्षुः ददृशुः। गुरावनुकूले कस्य किं दुष्करमिति भावः। ब्रह्मलोकं प्रविशतां देवानां तत्कार्यसम्पन्नं वृत्तं वर्णयति ॥ **स्वाध्यायेति** ॥ स्वाध्यायानां वेदानां अध्ययनं पारायणम्। अथवा स्वाध्याये जपे अध्ययने च आदृत आदरवानित्यर्थः। 'स्वाध्यायः स्याज्जपस्सुत्या' इत्यमरः। तस्मिन्नादृतेन आदरं कुर्वता। कर्तरि क्तः। विधिना विश्वसृजा दृष्ट्यापि नेत्रेणापि। 'दृष्टिर्ज्ञानेऽक्ष्णि दर्शने' इत्यमरः। नालोकिताः न दृष्टाः प्रत्युत किंचेत्यर्थः। सर्वे ये भुज्यन्त इति भोगाः विषयाः तेषु विमुखैः पराङ्मुखैः सभ्यैस्सामाजिकैः। 'सभासदस्सभास्तारास्सभ्यास्सामाजिकाश्च ते' इत्यमरः। दूरतः दूरात् उत्सारिताः निष्कासिताः। नृत्यन्त्यः नृत्तं कुर्वन्त्यस्सुरसुभ्रुवः परं सुराङ्गनास्तु आनन्दस्य उत्कृष्टसुखस्य एकपदे मुख्यस्थाने तत्रापि ब्रह्मलोकेऽपि। कलायां स्वाभ्यस्तविद्यायां कौशल्यस्य चातुर्यस्य वैफल्यतः निष्फलत्वात्। मानसीं मनस्सम्बन्धिनीं व्यथां वार्ता मनोरोगमिति यावत्। अधुः दधुरित्यर्थः। ब्रह्मलोकभवनमेव पुनर्वर्णयति ॥ **अपि चेति** ॥ यत्र भवने प्राकाराणां सालानां गोपुराणां द्वाराणाम्। 'द्वारमात्रे तु गोपुरं' इत्यमरः। विहारार्थं या वितर्दिकाः वेदिकाः तासाम्। 'स्याद्वितर्दिस्तु वेदिका' इत्यमरः। मूलेषु मूलप्रदेशेषु हरिनीलशिलानां इन्द्रनीलमणीनां विभङ्गाः खण्डाः चिरात् बहुकालमारभ्य सक्ताः युगान्ते प्रळयविशेषे यो धूमस्य सन्तानः सङ्कर्षणमुखाग्निधूमसङ्घः तेन सङ्घटिताः संप्राप्ताः सान्द्राः अविरळाः ये मषीविलेपाः कज्जलविलिप्तयः त इव जयन्ति अतिशयेन वर्तन्ते। दीपोपरिदेशविन्यस्तसुधाचूर्णविलिप्तशरावाधोभागे यथा दीपाग्रधूममषीसङ्क्रान्तयस्तथेति भावः ॥ **तमिति** ॥ तमालयं ब्रह्मसदनं प्रविशन्तः प्रवेशं कुर्वाणाः निर्जराः देवाः। ननुशब्द-

दिवस्पतेः कतितमः पुरन्दरो नामायं' इति पृच्छयमाना दौवारिकैर्निर्जरा बलवदन्तर्ललज्जिरे । अपि च गच्छतामन्तरेपामालक्ष्य गतिमातिमलीमसां, अधिगन्तव्याधिगमेन निर्वृताः सर्वतोऽपि महर्षयः कतिचित् 'अतिचिरं कालमहो खलु वयमप्यमीषां सामीप्यसारूप्यसायुज्यसालोक्यसिद्धिमाशासाना नानाविधानि तपांसि वृथा चक्रम' इति विगर्हमाणास्स्वमात्मानं लज्जितानमरान् भूयोऽपि लज्जयाञ्चक्रिरे । अथ भगवानाङ्गिरसो देवर्षिभिः परिष्वज्यमानः पदेपदे नारदादिभिः, प्रत्युद्गम्यमानो विद्वद्भिः पतञ्जलिप्रमुखैः, अभिवाद्यमानः सिद्धविद्याधरैः, आनीयमानस्सबहुमानमात्मभृत्यैः परमेष्ठिनः, परिवृतो देवैः परमाश्चर्यनिर्भरैः, प्रकृतिगुणैरिव परस्परयोगवियोगपरिणमद्भे-

स्सम्बोधन। ...तः आगतस्य आयातस्य पुरुहूत इति नामधेयं यस्य तथाभूतस्य दिवस्पतेः स्वर्गाधिपतेः । निर्धारणे षष्ठी । जात्येकवचनम् । एवं च स्वर्गाधिपतीनां मध्य इत्यर्थः । पुरन्दर इति नाम प्रसिद्धः अयं परिदृश्यमानः कतमः किंसङ्ख्यापूरक इति दौवारिकैः पृच्छ्यमानाः अनुयुज्यमानास्सन्तः । अन्तः बलवदत्यन्तं ललज्जिरे लज्जामापुरित्यर्थः । देवानेव सदनं प्रविशतः पुनर्वर्णयति ॥

**गच्छतामिति** ॥ अन्तः भवनान्तरप्रदेशं गच्छतां गमनं कुर्वतां एषां देवानां मलीमसां मलिनाम् । 'मलीमसं तु मलिनं' इत्यमरः । गतिं दशाम् । 'गतिर्मार्गे दशायां च' इति विश्वः । आलक्ष्य दृष्ट्वा । अधिगन्तुं अवश्यं प्राप्तुं योग्योऽधिगन्तव्यो ब्रह्मलोकः तस्याधिगमेन प्राप्त्या सर्वतः सर्वप्रकारैः निर्वृताः सुखिताः महर्षयः ब्रह्मलोकवासिन इति शेषः । अहो इत्याश्चर्ये खेदे च निपातः । कतिचित् केचित् वयममीषां देवानां सामीप्यस्य समीपवर्तनस्य सायुज्यस्य तादात्म्यस्य सारूप्यस्य समानरूपत्वस्य सालोक्यस्य सलोकतायाः सिद्धिं प्राप्तिं आशंसमाना इच्छन्तस्सन्तः अतिचिरकालं बहुकालं विविधानि अनेकविधानि तपांसि कृच्छ्रचान्द्रायणादीनि वृथा निष्प्रयोजनम् । कर्मभूमिनिवासदशायामिति भावः । चक्रम कृतवन्तः इति स्वमात्मानं बुद्धिम् । 'आत्मा यत्नो धृतिर्बुद्धिस्स्वभावो ब्रह्म वर्ष्म च' इत्यमरः । विगर्हमाणाः विनिन्दन्तस्सन्तः लज्जितान् सञ्जातलज्जान् अमरान् भूयोऽपि लज्जयाञ्चक्रिरे त्रपयामासुरित्यर्थः । ब्रह्मलोकवासिभिस्सबहुमानं नीतो बृहस्पतिः भद्रासनस्थं ब्रह्माणं दृष्ट्वा किञ्चिद्वक्तुमारभतेत्याह ॥

**अथेति** ॥ अथालयप्रवेशानन्तरं नारदादिभिस्सुरर्षिभिः पदे पदे प्रतिपदं स्तूयमानः प्रशस्यमानः पतञ्जलिप्रमुखैः विद्वद्भिः पण्डितैः प्रत्युद्गम्यमानः

**दैरुच्चावचैर्मणिभिरुपरञ्जितं, उपर्यास्तीर्णहंसतूलिकातल्पकल्पितमहार्होपबर्हं, अहिंसानृशंस्यकोमळिमावर्जितशमदमाभोगमन्तःकरणमिव महायोगिनां, ताळवृन्तचामरताम्बूलकरण्डकळाचिकाद्युपचारचतुरवरवर्णिनीजनन्यस्तवामहस्तवेष्टिततया व्याकोचाष्टदळात्मिकां व्यञ्जयदिव कमलासनतां, त्रिभङ्गीसमुन्नततया त्रिवर्गातीतमिव सर्वतोभद्रं भद्रासनमधितिष्ठन्तं, समसमयसमुद्यदादित्यसहस्रभास्वरैरर्केन्दुविद्युदनलरूपचतुस्तेज-**

अभिगम्यमानः । सिद्धाविद्याधरैः अभिवन्द्यमानः नम्यमानः । परमेणाश्चर्येण विस्मयेन निर्भरैः परिपूर्णैः देवैः परिवृतः । भगवानाङ्गिरसो बृहस्पतिः परमेष्ठिन आप्तभृत्यैस्सबहुमानं यथा तथा आनीयमानस्सन् । परस्परसंयोगवियोगाभ्यां संश्लेषविश्लेषाभ्यां परिणमन्तस्समुद्भवन्तः भेदाः प्रकारा येषां ते तथाविधैः प्रकृतेः महासुषुप्तिनामिकायाः गुणैः सत्त्वरजस्तमोभिरिस्थितैः उच्चावचैः अनेकविधैः । 'उच्चावचं नैकभेदं' इत्यमरः । मणिभिर्वज्रादिभिरुपरञ्जितं उपरि भद्रासनस्योपरि भागे आस्तीर्णं परिस्तीर्णं यत् हंसतूलिकातल्पं हंसतूलिकया विरचिता शय्येत्यर्थः । 'तल्पं शय्याट्टदारेषु' इत्यमरः । तस्मिन् कल्पितः निक्षिप्तः महार्हः श्लाघ्यः उपबर्हः उपधानं यस्मिन् तत् । 'उपधानं तूपबर्हश्शय्यायां शयनीयवत्' इत्यमरः । अत एव उहिंसा अद्रोहः नृशंसो घातुको न भवतीत्यनृशंसः तस्य भाव आनृशंस्यं अघातुकत्वमित्यर्थः । 'नृशंसो घातुकः क्रूरः' इत्यमरः । तयोः कोमलिम्ना उच्चयेन आवर्जितः शमदमयोः अन्तरिन्द्रियबहिरिन्द्रियनिग्रहयोराभोगः पूर्णता यस्मिन् तत्तथा । 'आभोगौ पूर्णतायत्नौ' इति नानार्थरत्नमाला । महायोगिनां योगीश्वराणामन्तःकरणमिव स्थितम् । ताळवृन्तं व्यजनं चामरः ताम्बूलकरण्डः ताम्बूलभाजनं कळाचिका चर्वितनिष्ठीवनोपयोगिपात्रविशेषः तदादिभिरुपचारे सेवायां चतुराः ये वरवर्णिनीजनाः स्त्रीजनाः तैः न्यस्ता निक्षिप्ताः ये वामहस्ताः तैर्वेष्टिततया परिवृततया व्याकोचाः विकचानि अष्टसङ्ख्याकानि दळानि यस्य स तथाभूतः आत्मा स्वभावो यस्यास्तथाविधां कमलासनतां व्यञ्जयदिव अभिव्यक्तं कुर्वदिव स्थितं तिसृभिः भङ्गीभिः आरोहणरूपप्रकारैः । 'भङ्गी प्रकारे तुङ्गस्तु शैलपुन्नागयोरपि' इति नानार्थमाला । सोपानैरिति यावत् । समुन्नततया उच्चतया त्रिवर्गं धर्मकामार्थत्रितयं अतिक्रान्तमिव स्थितम् । 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गस्समोक्षकैः' इत्यमरः । सर्वतः भद्रं मङ्गळं भजतां यस्मादिति तत्तथा । भद्रासनं सिंहासनमित्यर्थः । 'नृपासनं तु यद्भद्रासनं सिंहासनं तु तत्' इत्यमरः । अधितिष्ठन्तं । अधिशीङ्स्थासां कर्मेति कर्मत्वम् । समस

स्समुत्तम्भनायेव चतुर्दिक्षु निर्जिहानैस्तेजोभिरवलुम्पन्तमिव दिव्यमपि चक्षुर्दिवौकसां, सन्ततव्यवहारसंसक्तचतुरागमाक्षरप्रेक्षणीयदन्तचन्द्रिकाविकासपरिहृतसंसारशार्वरैरायतापाङ्गरिङ्गदभङ्गुरकरुणातरङ्गमालाभिराचार्यकाभिषेकमादधानैरिव योगिनामध्यात्मविद्यासु, चतुर्भिरिवान्तःपुरैर्दयितानां चतसृणामपि श्रुतीनां, आननपङ्कजैरनुगृह्णन्तमभितोऽपि महाशयान्, त्रैयम्बकमकुटावलोकनावलम्बितहंसदशार्जितेन मृणाळवलयेनेव मृदुना शुचिना च सूत्रमयेनोपवीतेन सूचयन्तामिव सूत्रात्मकतामात्मनः, शस्त्रास्त्रविद्याकूपारपारीणक्षत्रियवर्गसर्गनि-

---

एककाले समुद्यतां समुद्भवतां आदित्यानां सहस्रेणेव भास्वरैः प्रकाशैः अर्केन्दुविद्युदनलरूपाणां सूर्यचन्द्रतटिदग्निस्वरूपाणां चतुर्णां तेजसां समुत्तम्भनाय स्तम्भनायेव चतुर्दिक्षु निर्जिहानैः निर्गच्छाद्भिः तेजोभिः मुखदीप्तिभिः दिवौकसां देवानां दिव्यं अभौमं चक्षुरपि अवलुम्पन्तं मुकुळयन्तमिव स्थितम् । सन्ततं सदा व्यवहारे उच्चारणे संसक्ताः त्रयश्चत्वारो वा त्रिचतुराः आगमाक्षराः संयुक्तवर्णा इत्यर्थः । तेषु प्रेक्षणीया या दन्तचन्द्रिका दन्तप्रभा तया परिहृतं संसारः जननमरणप्रवाह एव शार्वरं तमः येषां ते तथाविधैः । 'शार्वरं त्वन्धतमसे घातुके भेद्यालङ्कके' इत्यमरः । आयताः दीर्घाः अपाङ्गा नेत्रान्ता एव रिङ्गन्त्याः प्रवहन्त्याः करुणायाः कृपायास्तरङ्गाः तेषां मालाभिः परम्पराभिः आत्मनि अध्यात्मं विभक्त्यर्थेऽव्ययीभावः । अध्यात्मविद्या उपासनाः तासु विषये महायोगिनां आचार्यके आचार्यभावे कर्मणीत्यर्थः । अभिषेकं पट्टाभिषेकं आदधानैः कुर्वद्भिरिव स्थितैः । योगिनां ब्रह्मविद्याचार्यकप्रदैरिति भावः । चतसृणां श्रुतीनामेव दयितानां पत्नीनां अन्तःपुरैः रत्यगारैरिव स्थितैः । 'स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनं' इत्यमरः । चतुर्भिराननपङ्कजैः मुखकमलैः अभितः परितोऽपि महाशयान् सुकृतिनः । 'सुकृती पुण्यवान् धन्यो महेच्छस्तु महाशयः' इत्यमरः । त्रैयम्बकस्य त्र्यम्बकसम्बन्धिनः मकुटस्य शिरसः अवलोकनार्थं दर्शनायालम्बिता आश्रिता हंसस्य राजहंसस्य या दशा अवस्था तस्यामार्जितेन सम्पादितेन मृणाळवलयेन कमलनाळमण्डलेनेव स्थितेन मृदुना सुकुमारेण शुचिना शुभ्रेण सूत्रमयेन तन्तुस्वरूपेण उपवीतेन यज्ञसूत्रेण । 'उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे' इत्यमरः । आत्मनः स्वस्य सूत्रमात्मनि देहे यस्य तस्य भावस्तत्ता ताम् । अन्यत्र लिङ्गशरीरसमष्ट्यभिमानिनः ईश्वरस्य सूत्रात्मसंज्ञकताम् । अत्रेदं बोध्यं प्रथममीश्वरस्त्रिविधः कारणशरीरसमष्ट्यभिमानी सूक्ष्मशरीरसमष्ट्यभिमानी स्थूलशरीरसमष्ट्यभिमानी चेति । तत्र प्रथमनिर्दिष्टस्येश्वरस्य अन्त-

वृ॑ततयेव शस्त्रग्रहपराङ्मुखेन प्रकृत्यादिपृथिव्यन्तपञ्चविंशतितत्त्वपरिवर्तनमात्रमेव व्यापार इति प्रदर्शयतेव पाणिना दक्षिणेन परिवर्तयन्तमक्षमालिकां, अहर्मुखेषु प्रथममपामेव स्रष्टव्यतामवधार्य धार्यमाणेनेव स्फटिकमयेन कमण्डलुना परिष्कृतेतरकरपल्लवं, असकृदधीताध्यापितनिखिलनिगमान्तासिद्धान्तपान्थसनकसनन्दनादिमहादेशिकोद्भावितदुर्भेदसंशयच्छेदसंवादजिज्ञासया मुहुर्मुहुरवलोकयन्तमन्तिकगतां वाग्देवतां, आचार्यमाचार्याणां, अधिगन्तव्यमधिगन्तव्यानां, परमानन्दतु-

---

र्यामी अव्याकृत इति द्वे संज्ञे भवतः । तथा द्वितीयस्य हिरण्यगर्भस्सूत्रात्मा प्राणी चेति तिस्रस्संज्ञाः । एवं तृतीयस्य विराट् वैराजः वैश्वानर इति तिस्रस्संज्ञा भवन्तीति ग्रन्थविस्तरभयादधिकं न लिख्यते । सूचयन्तं प्रकाशयन्तम् । शस्त्रास्त्राणां विद्यैव अकूपारस्समुद्रः । 'समुद्रोऽब्धिरकूपार' इत्यमरः । तस्य पारीणाः पारगामिनः पारं दृष्टवन्त इति यावत् । ते च ते ये क्षत्रियाः तेषां वेर्गस्य सर्गेण निर्माणेन निर्वृततयेव सुखिततयेव तेषामेवं स्वकार्यजयकारित्वादिति भावः । शस्त्राणां ग्रहणे स्वीकारे पराङ्मुखेन निवृत्तेन प्रकृतिः प्रधानमादिर्येषां तानीति तद्गुणसंविज्ञानबहुव्रीहिः । प्रकृत्यादीनि च तानि पृथिव्यन्तानि चेति कर्मधारयः । तथाविधानि यानि पञ्चविंशतिसङ्ख्याकानि तत्त्वानि तेषां परिवर्तनामात्रं भ्रमणनिर्वहणमेव व्यापारः कार्यमिति प्रदर्शयतेव स्थितेन दक्षिणेन पाणिना अक्षमालिकां जपसरं परिवर्तयन्तं परिभ्रमयन्तं । अहर्मुखेषु प्रत्यूषकालेषु । 'प्रत्यूषोऽहर्मुखं कल्यं' इत्यमरः । प्रथममपामुदकानामेव स्रष्टव्यतां सर्जनकर्मत्वं अवधार्य निश्चित्य धार्यमाणेन विधृतेन स्फटिकमयेन कमण्डलुना । 'अस्त्री कमण्डलुः कुण्डी' इत्यमरः । परिष्कृतः अलङ्कृतः इतरकरपल्लवः वामपाणिकिसलयं यस्य तथाभूतं असकृद्बहुवारं स्वेन अधीता अन्यस्माल्लब्धाः अध्यापिताः परेभ्यः स्वेन प्रोक्ता ये निगमान्ता वेदान्ता उपनिषद इति यावत् । तेषु ये सिद्धान्ता निष्कृष्टार्थाः तेषु पान्थैस्सञ्चारशालिभिः केवलं तत्परैरिति भावः । सनकसनन्दनादिभिः गुरुभिर्देशिकैः उद्भाविताः प्रकाशिता दुर्भेदा दुरुच्छेदाः संशयाः तेषां छेदः तस्मिन् विषये संवादः गुरुशिष्यकथा तस्मिन् जिज्ञासया तत्र वक्तव्यार्थजिज्ञासया मुहुर्मुहुः वारंवारं अन्तिकं समीपं गतां प्राप्तां वाग्देवीं सरस्वतीं अवलोकयन्तं पश्यन्तम् । आचार्याणां मन्त्रव्याख्यातॄणां । 'मन्त्रव्याख्याकृदाचार्य' इत्यमरः । 'यस्तु धर्मानाचिनोति स आचार्य' इति भगवानापस्तम्बः । मनुरपि 'उपनीय तु यश्शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते ॥' इति । मन्त्रव्याख्यातारम् । अधिगन्तव्यानामिन्द्राग्न्यादीनामप्यधिगन्त-

न्दलमापे प्रपन्नानुग्रहैकव्यसनिनं, समष्टिं भूतग्रामस्य, साधारणं पितरमखिललोकस्य, विश्रान्तिभूमिं विद्याफलानां, विरामपदं वाग्विभूतीनां, दूरं दुराशयानां, अदूरमात्मवेदिनां, अधिगम्य भगवन्तं पितामहं, अत्यद्भुतसभासभानाथसन्दर्शनजडीकृतो वाचस्पतिरपि भगवान् वाग्देवतावलोकनसम्पन्नभयकम्पसम्भ्रमस्तम्भितवाङ्मुखः क्षणमवाङ्मुखश्च तदीयदिव्यतेजःप्रतिहतदृष्टितया यावदास्त स्तब्ध इव, तावदनुग्रहमय्या दृशा जगन्निधेः, आगच्छ वत्सेत्यमृतासारकिरा गिरा च गिरां देव्या निर्व्याजमाप्यायितः, समाधाय कथञ्चिदान्तरं क-

---

व्यं परमानन्देन उत्कृष्टसुखेन तुन्दिलं पीवरमपि प्रपन्नस्य प्राप्तस्य अनुग्रहे एकं मुख्यं व्यसनं यस्य स तथाभूतमिति विरोधः। आभासस्तु प्रपन्नानां शरणागतानां अनुग्रहे परिपालनविषये एकं मुख्यं व्यसनं आसक्तिर्यस्य स तथाभूतम्। कृष्णसर्पवद्वल्मीकजामिति भाष्यप्रामाण्यात् न कर्मधारयान्मत्वर्थीय इति नियमस्य प्रायिकत्वेनायं समासस्साधुरेवेति बोध्यम्। भूतानां अण्डजजरायुजस्वेदजोद्भिज्जलक्षणानां प्राणिनां ग्रामस्य बृन्दस्य। 'क्लीबे भूतं पिशाचादौ भूम्यादौ जन्तुसत्त्वयोः' इति नानार्थरत्नमाला। 'ग्रामः बल्ल्यां स्वरे वृन्दे' इति विश्वः। समष्टिं समष्ट्यभिमानिनम्। वृक्षाणां समष्टिर्यथा वनमित्युच्यते तथा भूतानां समष्टिर्हिरण्यगर्भ इत्युच्यत इति भावः। अखिललोकस्य अखिलभुवनस्य अखिलजनस्य वा साधारणं समानं पितरं विद्यानां उपासनानां यानि फलानि तेषां विश्रान्तिभूमिं विश्रमस्थानं वाग्विभूतीनां वाक्सम्पदां विरामपदं अवसानस्थानम्। ततः परतरं तुरीयं वक्तुं वाचो न प्रभवन्तीति भावः। दुराशयानां कलुषितचित्तानां दूरं गन्तुमशक्यमिति भावः। आत्मवेदिनां ब्रह्मज्ञानिनां अदूरं सुगममिति भावः। भगवन्तं पूज्यतमं पितामहं ब्रह्माणं अधिगम्य प्राप्य अत्यद्भुतयोरत्याश्चर्ययोस्सभासभानाथयोस्सन्दर्शनेन अवलोकनेन जडीकृतः स्तब्धः कृतः भगवान्वाचस्पतिरपि वाग्देवताया अवलोकनेन दर्शनेन सम्पन्नैः भयकम्पसम्भ्रमैः भीतिवेपथुचापलैः स्तम्भिता निरुद्धा वाग्यस्य तत्तथाभूतं मुखं यस्य स तथाभूतः। तदीयेन ब्रह्मसरस्वतीसम्बन्धिना तेजसा प्रतिहते सन्ताडिते दृष्टी यस्य तस्य भावस्तत्ता तया क्षणमवाङ्मुखः अधोमुखः विनमिताशिरस्क इति यावत्। स्तब्धः मूढ इव यावदास्त अवर्तत तावदेव जगन्निधेः ब्रह्मणः अनुग्रहमय्या प्रसादरूपया प्रचुरानुग्रहवत्येत्यर्थः। दृशा च अमृतस्य सुधाया आसारान् धारासम्पातान् किरतीति कीर्। तथाविधया गिरां देव्याः वत्सागच्छेति गिरा वाचा च निर्व्याजं यथा तथा आप्यायितः परितोषितस्सन् आन्तरं करणं चित्तमित्यर्थः। कथञ्चित्कृच्छ्रेण समाधाय अभ्रान्तं कृत्वा

रणं, अनुस्मरन् प्रणवं, आवर्तयन् ब्रह्मसूक्तानि तत्तदागमोदितानि, प्रागेव नम्रोऽपि भक्तिभारेण प्रणम्य शतशः सहामरैः प्रसादादेव देवदेवस्य प्रारभत किञ्चिदेवमभिधातुम् ।

'अगन्तव्यं तर्कैरनधिगमनीयं क्रतुशतैः
अनासाद्यं दानैरनुपसरणीयं च तपसा ।
भवन्तं पश्यन्तश्शुचमभिभवन्तं प्रणमतां
कृतार्था जातास्स्मः पुनरपि कृतार्थाः पुनरपि ॥ ११ ॥

किञ्च ।

भूतग्राममिमं चतुर्विधमहो निर्मासि यल्लीलया
यच्च व्याकुरुषे निरन्तरमिमाः साङ्गाश्चतस्रश्श्रुतीः ।
चातुर्यं कथमीदृगित्यपगता शङ्का समस्तापि नः
चातुर्यं भवतो भुजेष्वपि मुखेष्वद्य स्वयं पश्यताम् ॥'

इति । स च ततः 'साधु वत्स साधु स्थाने किल छन्दो-

---

प्रणवं ओङ्कारं अनुस्मरन् ओङ्कारस्य मङ्गळकरत्वादिति भावः । तत्तदागमेषु वेदेषु उदितानि उक्तानि ब्रह्मप्रतिपादकानि सूक्तानि हिरण्यगर्भस्समवर्तताग्र इत्यादीनि आवर्तयन् जपन् भक्तिभारेण प्रागेव नम्रोऽपि अमरैस्सह शतशः प्रणम्य नमस्कारं कृत्वा । देवदेवस्य ब्रह्मणः प्रसादात् अनुग्रहादेव एवं वक्ष्यमाणप्रकारेण किञ्चिदभिधातुं वक्तुं प्रारभत उपाक्रमत । उक्तप्रकारमेवाह ॥ **अगन्तव्यमिति** ॥ तर्कैः श्रुत्यनुमतैः युक्तिभिः अगन्तव्यं अप्राप्यं क्रतूनां शतैरनेकैरपि अनधिगन्तव्यं दुर्लभमित्यर्थः । दानैरनासाद्यं आसादयितुमशक्यं तपसा अनशनव्रतेन अनुपसरणीयं गन्तुमशक्यमित्यर्थः । प्रणमतां नमनं कुर्वतां शुचं शोकमभिभवन्तं नाशयन्तमित्यर्थः । एवंविधं भवन्तं पश्यन्तः वयं कृतार्थाः लब्धप्रयोजना जाताः सम्पन्नाः स्मः भक्त्यतिशयद्योतनाय द्विरुक्तिः । ब्रह्माणं स्तौति ॥ **भूतेति** ॥ चतस्रः विधाः प्रकाराः यस्य स तथाभूतम् । 'विधा विधौ प्रकारे च' इत्यमरः । इमं भूतानां जरायुजाण्डजस्वेदजोद्भिज्जलक्षणानां प्राणिनां ग्रामं समूहं लीलया अनायासेन निर्मासि निर्माणं करोषीति यत् निरन्तरं सर्वदा साङ्गाः शिक्षाद्यङ्गसहिताः इमाः चतस्रः श्रुतीः ऋग्यजुस्सामाथर्वणलक्षणान् वेदान् व्याकुरुषे विविच्य ब्रूषे इति यत् तच्चातुर्यं भवतः भुजेषु मुखेषु च अद्य स्वयं पश्यतां नः ईदृक्चातुर्यं तस्य कथमिति समस्तापि शङ्का सन्देहः अपगता निर्गता । आसीदिति शेषः । ब्रह्मापि बृहस्पतिं नामनिर्वचनपूर्वकं जगादेत्याह ॥ **इतीति** ॥ इति ततः हे वत्स छन्दांसि सामानि गायन्तीति छन्दोगास्सामगाः

गाः बृहती वाक् तस्याः पतिर्बृहस्पतिरिति नाम ते निराहुः' इति प्रशस्य 'परिम्लान इव लक्ष्यते कुतः पाकशासनः' इति पृच्छति सानुकम्पमम्भोजसम्भवे, बृहस्पतिः पुनरिदमभाषत।

'परिम्लाना दीनाश्चिरपरिहृतस्वस्वभवनाः
चरन्तः पादाभ्यामवनिवलये भिक्षव इव।
यदाख्यातुं दुःखं तव सविधमेते परिगताः
तदद्य व्यस्मार्षुः पदमिदमुपेता वितिमिरम्॥ १२-१३॥

किञ्च।

यत्प्रत्यस्तमितप्रपञ्चमखिलव्यापारपारङ्गतं
प्रत्यग्ज्योतिरनुत्तरं शमधनैरालोच्यमेतादृशैः।

बृहस्पतिशब्दे बृहत्याः पतिः बृहस्पतिरिति विगृह्य तत्र बृहतीशब्दस्य वागर्थः तस्याः पतिः अधिपतिरिति ते नाम निराहुः किल निर्वचनं कुर्वन्तीत्येतत् स्थाने साधु साधु इत्यन्वयः। वाग्घि बृहती तस्या एष पतिर्बृहस्पतिरिति छन्दोगश्रुतिः॥ **इतीति**॥ इति इत्थं प्रशस्य प्रश्लाघ्य पाकशासनः इन्द्रः कुतो हेतोः परिम्लान इव गतहर्ष इव लक्ष्यते परिदृश्यत इति अम्भोजसम्भवे कमलासने सानुकम्पं सदयं यथा तथा पृच्छति प्रश्नं कुर्वति सति बृहस्पतिः पुनरिदमभाषत उवाच। कथनप्रकारमेवाह॥ **परीति**॥ परिम्लानाः गतहर्षाः चिरात्प्रभृति परिहृतानि परित्यक्तानि स्वस्वानि भवनानि यैस्तथाभूताः अत एव दीनाः दरिद्राः अवनिवलये भूमण्डले भिक्षव इव संन्यासिन इव पदाभ्यां चरन्तः एते देवाः यद्दुःखं आख्यातुं वक्तुं तव सविधं अन्तिकं परिगताः प्राप्ताः बभूवुः अद्य वितिमिरं अज्ञानलक्षणतमोरहितं इदं पदं स्थानं उपेताः उपगतास्सन्तः तद्दुःखं व्यस्मार्षुः विसस्मरुः। अध्यात्मशास्त्रश्रवणकथनैकतत्परं भवन्तं प्रत्यस्मदीयां दशां निवेदयितुं लज्जया रसना न प्रवर्तत इत्याशयेनाह॥ **यदिति**॥ **अस्तमिति**॥ स्मृतिगोचरीभूतमपि न भवतीति भावः। मान्तो निपातो अदर्शनार्थकः अत्र प्रतीत्युपसर्गपूर्वस्सन् वर्तते। तथा च प्रत्यस्तं अदर्शनं लयमिति यावत्। इतः प्राप्तः प्रपञ्चः स्थावरात्मकजगतां विस्तृतिः स्तोमो वा यस्मिन् तत्। 'प्रपञ्चो विस्तृतौ स्तोम' इति नानार्थरत्नमाला। विलीनप्रपञ्चाधिकरणमिति पर्यवसितार्थः। अत्रार्थे प्रमाणन्तु यत्प्रयन्त्यभिसंविशन्तीति श्रुतिः। अखिलानां समस्तानां व्यापाराणां सात्त्विकराजसतामसक्रियाणां पारं तटम्। 'पारी पात्र्यां तटे पारं' इति नानार्थरत्नमाला। गतं प्राप्तं सर्वत्र क्रियासाक्षित्वेन उदासीनमिति भावः। साक्षी चेता केवलो निर्गुणश्चेति श्रुतेः। यद्वा अखिलानां समस्तानां व्यापाराणां सृष्टिस्थितिलयस्वरूपाणां पार-

तत्सम्प्रश्नकथासुधाभरितयोः सेक्तुं भवत्कर्णयोः
मिथ्याज्ञानविचेष्टितानि बलवज्जिह्रेति जिह्वैव नः ॥ १४ ॥

अथाप्यनुयोगाज्ञानिर्वर्तनाय किञ्चिदावेद्यते । योऽसावग्रतो भवतः परिणाम इव करुणायाः, परिपाक इव शमदमोपरमाणां, अधितिष्ठति शमवतामग्रासनं दुर्वासाः, अयमेव सर्वासां निदानमस्मदापदाम् ।

ङ्गतः पारीणः समर्थ इति यावत् । सहायमन्तरा सर्वं कार्यं लीलयैव निर्वहतीति भावः । यतो वा इमानि भूतानि जायन्त इति श्रुतेः । अथवा अखिलानां समस्तव्यापाराणां लौकिकवैदिकक्रियाणां पारं परिसमाप्तिमित्यर्थः । पार तीरकर्मसमाप्ताविति धातुः । गतं प्राप्तं तत्र गतानां कर्तव्यं नास्तीति भावः । आहोस्वित् प्रत्यक्षादिप्रमाणानां व्यापाराः व्याप्तयः प्रवृत्तय इति यावत् । तेषां पारमवसानं गतं प्राप्तं अप्रमेयत्वात्तस्येति भावः । अथवा शास्त्रपारङ्गत इति वाक्यस्य यथा कृत्स्नशास्त्रद्रष्टेत्यर्थः तथा अखिलव्यापारपारङ्गतमित्यस्यापि निखिलकर्मद्रष्टृत्यर्थः । एतादृशैः एवंविधैः शमः अन्तरिन्द्रियनिग्रहः धनं येषां तैः आलोच्यं आलोचनीयमिति यावत् । अविद्यमानं उत्तरं उत्तमं यस्मात्तत् । 'प्रतिवाच्युत्तरं ना तु विराटतनयेनले । त्रिषूदीच्योत्तमोर्ध्वेषु' इति नानार्थरत्नमाला । सर्वोत्तममिति पर्यवसितार्थः । ज्योतिः स्वयम्प्रकाशः तत्प्रत्यक् यद्ब्रह्मास्ति तस्य परब्रह्मणः सम्प्रश्नः स्वरूपजिज्ञासयानुयोगः । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः । तस्य कथा सन्दर्भः सैव सुधा अमृतं तया भरितयोः पूरितयोः भवतः कर्णयोः श्रोत्रयोः मिथ्याज्ञानं मिथ्याभूतपदार्थविषयकं ज्ञानं तेन विजृम्भितानि आरब्धानि । अथवा मिथ्याज्ञानस्य विपर्ययात्मकज्ञानस्य विजृम्भितानि विलसितानि तत्स्वरूपाणीति यावत् । नः अस्माकं विचेष्टितानि व्यापारान् सेक्तुं सेचयितुं श्रावयितुमिति यावत् । जिह्वा रसनैव जिह्रेति लज्जते । लज्जया न प्रवर्तत इति भावः । पाकशासनः किमर्थं परिम्लान इव लक्ष्यत इत्यस्योत्तरमाह ॥ **अथापीति** ॥ अथापि तदपि अनुयोगः प्रश्नः स एवाज्ञा भवच्छासनं तस्य निर्वर्तनाय करणाय किञ्चित् स्वल्पं आवेद्यते विज्ञाप्यते । भवतः अग्रतः पुरतः करुणायाः कृपायाः परिणामः विकार इव स्थितः । 'परिणामो विकारे द्वे समे विकृतिविक्रिये' इत्यमरः । शमः अन्तरिन्द्रियनिग्रहः दमः बहिरिन्द्रियनिग्रहः । 'शमथस्तु शमश्शान्तिः दान्तिस्तु दमथो दमः' इत्यमरः । उपरमः विधिवदनुष्ठितकर्मणां परमेश्वरे समर्पणम् । तेषां परिपाकः सारांश इव । शमः एषामस्तीति शमवन्तः तेषां निर्धारणे षष्ठी । योऽसौ अग्रासने अधितिष्ठति अध्यास्ते । अधिशीङ्स्थासां कर्मेत्याधारस्य कर्मत्वम् । अयं दुर्वासा एव सर्वासां अस्मदस्माकं आपदां निदानं

अव्याजकोपनिधिना मुनिनामुनैव
निर्वासिता सुरपतेस्सुरलोकलक्ष्मीः।
आसाद्य दानवकुलानि दिवौकसो नः
चक्रे पदं कृपणमानवदुर्दशानाम् ॥ १५ ॥

**अथ यद्भवतैव कल्पितमध्वरहविर्जीवनममर्त्यानामपहृते तस्मिन्नसुरैः, असम्भाविते च यादाकादाचित्के दाने द्विजन्मनां, अशिक्षिते च भौमवदन्नसाधनव्यसने, भवत्प्रसादादवधूय सौवर्गराज्यसिसाधयिषां, अपहाय दिव्यभोगेषु कौतूहलं, अन्नायैव स्पृहयमाणा निरन्तरं, अनिमिषतया श्रमावर्जितमूर्च्छास्स्वापमप्यलभमानाः, सुलभमाना दिवौकसस्सूक्ष्मतरं**

---

कारणम्। 'निदानं त्वादिकारणं' इत्यमरः। लोकानुरोधेनेव स्वापराधमप्रकटीकृत्य दुर्वासस्येवापराधमारोप्य तदग्रे प्रोवाचेत्याह ॥ **अव्याजेति** ॥ अविद्यमानः व्याजो निमित्तं यस्य सः तथा स चासौ कोपश्चेति कर्मधारयः। तस्य निधिना स्थानभूतेन अमुना अनेनैव मुनिना निर्वासिता निष्कासिता सुरलोकस्य लक्ष्मीः कर्त्री सम्पत्। 'लक्ष्मीस्सम्पद्रमा शोभा' इति नानार्थरत्नमाला। दानवानां कुलानि सदनानि। 'गेहे देशे जनपदे सजातीयगुणेऽन्वये। कुलं' इति नानार्थरत्नमाला। आसाद्य प्राप्य दिवौकसः स्वर्गवासिनः अस्मान् कृपणाः क्षुद्राः ये मानवाः मनुष्याः तेषां याः दुर्दशाः दुरवस्थाः तासां पदं भाजनं चक्रे कृतवती। गतश्रीणामस्माकं म्लानता कथं न स्यादिति भावः। एतदारभ्य वक्तव्यं मुख्यमंशमाह ॥ **अथेति** ॥ अथ कार्त्स्न्येनेत्यर्थः। 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः। भवतैव अमर्त्यानां देवानां यत् अध्वरेषु यागेषु यानि हवींषि तैः जीवनं कल्पितं निर्दिष्टं तस्मिन् हविर्लक्षणजीवने असुरैरपहृते सति बलाद्गृहीते सति यथाकथञ्चित् कृच्छ्रेणापीत्यर्थः। द्विजन्मनां द्विजसम्बन्धिनीत्यर्थः। सम्बन्धसामान्ये षष्ठी। दाने असम्भाविते अतर्किते सति। भूमौ भवाः भौमाः भूलोकवासिनः तैस्तुल्यं भौमवत्। अन्नस्य साधनं सम्पादनं तस्य व्यसनं उद्योगः तस्मिन्। भवतः प्रसादादनुग्रहात् अशिक्षिते अनभ्यस्ते सति। स्वर्गस्येदं सौवर्गं स्वर्गसम्बन्धि यद्राज्यं राज्ञः कर्म भावो वा तस्य सिसाधयिषां साधयितुमिच्छामवधूय। दिव्यभोगेषु दिव्यसुखेषु। 'भोगस्सुखे स्त्र्यादिभृतौ' इत्यमरः। कौतूहलं उत्कण्ठां अवधूय विधूय निरन्तरं सर्वदा अन्नायैव स्पृहयमाणाः इच्छमानास्सन्तः। अविद्यमानाः निमिषाः निमेषाः येषां तेषां भाव. तया अनिमिषतया श्रमेणायासेन आवर्जिता सम्पादिता या मूर्च्छा अवस्थाविशेषः येषां ते तथा। स्वापमपि निद्रामपि अलभमानाः अभजन्तः सुलभो मानो देवा इत्यभिमानो येषां ते तथाविधाः। 'मानश्चित्तसमुन्नतिः'

व्युदपद्यन्त दुर्भगानामन्नार्थिनामर्थनाभङ्गमन्दाक्षसन्धुक्षितान्तरज्वालाकलापसम्भृतेषु सम्भ्रमेषु मानवानाम् । किं बहुना ।

यदि यज्जीवितमेतैस्तदायुषा कल्पितेन भवतैव ।
या त्वियती मांसलता साप्यन्नापायशोभेन ॥ १६ ॥

आस्तामिदम् ।

प्रेक्षावन्तो दिशि दिशि नराः प्रेक्षमाणा धरण्यां
इत्थंभूतान् सुरपरिबृढानिन्द्रवैश्वानरादीन् ।
तत्तत्साम्योदयफलपरामप्रमाणीं पुराणीं
मत्वा वाचं विदधति शनैः कर्ममार्गेष्ववज्ञाम् ॥ १७ ॥

---

इत्यमरः । दिवौकसः स्वर्गवासिनो देवाः अन्नमर्थितुं शीलं येषां ते अन्नार्थिनः तेषाम् । अत एव दुष्टः भगः कामो येषां ते दुर्भगाः । 'भगश्रीकाममाहात्म्य' इत्यमरः । निष्फलकामानामिति यावत् । अत एव अर्थनाया याञ्चायाः भङ्गः पराजयः वैफल्यमिति यावत् । 'भङ्गः खण्डे पराजये' इति रत्नमाला । तेन यन्मन्दाक्षं लज्जा तेन सन्धुक्षितानां उद्दीपितानाम् । धुक्ष दीपने इति धातोः कर्मणि क्तः । आन्तरज्वालानां हार्दशोकाग्निज्वालानां कलापेन समूहेन । 'कलापो भूषणे बर्हे तूणीरे संहतावपि' इत्यमरः । सम्भृतेषु संपादितेषु मानवानां सम्भ्रमेषु अत्यादरेषु भयेषु आवेगेषु वा । 'सम्भ्रमोऽत्यादरे भीतावावेगे च' इति नानार्थरत्नमाला । सूक्ष्मतरं स्वल्पं व्युदपद्यन्त व्युत्पन्ना बभूवुः । अन्ततः मानव दुरवस्थामापुरिति भावः ॥ **यदिति** ॥ एतैः देवैः इयत् एतावत्पर्यन्तं जीवितं प्राणनमिति यत् । जीव प्राणने इति धातोः नपुंसके भावे क्तः । तज्जीवनं प्राणनमित्यर्थः । भवता कल्पितेन व्यवस्थापितेन आयुषैव जीवितकालेनैव आयुर्बलेनैव जीवन्तीति भावः । 'आयुर्जीवितकालो ना' इत्यमरः । इयती एतावती या मांसलता पीवरत्वं मांसलस्य भावो मांसलता । 'अमांसो दुर्बलश्छातो बलवान्मांसलोंऽसल' इत्यमरः । वर्तते सापि पीवरतापि अन्नस्यापायेन अभावेन जनितः उत्पादितः यश्शोभः शोभरोगः तेनैव । 'शोभा कान्तावामये तु शोभः कुम्भस्तु दानव' इति हेमचन्द्रः । परिदृश्यमानं पीवरत्वं शोभजाड्यमेवेत्यर्थः । न तु हर्षादिप्रयुक्तोपचय इति भावः ॥ **प्रेक्षेति** ॥ धरण्यां दिशि दिशि । वीप्सायां द्विर्भावः । प्रतिदिशमित्यर्थः । प्रेक्षा बुद्धिः एषामस्तीति प्रेक्षावन्तः बुद्धिशालिनः । 'प्रेक्षोपलब्धिश्चित्संवित्' इत्यमरः । नराः पुरुषाः इत्थम्भूतान् एवंस्थितान् इन्द्रो वैश्वानरः तावादी येषां ते तथाभूतान् सुराणां परिबृढान् अधिपान् । 'प्रभुः परिबृढोऽधिप' इत्यमरः । प्रेक्षमाणाः अवलोकमानास्सन्तः तत्तत् तेषा

अथवा नैतावदभिधातव्यमस्माभिः।

अभिदधति ते मूर्धानं द्यामनुश्रवसूक्तयः
सुचिरमसुराश्चैतामित्थं तुदन्ति दुराशयाः।
निगमशिखराभ्यासव्यासङ्गतो यदि विस्मृतं
तदपि भवता तन्नो दौष्कर्म्यमित्युपरम्यते॥ १८॥
इमे वयमिदं तत्त्वमित्थं स्थानमियं दशा।
परं यदत्र कर्तव्यं प्रमाणं तत्र नो भवान्॥ १९॥'

तेषां साम्यस्य समतायाः उदयः आविर्भाव एव फलं तदेव परं मुख्यं यस्यास्तां तथाविधां पुराणीं अकृतकां वाणीं बार्हस्पत्यकामो बृहस्पतिसवेन यजेत वसूनामेव तावदाधिपत्यं स्वाराज्यं पर्येतीत्यादिकां वैदिकवाचं अप्रमाणीं अतत्त्वार्थिकां मत्वा शनैः विलम्बेन। 'अल्पे नीचैर्महत्युच्चैः प्रायो भूम्न्यद्रुते शनैः' इत्यमरः। कर्मणां ज्योतिष्टोमादीनां मार्गेषु पद्धतिषु अवज्ञां अवहेळनं विदधति कुर्वन्ति। के वातिदुःखाय प्रयाससाध्यं कर्म कुर्वन्तीति भावः॥ **अथवेति** ॥ अथवा तथापीत्यर्थः। अस्माभिः एतावदियद्यथा तथा नाभिधातव्यं न वक्तव्यं स्वामिनां निकटे भृत्यैरधिकप्राभवं न कार्यमिति भावः॥ **अभीति** ॥ अनुश्रवाणां वेदानां सूक्तयः अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यावित्याद्याः वेदवाचः श्रुतिवाक्ये अग्निपदं तदुपलक्षितस्वर्गलोकपरमिति व्याख्यातं तद्भाष्ये। द्यां द्यां स्वर्गलोकम्। 'द्योदिवौ द्वे स्त्रियां' इत्यमरः। ते मूर्धानं मस्तकं अभिदधति कथयन्ति एतामिनां दिवं दुराशयाः दुर्बुद्धयः असुराः दानवाः सुचिरं चिरादारभ्य इत्थं उत्क्रीत्या तुदन्ति। तुद व्यथने इति धातोर्लट्। पीडयन्तीत्यर्थः। निगमशिखराणां वेदान्तानां अभ्यासः अविच्छेदपठनपाठनलक्षणो व्यापारविशेषः तस्य व्यासङ्गतः विशेषेण आसक्तेः भवता विस्मृतं यदि विस्मरणं कृतं चेत्तदपि विस्मरणमपि नः अस्माकं दौष्कर्म्यम्। स्वार्थे ष्यञ्। अथवा दुष्टं कर्म येषां ते दुष्कर्माणः तेषां भावः दौष्कर्म्यमित्यर्थः। इत्येवमुपरम्यते तूष्णीम्भूयते। विदितवेद्यानां निकटे किं वक्तव्यमिति भावः। वक्तव्यमर्थमुपसंहरन्नाह ॥ **इमे इति** ॥ वयं देवाः इमे परिदृश्यमानाः सन्निधाविव वर्तामहे इति भावः। अस्माकमिति शेषः। तत्त्वं स्वरूपमित्यर्थः। 'तत्त्वं विलम्बमाने स्यात् स्वरूपे परमात्मनि' इति नानार्थरत्नमाला। इदं परिदृश्यमानं स्थानं स्वर्गः इत्थं उक्तप्रकारं वर्तत इति भावः। दशा अवस्था। 'दशावस्थानेकविधा' इत्यमरः। अत्र अस्यामवस्थायां परमनन्तरं यत्कर्तव्यं करणीयं तत्र कर्तव्यार्थे नः अस्माकं भवान् प्रमाणं प्रमाता आप्त इति यावत्। 'प्रमाणं हेतुमर्यादा शास्त्रेयत्ताप्रमातृषु' इत्यमरः। 'प्रमाणं प्रमितीयत्तामर्यादाशास्त्रहेतुषु। आप्तेऽथ द्रविणं गेहे' इति रत्नमाला। भव-

इत्यावेद्य विरमत्याङ्गिरसे, विनमत्सु च युगपदमर्त्येषु, प्रसादयन् सर्वानिदमाह पद्मसम्भवः। 'विदितवेदितव्यैर्भवद्भिरित्थं न विप्रतिपत्तव्यं दुर्वाससि, यतः परिणाम एष करुणायास्तत एव महेन्द्रमनुजग्राह तनीयसा शापेन, परथा कथमतिवाहनीयमिन्द्रेण परस्सहस्रैरपि वत्सरैर्निखिलजगन्मातुरम्बिकाया निर्माल्यसमुल्लङ्घनप्रसूतमिदं दुरितम्। तदस्मिन्महत्यपराधे यावदक्षपितमेतदेनस्तावदनुस्मरणमपि भवतामपराधो महानिति चकितैरस्माभिरेतावदुदासितम्। महदपीदं

न्तमन्तरेदानीमस्माकं हितोपदेष्टा नास्तीति भावः॥ **इतीति**॥ आङ्गिरसे सुराचार्ये इत्युक्तप्रकारं आवेद्य विज्ञाप्य विरमति तूष्णीम्भूत सति अमर्त्येषु देवेषु युगपदेकदा विनमत्सु प्रणामं कुर्वत्सु। पद्मसम्भवः भगवन्नाभिकमलोत्पन्नः ब्रह्मा सर्वान् प्रसादयन् परितोषयन् इदं वक्ष्यमाणं वच आह वदतीत्यर्थः। ब्रुवः पञ्चानामादित आहो ब्रुव इति ब्रुवतेराहादेशः। कथनप्रकारमेवाह॥ **विदितेति**॥ विदितः ज्ञातः वेदितव्यः ज्ञेयांशः यैस्तथाविधैः भवद्भि युष्माभिः दुर्वाससि न विप्रतिपत्तव्यं दोषगणनं न कर्तव्यमित्यर्थः। सोपसर्गस्य धातोरनेकार्थत्वात्॥ **यत इति**॥ यतः कारणात् करुणायाः कृपायाः परिणामः परिणतमूर्तिः दुर्वासा इति शेषः। ततः कारणादेव तनीयसा अतिस्वल्पेन शापेन अनिष्टाशंसनेन महेन्द्रं अनुजग्राह अनुग्रहं कृतवान्॥ **परथेति**॥ परथा अन्यथा निखिलजगतां सर्वलोकानां मातुः जनन्याः अम्बिकायाः कालिकायाः निर्माल्यस्य धृतदत्तस्य पुष्पमाल्यस्य समुल्लङ्घनादतिक्रमणादपचारादिति यावत्। प्रसूतमुत्पन्नं दुरितं पापं परस्सहस्रैः सहस्रात्परे परस्सहस्राः। पञ्चमीति योगविभागात्समासः। राजदन्तादिषु परमिति सहस्रशब्दस्य परनिपातः पारस्करप्रभृतीनि चेति सहस्रशब्दस्य सुडागमः। एवञ्च सहस्रसङ्ख्यातीतैः वत्सरैरपि संवत्सरैरपि इन्द्रेण कथमतिवाहनीयं क्षपणीयं परिहरणीयमिति यावत्। शापमहिममात्रेण सर्वं पापं गतमिति भावः॥ **तदिति**॥ महति अधिके अस्मिन् देवीप्रसादलङ्घनरूपे अपराधे आगसि सति प्रसक्तमिति शेषः। तदेतदेनः अंहः यावत् यदवधि अक्षपितं अपरिहृतं पापपरिहारो यावन्नाभूदित्यर्थः। तावत् तत्कालावधि भवतां अनुस्मरणं स्मृतिरपि महानपराधः अथापि खलु पापानामलमश्रेय इति शास्त्रादिति भावः। इति मत्वा चकितैः भीतैः अस्माभिः। अस्मदो द्वयोश्चेति बहुवचनम्। इयदेतावद्यथा तथा उदासितम्। नपुंसके भावे क्तः। औदासीन्यमाचरितमित्यर्थः॥ **महदिति**॥ महत् दुर्लङ्घं इदं कालि-

दुरितं मन्दरपरिसरावासेन परिहृतमेव सवासनं भवतां, तदपि जगज्जननीचरणापराधसंसर्गादधुनापि शङ्कमानैरस्माभिरन्य एवोपायस्समुल्लिखितो भवदनुग्रहे। नारायणीप्रसादतिरस्कारजोऽयमपराधो नारायणीयप्रसादपुरस्कारेण समाधेय इति। तथाहि।

यदेतद्वामाङ्गं घनजघनकेशस्तनभरं
कदाचित्तच्छम्भोर्भवति कमलाकौस्तुभधरम्।

---

कान्तिर्माल्योल्लङ्घनरूपं भवतां सवासनं वासनासहितं वासना नाम सूक्ष्मरूपेणावस्थानं दुरितं पापं मन्दरस्य गिरेः परिसरेषु पर्यन्तभूमिषु। 'पर्यन्तभूः परिसरः' इत्यमरः। आवासेन स्थित्या परिहृतं परिहापितम्। 'शैवक्षेत्रप्रवेशेन सर्वं पापं विनश्यति' इति शास्त्रादिति भावः॥ **तदपीति**॥ तदपि तथापि जगतां जनन्यां मातरि कालिकायां विषये अपराधस्य आगसः संसर्गात् संबन्धात् परम्परया प्राप्तादपीति शेषः। शङ्कमानैः बिभ्यद्भिः अस्माभिरधुना इदानीं भवतामनुग्रहे स्वर्गप्रापणलक्षणे प्रसादे अन्यः भवद्बुद्धिस्थादतिरिक्तः उपायस्साधनमुल्लिखितः चिन्तित इत्यर्थः। दयालुः पुमान् अपराधिनमपि पश्चात्तप्तं शरणागतं कथञ्चिदन्येन केनचिदुपायेनोद्धरिष्यत्येवेति भावः। समुल्लिखितोपायमेवाह ॥ **नारायणीति** ॥ नारायणी कालिका देवीत्यर्थः। 'नारायणी भद्रकाली' इति स्मृतेः। 'नारायणी रमागौर्योः' इति नानार्थरत्नमाला च। तस्याः यः प्रसादः अनुग्रहः पुष्पमाल्यलक्षणः तस्य तिरस्कारः अभजनं असेवनमिति यावत्। तज्जः तदुत्पन्नः अयमपराधः। 'आगोऽपराधो मन्तुश्च' इत्यमरः। नारायणस्य भगवतोऽयमित्यर्थे तस्येदमित्यणं बाधित्वा वृद्धाच्छ इति छप्रत्यये नारायणीय इति रूपं भवति। प्रसादः अनुग्रहः नारायणीयश्चासौ प्रसादश्चेति कर्मधारयः। तस्य पुरस्कारः पुरस्कृतिः अग्रतस्सम्पादनमिति यावत्। तेन समाधातुं योग्यः समाधेयः निवारणीय इति समुल्लिखित इति पूर्वेणान्वयः। ननु देवीविषये कृतोऽपचारस्सम्पादितेन वासुदेवानुग्रहेण कथं समाधीयत इति चेदत आह ॥ **तथाहीति** ॥ घनं च तज्जघनं चेति कर्मधारयः। पीनौ पीवरौ च तौ स्तनौ चेति कर्मधारयः। घनजघनं च पीनस्तनौ चेति प्राण्यङ्गत्वाद्वन्द्वैकशेषः। पश्चात् घनजघनपीनस्तनस्य भर इति तत्पुरुषः। अनन्तरं घनजघनपीनस्तनभरोऽस्यास्तीत्यर्थे मत्वर्थीय अर्शआदिभ्योऽजित्यच्प्रत्ययः। एवं च घनजघनपीनस्तनभारवदित्यर्थः। घनजघनकेशस्तनभरमित्येकः पाठः। तथाविधं शम्भोः वामाङ्गं पार्वतीस्वरूपं वर्तते यस्मात्कारणात् तदेव वामाङ्गमेव कमलाया लक्ष्म्याः कौस्तुभस्य माणिक्यविशेषस्य धरं धारयितृ विष्णुरूपं भवती-

जगन्मातर्येवं यदपचरितं तन्मघवता
जगन्माता देवः प्रभवति स एव क्षपयितुम् ॥ २० ॥
तदागच्छत क्षीरसागरं, दर्शयिष्यामो भगवन्तं' इति व-
दन्नासनादुत्थायान्तर्दधे भगवानब्जसम्भवः ।
अथ कथमप्यमर्त्यपतयः परिहृत्य भयं
गुरुकरुणाविशेषपरिणामकृताभ्युदयाः ।
अखिलजनुष्मदाशयगुहाशयमप्युदधौ
शयितमिमे समेतुमुदयुञ्जत शार्ङ्गधरम् ॥ २१ ॥

---

त्यर्थः । उभयोश्शिवशक्तित्वाविशेषात् । अत्रार्थे प्रमाणं तु । 'एकापि शक्तिः परमेश्वरस्य भिन्ना चतुर्धा विनियोगकाले । भोगे भवानी समरेषु दुर्गा कोपे तु काळी त्ववने तु विष्णुः ॥' इति वचनम् । 'कदाचिल्ललिता देवी रन्तुकामा सरित्तटे । जगद्विमोहयामास वेणुनादविनोदतः ॥' इति श्रीकृष्णस्य देवीरूपत्वे प्रमाणवचनम् । 'कराङ्गुलिनखोत्पन्ननारायणदशाकृतिः' इति दशानामप्यवताराणां देवीनखोत्पन्नत्वे प्रमाणम् । 'सा शक्तिः परमेशानी विष्णुरूपमधारयत् । या शक्तिः प्रळये काळी या तु भोगे भवान्यभूत् ॥' इत्यादीनि वचनानि शिवरहस्यमार्कण्डेयपुराणरुद्रयामळादौ प्रसिद्धानीत्यवगन्तव्यम् । मघवता देवेन्द्रेण जगतां मातरि जनन्यां एवं यदपचरितं एवं यदागः कृतं तदागः स देवः जगतां लोकानां माता परिच्छेत्तैव विष्णुरेवेत्यर्थः । तदुक्तम् । 'त्रिविक्रमावतारे तु भगवान् गरुडध्वजः । त्रैलोक्यं विममौ पद्भ्यामिति प्राहुः पुराविदः ॥' इति । क्षपयितुं निवारयितुं प्रभवति समर्थो भवति । एवं च नारायणस्य नारायण्यभेदात् नारायणानुग्रहे सम्पादिते नारायण्यनुग्रहस्सम्पादित एवेति तेन तद्दुरितं निश्शेषं सकलमपि विनश्यतीति भावः । वक्तव्यमुक्त्वा विधिरन्तर्दधे इत्याह **तदिति** ॥ तत्तस्मात् क्षीरसागरं क्षीरसमुद्रं प्रति आगच्छत आगमनं कुरुत तः क्षीरार्णवे भगवन्तं नारायणं प्रदर्शयिष्यामः दर्शनं कारयिष्याम इति वदन् कथयः भगवानब्जसम्भवः ब्रह्मा आसनात् । ल्यब्लोपे कर्मणि पञ्चमी । आसनं विहाये त्यर्थः । उत्थाय अन्तर्दधे अन्तर्धानमकरोत् । आर्तदीनशरणागतपोषणप्रवृत्तिः केषां महतां झडिति न स्यादिति भावः । गुरुसहाया देवा उदधिशायिनं वसुदेवं प्रति दर्शनार्थं गन्तुमुद्योगं कृतवन्त इत्याह ॥ **अथेति** ॥ अथ ब्रह्मतिरोधानानन्तरं अमर्त्यपतयः देवश्रेष्ठाः इमे इन्द्रादयः गुरोः बृहस्पतेः सम्बन्धिया करुणा कृपा तस्याः विशेषस्य अतिशयस्य यः परिणामः परिपाकः तेकृतः सम्पादितः अभ्युदयः मनःपरितोषो येषां ते तथाभूतास्सन्तः कथमभयं भीतिं परिहृत्य विसृज्य उत्तमसन्निधिं प्रतिगन्तुं गुरुसहाये स

किञ्च।

पथि ध्वजं यं गरुडध्वजस्य
प्रस्थाय यान्तो ददृशुर्दिगीशाः।
तमेव सद्यस्तदनुग्रहस्य
भविष्यतोऽपि ध्वजमग्रहीषुः ॥ २२ ॥

अवतरन्तश्च ते सत्यलोकादनेकसहस्रयोजनमपि पन्थानमतिलङ्घितं गणयन्तो गव्यूतिमात्रमिव, गुणयन्तो भाषिता-

कस्य वा जनस्य भीतिस्स्यादिति भावः। अखिलानां जनुष्मतां प्राणिनां आशयः बुद्धिः स एव गुहा दरी तस्यां शेत इति शयः तं साक्षित्वेन स्थितमपीत्यर्थः। ज्ञानदृष्ट्येति भावः। 'अन्तःस्थमात्मानमजं न दृष्ट्वा भ्रमन्ति मूढा' इति स्मृतेः। उदधौ क्षीरार्णवे शयितं शयनकर्तारं शार्ङ्गधरं शार्ङ्गधन्वानं वासुदेवं समेतुं गन्तुं स्वावस्थाविज्ञापनार्थमिति शेषः। उदयुञ्जत उद्योगं चक्रुः। विज्ञापनाभावादेव सर्वदुःखनिवारके वासुदेवे जाग्रति सति के वा स्वीयदुःखानि न विज्ञापयन्तीति भावः। श्वेतद्वीपं प्रति प्रस्थिता देवाः तत्कालसञ्जातं गरुडदर्शनं शुभोदर्कं बुबुधिर इत्याह ॥ **पथीति** ॥ किञ्च प्रस्थाय प्रस्थानं कृत्वा यान्तः गच्छन्तः दिशामीशाः पतयः इन्द्रादयः पथि मार्गे गरुडध्वजस्य तार्क्ष्यकेतोः नारायणस्य ध्वजं केतुं गरुत्मन्तमिति भावः। 'पाळिः केतुर्ध्वजो लिङ्गं' इत्यमरः। सद्यः ददृशुः दृष्टवन्त इति यत्। होरामुहूर्तादिकालविशेषस्वरूपाविज्ञातरि गुरौ सहाये अनुगते कस्य वा सुशकुनं न भवेदिति भावः। तदेव ध्वजगरुडदर्शनमेव सद्यः भविष्यतः भाविनस्तदनुग्रहस्य नारायणप्रसादस्य ध्वजं नामत्तमिति। 'ध्वजो लिङ्गं निमित्तं व्यञ्जनं पदं' इत्यमरः। अग्रहीषुः विविदुः। 'प्रयाणे प्रथमं वामे गरुडो यदि दृश्यते। तेषां कार्यं करगतमिति नास्त्यत्र संशयः।' इति भावः। सत्यलोकं परित्यज्यावरोहन्तः परस्परं भाषमाणा एव बहुदूरमागत्य श्रमापनोदनाय क्वचिद्देशे ऊषुरित्याह ॥ **अवेति** ॥ सत्यलोकात् सत्यलोकं विहायेत्यर्थः। ल्यब्लोपे पञ्चमी। अवतरन्तः अवरोहणं कुर्वन्तः ते देवाः। अनेकसहस्राणि योजनानि यस्य तं तथाभूतमपि। क्रोशद्वयस्य गव्यूतिरिति संज्ञा क्रोशचतुष्टयस्य गव्यूतिद्वयस्य च योजनमिति संज्ञा। 'मुहूर्तद्वयगन्तव्यमार्गस्स्यात् क्रोशसंज्ञकः। क्रोशद्वयं तु गव्यूतिस्तद्द्वयं योजनं स्मृतं ॥' इत्यभिधानात्। अतिलङ्घितं अतिक्रान्तं पन्थानं गव्यूतिः क्रोशद्वयं प्रमाणं यस्य तद्गव्यूतिमात्रम्। प्रमाणे द्वयसज्दघ्नञ्मात्रच इति मात्रच्प्रत्ययः। 'गव्यूतिः स्त्री क्रोशयुगं' इत्यमरः। किञ्च 'यवोदरैरङ्गुळमष्टसङ्ख्यैर्हस्तोऽङ्गुळैष्षड्गुणितैश्चतुर्भिः। हस्तैश्चतुर्भिर्भवतीह दण्डः क्रोशस्सहस्रद्वितयेन तेषाम्। स्याद्योजनं

नि चतुर्मुखस्य, गुरुणाकृष्यमाणतयेव झटित्युपनिपत्य विशश्रमुरविश्रान्तपरिभ्रमदभ्रमारुतसम्पातविनीतपथिकव्यथे जलदपथे। अद्राक्षुरपि तत्र ते निद्राणपुराणपुरुषनिद्राभङ्गापराधमाशङ्क्य सन्ताडयन्तामिव विद्रुमकाण्डवेत्रदण्डैरनिवार्यमौखर्यसमुल्लासदुर्ललितानि कल्लोलमण्डलानि, निरिन्धनज्वलदबिन्धनज्वालासम्बन्धान्निष्यन्दमानमिव वीचीभिरभितोऽपि, सद्यस्समास्वादितशुद्धदुग्धपूरपूरितगर्भनिर्भरविशदनीरदनिकरस-

---

क्रोशचतुष्टयेन' इति गणितशास्त्रे । तदिव गणयन्तः गणनं कुर्वन्तः चतुर्मुखस्य ब्रह्मणः भाषितानि वचांसि गुणयन्तः । स एवमाहैवमाहेति पुनः पुनरावर्तयन्तः । 'गुणस्त्वावृत्तिशब्दादौ ज्येन्द्रियामुख्यतन्तुषु' इत्यमरः । गुरुणा गुरुत्वेनेत्याकर्षणहेतूक्तिः बृहस्पतिनेति प्रकृतार्थः आकृष्यमाणतया आकृष्टतयेव झडिति शीघ्रं उपानेपत्य अवतीर्य अविश्रान्तं विश्रान्तिरहितं यथा तथा परिभ्रमन् सञ्चरणशीलो यः अभ्राणां मेघानां सम्बन्धी मारुतः पवनः तस्य सम्पातेन सम्बन्धेन विनीता अपवारिता पथिकानां मार्गस्थानां व्यथा क्लेशः यस्मिन् तथाभूते जलदपथे मेघमार्गे विशश्रमुः विश्रान्तिं चक्रुः तस्थुरिति यावत् । बहुदूरयायिनः के वा क्वचिन्न विश्राम्यन्तीति भावः । तत्र स्थिता एव क्षीरसमुद्रं ददृशुरित्याह ॥ **अद्राक्षुरिति** ॥ तत्र जलधरमार्गे ते देवाः निद्राणशयितो यः पुराणः पुरातनः । 'निद्राणशयितौ समौ' इत्यमरः । 'पुराणप्रतनप्रत्नपुरातनचिरन्तनाः' इति च । पुरुषः वासुदेवः तस्य निद्रायाः स्वापस्य भङ्गाद्विनाशादपराधं आगः । यद्वा पुराणपुरुषनिद्रायाः यः भङ्गः विनाशः तमेवापराधम् । 'स्यान्निद्रा शयनं स्वाप' इत्यमरः । 'भङ्गः खण्डे पराजय' इति रत्नमाला । आशङ्क्य ऊहित्वा अनिवार्याणि दुर्निवाराणि मौखर्यस्य शब्दस्य समुल्लासैर्विकासैर्दुर्ललितानि प्रसरणानि येषां तानि तथाविधानि कल्लोलानां मण्डलानि वृन्दानि । 'मण्डलं त्रिषु कोष्ठे स्यादुपसूर्यकदेशयोः । बिम्बे द्वादशराश्योघे निकुरुम्बेऽथ पेशले ॥' इति नानार्थरत्नमाला । विद्रुमकाण्डाः प्रवाळदण्डाः 'प्रवालोऽङ्गारकमणिर्विद्रुमोऽम्बुधिसम्भव' इति शब्दार्णवे । त एव वेत्रदण्डाः तैः । वेत्रमिति लताविशेषस्य संज्ञेति ज्ञेयम् । सन्त्रासयन्तं भीषयन्तामिव । वीचीभिः तरङ्गैः निरिन्धनं निर्गतेन्धनं यथा तथा ज्वलन् प्रज्वलन् यः अबिन्धनः बडबानलः तस्य ज्वालानां अर्चिषां सम्बन्धात् संसर्गात् अभितः निष्यन्दमानमिव स्रवणं कुर्वन्तमिव सद्यः तत्काले समास्वादितस्य शुद्धदुग्धस्य निर्मलक्षीरस्य । 'दुग्धं क्षीरं पयः समं' इत्यमरः । पूरेण प्रवाहेन पूरितः भरितः गर्भः उदरदेशः येषां ते । अत एव निर्भरमत्यन्तं विशदानां धवळनिर्मलानां नीरदानां मेघानां निकरेण व्रातेन

ऽच्छन्नतया सम्पन्नमिव मण्डेन, चिरसम्भृततया सम्भावितपयोविकारपरिजिहीर्षुणा ततस्ततः क्षिप्ताभिरम्बुजसम्भवेन समूलाभिरिवौषधीभिश्शैवालमञ्जरीभिरभिशोभितं, चिरपरिचितक्षीरमेघरसास्वादसुखितचातकपोतसावज्ञनिष्ठ्यूतचञ्चूपुटनिपतदितरमेघशीकरं, गोविन्दचरणारविन्दसन्दर्शनायातविबुधसंसद्विमानहंसविविच्यमानसर्वतःपतदापगासहस्रनीरकृताहारलब्धसामिन्धनबलवदबिन्धनानलं, सायम्प्रातिकोल्लासपल्लवितकल्लोलजालवेल्लितवेलागिरिशिखरसञ्चारलब्धदुग्धाभिषेकमुहूर्तविमलीकृतवन्यद्विपतया परिचिन्वन्तमिव चिरादैरावतसर्ग-

---

संछन्नः आच्छादितः आत्मा शरीरं यस्य तस्य भावस्तत्ता तया। मण्डेन दधिभव मस्तुना। 'मण्डं दधिभवं मस्तु' इत्यमरः। सम्पन्नं सहितमिव चिरात् चिरकालात् सम्भृततया सम्पादिततया सम्भावितस्य शङ्कितस्य पयोविकारस्य अम्लीभवनलक्षणस्य परिजिहीर्षुणा परिहर्तुमिच्छुना अम्बुजसम्भवेन ब्रह्मणा ततस्ततः तत्र तत्रेत्यर्थः। क्षिप्ताभिर्विन्यस्ताभिः समूलाभिः मूलसहिताभिः ओषधीभिः मूलिकाविशेषैरिव स्थिताभिः शैवालानां मञ्जरीभिः वल्लरीभिः। 'शैवालं शैवलं समे' इति द्विरूपकोशे। 'वल्लरी मञ्जरी स्त्रियां' इत्यमरः। अभिशोभितं परितः प्रकाशितं चिरात् परिचितेन अभ्यस्तेन क्षीरमेघरसस्य दुग्धस्वरूपघनरसस्य आस्वादेन पानेन। 'मेघपुष्पं घनरसं' इत्यमरः। सुखितैः तृप्तैः चातकानां पोतैः शिशुभिः। 'पोतः पाकोऽर्भको डिम्भ' इत्यमरः। सावज्ञं अवहेळनसहितं यथा तथा निष्ठ्यूताः खाट्कृत्यवान्ताः चञ्चूपुटेषु त्रोटीप्रदेशेषु निपतन्तः पतनं कुर्वन्तः इतरेषां जलमेघरसानां शीकराः कणाः यस्मिन् सः। 'शीकरोऽम्बुकणः स्मृत' इत्यमरः। गोविन्दस्य चरणारविन्दयोः सन्दर्शनार्थमायातानामागतानां विबुधानां संसदस्सभायाः विमानानां ये हंसाः पक्षिविशेषाः तैर्विविच्यमानैः विभाज्यमानैः सर्वतः पततां आगच्छतां आपगासहस्राणां नीरैः लब्धं प्राप्तं सामिन्धनं सन्दीप्तिर्यस्य स तथाभूतः। बलवान् समर्थः प्रवृद्ध इति यावत्। 'बलवान्मांसलोंऽसल' इत्यमरः। अबिन्धनानलः बडबानलः यस्मिन् तथाभूतं सायम्प्रातर्भवस्सायम्प्रातिकः। तथाविधेनोल्लासेन विकासेन पल्लवितानां सञ्जातपल्लवानां कल्लोलानां तरङ्गाणां जालेन समूहेन वेल्लिताः व्यापृताः कम्पिता इति वार्थः। 'वेल्लितप्रेङ्खिताधूतचलिताकम्पिताधुत' इत्यमरः। वेलागिरयः तटपर्वताः तेषां शिखरेषु शृङ्गेषु सञ्चारेण गमनेन लब्धः प्राप्तः यः दुग्धाभिषेकः क्षीरस्नानं तेन मुहूर्तं द्वादशक्षणात्मककालं विमलीकृताः निर्मलीकृताः वन्याः अरण्यसम्भवाः द्विपाः गजाः यस्मिन् सः तस्य भावस्तत्ता तया चिरात् चिरकालादारभ्य ऐरावतस्याभ्रमातङ्गस्य स-

**चातुरीं, क्षीरैकनिधानतया पर्वकालावगाहनप्रसक्तपरमर्षिजनप्रस्तुताघमर्षणसूक्तगोचरक्षीरपदोहानूहविचारकोलाहलाभिभूतवीचीघोषं, तृतीयावतारश्वेततानुचिकीर्षया स्वयमपि श्वेतीभवद्भिरिव भगवतः प्राथमिकावतारजातीयैः क्षीराहारपरिणामनिर्मलैर्मत्स्यकूर्मैः परिकर्मितं, शार्ङ्गधरं द्रष्टुं समागच्छेदपि जातु चन्द्रशेखर इति सम्भावनया सज्जीकृतैः कैलासैरिव पयस्तरङ्गपरिपूरितैरन्तर्गतैर्गिरिभिरभिशोभितं, कालचक्रमिव**

---

गें चातुरीं नैपुण्यं परिचिन्वन्तं अभ्यस्यन्तमिव । मथनावसरे मत्तगजं निर्मातुमिति भावः । क्षीरैकनिधानतया क्षीरमात्राश्रयतया पर्वकालेषु अमापूर्णिमासङ्क्रान्त्यादिलक्षणेषु अवगाहने शास्त्रोक्तसङ्कल्पादिपूर्वकस्नाने प्रसक्ताः उद्युक्ताः ये परमर्षयो महर्षयः । 'पर्वण्येवाम्बुधौ स्नायात्' इति शास्त्रादिति भावः । तैः प्रस्तुत आवश्यकत्वेनोपक्रान्तः अघमर्षणसूक्तं तत्कालपठनमात्रेण पापनाशकं हिरण्यशृङ्गमित्यादिसूक्तम् । 'सर्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणं' इत्यमरः । तदेव गोचरः विचारस्थानं विषय इति यावत् यस्य सः क्षीरपदस्य ऊहः तस्मिन्नप्पदस्थाने प्रक्षेपः अनूहः अप्रक्षेपः तयोर्यो विचारस्तस्य कोलाहलेन घोषेण अभिभूतः तिरस्कृतः वीचीनां तरङ्गाणां घोषो यस्मिंस्तथाभूतम् । अत्रेदं बोध्यम् । मन्त्रेषु ऊहो नाम मन्त्रघटकपदस्थाने समुचितपदान्तरस्य प्रक्षेपः तथथेति चेत् अग्नये त्वा जुष्टं निर्वपामीति मन्त्रे चतुर्थ्यन्ताग्निपदस्थाने चतुर्थ्यन्तसूर्यपदं प्रक्षिप्य सूर्याय त्वा जुष्टं निर्वपामीति पठ्यते । तद्वदघमर्षणसूक्ते यदपां क्रूरं यदमेध्यमित्यादावपामित्यप्पदस्य स्थाने षष्ठ्यन्तस्य क्षीराणामिति पदस्य ऊहो वा उत अनूहो वेति । प्रकृतावेवोहः उत विकृतावेव अथवा प्रकृतौ विकृतौ चेत्युभयत्रेति विचारयामासुरिति । तृतीयावतारस्य वराहावतारस्य श्वेतता श्वैत्यं तस्याः अनुचिकीर्षया अनुकरणेच्छया दशावतारेषु वराहस्य तृतीयत्वादिति भावः । स्वयमपि श्वेतीभवद्भिः शुक्लीभवद्भिः भगवतः नारायणस्य प्राथमिकौ याववतारौ मत्स्यकूर्मलक्षणौ तज्जातीयैः तत्सदृशैः तृतीयवराहापेक्षया उभयोर्मत्स्यकूर्मयोः प्राथमिकत्वादिति भावः । क्षीराहारस्य क्षीराशनस्य परिणामेन परिपाकेन निर्मलैः मत्स्यकूर्मैः मत्स्यैः कूर्मैश्चेत्यर्थः परिकर्मितं अलङ्कृतम् । चन्द्रशेखरः चन्द्रमौळीश्वरः जातु कदाचित् शार्ङ्गधरं शार्ङ्गपाणिं विष्णुं द्रष्टुमपि समागच्छेत् । सम्भावनायां लिङ् । समागतो भवेत् इति सम्भावनया उत्प्रेक्षया आलोचनेनेति यावत् । सज्जीकृतैः सिद्धत्वेन कृतैः कैलासैः रजतपर्वतैरिव स्थितैः पयसां क्षीराणां तरङ्गैः परिपूरितैः सिक्तैः अन्तर्गतैः अन्तःस्थितैः गिरिभिरद्रिभिः उपशोभितं प्रकाशितम् । कालचक्रमिव काललक्षणचक्रमिव वर्तमानं कालचक्रं तु कर्कटेन

**कर्कटमकरमीनकरम्बितं, गङ्गातीर्थमिव गर्भस्थानेकमठराजिविराजितं, पाणिनीयसूत्रमिव परस्मैपदप्रतिपादकं, आत्मतत्त्वमिवानिर्वचनीयगुणप्रपञ्चं, कैलासशिखरमिव शैवलक्षणलक्षितद्विजषण्डमण्डितं, निदाघभास्करमिव नितान्तमुत्तरङ्ग-**

---

कटकराशिना मकरराशिना मीनराशिना च करम्बितं व्याप्तं समुद्रस्तु कर्कटेन कुळीरनामकजलचरविशेषेण। 'स्यात्कुळीरः कर्कटक' इत्यमरः। मकरैः ग्राहैः। 'प्रकरः कीर्णपुष्पादौ संहतौ मकरस्त्विह। निधौ यादसि राशौ च' इति नानार्थरत्नमाला। मीनैः मत्स्यैश्च करम्बितं व्याप्तं कर्कटमकरमीनकरम्बितत्वस्योभयत्राविशिष्टत्वात् साम्यमिति भावः। गङ्गाया भागीरथ्याः तीर्थं जलमिव। 'जलावतारो गुर्वाम्न्युपायशस्त्राणि यज्ञो मुनिजुष्टतोयम्। मन्त्र्यादयोऽष्टादशपुण्यभूमिः पात्रं जलं स्त्री कुसुमं च तीर्थं' इति नानार्थरत्नमाला। गर्भे कुक्षौ तिष्ठन्तीति गर्भस्थाः। 'कुक्षिभ्रूणार्भका गर्भा' इत्यमरः। तथाविधा ये अनेके बहवो मठाः यतिच्छात्रादिस्थानानि। 'मठश्छात्रादिनिलय' इत्यमरः। तेषां राजिभिः पङ्क्तिभिः। 'आवळिः पङ्क्तिश्रेणीरेखास्तु राजयः' इत्यमरः। विराजितं प्रकाशितम्। समुद्रपक्षे गर्भस्थाने कुक्षप्रदेशे कमठानां कूर्माणां राजिभिः विराजितम्। 'कूर्मे कमठकच्छपौ' इत्यमरः। गर्भस्थानेकमठराजिविराजितत्वस्योभयत्र सत्त्वात्साम्यमिति भावः। अभङ्गपक्षे श्लेषमहिम्ना गर्भपदस्य तीरलक्षणाङ्गीकारेण चोक्तदिशा गर्भेत्यादिविशेषणं गङ्गाजलसाधारणमिति भावः। पाणिनेः व्याकरणशास्त्रप्रणेत्राचार्यस्य सूत्रमिव। शेषात् कर्तरि परस्मैपदमित्याकारकपरस्मैपदविधायकविधिसूत्रमिवेत्यर्थः। परस्मैपदस्य परस्मैपदसंज्ञकतिबादिप्रत्ययजालस्य प्रतिपादकं प्रतिपादयितृ बोधकमिति यावत्। समुद्रपक्षे परस्मै परमात्मने। 'परोऽरिपरमात्मनोः' इति विश्वः। पदस्य स्थानस्य 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः। प्रतिपादकं दातारं 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनं' इत्यमरः। अत्र सूत्रपक्षे परस्मैपदेत्यत्रालुक्समासः। अन्यत्र व्यास इति विवेकः। आत्मनस्तत्त्वं वास्तवरूपमिव अनिर्वचनीयाः सावयवत्वेन निरवयवत्वेन एतदीयत्वेन तदीयत्वेन वा इदमित्थमिति निर्वक्तुमशक्याः ये गुणास्सत्त्वादयः तेषां प्रपञ्चो यस्मिन् तत्। यद्वा अनिर्वचनीयं इदमित्थमिति वक्तुमशक्यः गुणानां सत्त्वादीनां प्रपञ्चः स्तोमः यस्य तत्। 'प्रपञ्चो विस्तृतौ स्तोम' इति नानार्थः। समुद्रपक्षे अनिर्वचनीयः गणयितुमशक्यः गुणानां नैर्मल्यधावळ्यमाधुर्यादीनां प्रपञ्चस्समूहो यस्य तथाभूतम्। कैलासस्य रजताद्रेश्शृङ्गं शिखरमिव। 'कूटोऽस्त्री शिखरं शृङ्गं' इत्यमरः। शैवानां शिवभक्तानां लक्षणानि चिह्नानि 'चिह्नं लक्ष्म च लक्षणं' इत्यमरः। तैः लक्षिता युक्ताः ये द्विजाः विप्राः तेषां षण्डस्समूहः। 'षण्डस्तु

**त्वातिभीषणं, समष्टिमिव क्षीरसर्गस्य, समवायमिव नैर्मल्यस्य, चन्द्रतारकादिनिर्मलवस्तुवर्गनिर्माणकौतुकिना विधिना विलाप्य निषिक्तमिव भुवि रजताचलं, क्षौमावकुण्ठनमिव क्षमायाः, पद्मनाभशयनागारपर्यन्तकुट्टिममिव स्फाटिकाशिलाचितं, अनास्पदं कविगिरां, आश्चर्यमाश्चर्याणां, आर्तिहरं चक्षुषोः, आनन्दमन्तःकरणस्य, दुरासदमनाराधितनारायणचरणारविन्दानां दुग्धोदं नाम रत्नाकरम्।**

---

क्लीबसङ्ख्योः' इति विश्वः। तेन मण्डितं अलङ्कृतम्। समुद्रपक्षे शैवलं शैवालं तस्मिन् क्षणेन निर्व्यापारस्थित्या। 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षण' इत्यमरः। आलक्षिता अवलोकिता ये द्विजाः पक्षिणः। 'दन्तविप्राण्डजा द्विजा' इत्यमरः। तैर्मण्डितं अलङ्कृतं निदाघभास्करं ग्रैष्मकालिकसूर्यमिव नितान्तं अत्यन्तं उत्तरायणमार्गं गत्वा प्राप्य अतिभीषणं भयङ्करमिति पदभङ्गमाश्रित्य सूर्यपक्षे विशेषणं योजनीयम्। समुद्रपक्षे तु उत्कृष्टास्तरङ्गा यस्मिन् तस्य भावः उत्तरङ्गत्वं तेनातिभीषणं भयङ्करम्। भुज्यत इति भोग इतिवत् सृज्यत इति सर्गः तथाच सर्गशब्दस्य सृज्यमित्यर्थः। क्षीरं च तत् सर्गश्चेति कर्मधारयः। तस्य क्षीरसर्गस्य क्षीररूपसृज्यवस्तुन इत्यर्थः। समष्टि सम्पूर्वाशू व्याप्ताविति धातोः स्त्रियां क्तिन्निति क्तिन्प्रत्ययः। सोपसर्गस्य धातोरनेकार्थत्वात्। पूर्गमिवेत्यर्थः। अथवा क्षीरसर्गस्य क्षीरनिर्माणस्य समष्टिं सङ्घीभूयभवनमिव नैर्मल्यस्य निर्मलत्वस्य समवायं पुञ्जमिव। चन्द्रतारकादीनि यानि निर्मलवस्तूनि तेषां निर्माणे कौतुकिना कुतूहलिना विधिना विधात्रा विलाप्य पुटे यथा द्रुतं स्यात्तथा पक्त्वेत्यर्थः। निषिक्तं उत्सृष्टं रजताचलमिव स्थितं क्षमाया भूदेव्याः। 'गौरिळा कुम्भिनी क्षमा' इत्यमरः। क्षौमं दुकूलरूपमवकुण्ठनं बाह्याच्छादनम्। 'क्षौमं दुकूलं स्यात्' इत्यमरः। स्फाटिकाशिलाभिः स्फटिकमणिभिः चितं खचितं पद्मनाभस्य नारायणस्य शयनागारमन्तःपुरं। 'स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनं' इत्यमरः। तस्य पर्यन्तः परिसरदेशः। 'पर्यन्तभूः परिसर' इत्यमरः। तस्य कुट्टिममिव निबद्धभुवमिव। 'कुट्टिमोऽस्त्री निबद्धा भूः' इत्यमरः। कवीनां पण्डितानां या गिरः तासां। 'सङ्ख्यावान् पण्डितः कविः' इत्यमरः। अनास्पदं अविषयं आश्चर्याणां विस्मयकराणां ब्रह्मलोकादीनां आश्चर्यं विस्मयकरम्। 'विस्मयोऽद्भुतमाश्चर्यं' इत्यमरः। चक्षुषोः द्रष्टृणामिति शेषः। आर्तिं पीडां हरति नाशयतीत्यार्तिहरम्। 'आर्तिः पीडाधनुःकोट्योः' इत्यमरः। अन्तःकरणस्य हृदयस्य आनन्दं आनन्दजनकम्। अनाराधिते अपूजिते गोविन्दस्य भगवतश्चरणारविन्दे पादकमले यैस्तथाविधैः दुरासदं दुष्प्रापम्। दुग्धमुदकं यस्य

घोषे क्वापि पुरा पयः कियदपि स्तैन्येन दैन्येन वा
लब्धुं योऽवहदीश्वरोऽपि जगतां जन्माधमं मानुषम्।
तं विस्मापयितु तरङ्गवलयैर्घोषानसङ्ख्यान् सृजन्
आभूभूतलसम्भृतेन पयसैवावृत्य यो वर्तते ॥ २३ ॥

अपि च।

स्वाद्या यत्र सुधैव यस्य जठरे साक्षात्स धन्वन्तरिः
शेते यत्र समस्तरोगशमनो नाम्नैव देवोऽच्युतः।
तस्मिन् दुग्धनिधावपि स्पृहयते नैव स्थिरामासिकां
अन्तर्लीनहलाहलोष्मचकितो नाथः स्वयं पाथसाम् ॥

---

सः दुग्धोदः तम्। उत्तरपदस्य चेत्युदकशब्दस्य उदादेशः। नाम प्रसिद्धं रत्नाकरं समुद्रमद्राक्षुः ददृशुः। क्षीरसमुद्रमेव वर्णयति द्वाभ्यां ॥ **घोष इति** ॥ जगतां लोकानामीश्वरोऽपि अधिपतिरपि। 'ईश्वरः पतिरीशिता' इत्यमरः। यः भगवान्नारायणः स्तैन्येन चौर्येण दैन्येन याचनेन वा कियत् यत्किञ्चित् पयः क्षीरं लब्धुं प्राप्तुमपि पुरा पूर्वकाले क्वापि कुत्रापि घोषे आभीरग्रामे। 'घोष आभीरपल्ली स्यात्' इत्यमरः। अधमं अप्रशस्तम्। 'रेफयाप्यावमाधमा' इत्यमरः। मानुषं मनुष्यस्वरूपं जन्म आविर्भावं अवहत् दधार। तं नारायणं विस्मापयितुं विस्मयं प्रापयितुं यः क्षीरार्णवः तरङ्गाणां वलयैर्मण्डलैः असङ्ख्यान् असङ्ख्येयानित्यर्थः। घोषान् आभीरग्रामान्। अन्यत्र घोषान् शब्दान् सृजन् सृष्टिं कुर्वन् सन्। आभूभूतलं भुवमारभ्य भूतलात्मकपाताळलोकपर्यन्तं सम्भृतेन सम्पूर्णेन पयसा क्षीरेणैव। 'पयः क्षीरं पयोऽम्बु च' इत्यमरः। आवृत्य आवरणं कृत्वा अवतिष्ठते। समवप्रविभ्यस्स्थ इत्यात्मनेपदम् ॥ **अपि चेति** ॥ यत्र क्षीरार्णवे सुधा अमृतमेव स्वाद्या आस्वादनार्हा यस्य अर्णवस्य जठरे कुक्षौ साक्षात् प्रत्यक्षम्। 'साक्षात्प्रत्यक्षतुल्ययोः' इत्यमरः। धन्वन्तरिः समस्तौषधनिधिः निवसतीति शेषः। यत्रार्णवे नाम्ना नामोच्चारणेन समस्तानां सर्वेषां रोगाणामामयानां शमनो नाशकः।'अच्युतानन्तगोविन्दनामोच्चारणभेषजात्। नश्यन्ति सकला रोगाः' इति शास्त्रादिति भावः। नाम्ना सर्वरोगशमनत्वरूपविशेषणं धन्वन्तरिसाधारणमपि भवितुमर्हति। 'धन्वन्तरिं गरुत्मन्तं फणिराजं च कौस्तुभम्। स्मृत्वा नीरोगतां यायान्मानवः क्षणमात्रतः ॥' इति वचनादिति बोध्यम्। अच्युतः शार्ङ्गधन्वा देवः नारायणः शेते स्वपिति। तस्मिन् तथाविधे दुग्धनिधौ क्षीरसमुद्रेऽपि पाथसां अपाम्। 'कबन्धमुदकं पाथः पुष्करं सर्वतोमुखं' इत्यमरः। नाथः पतिर्वरुणः। 'यादसां पतिरप्पतिः' इत्यमरः। स्वयं

अपश्यन्नपि मध्यतस्तस्य किञ्चिदन्तर्निमग्नपुराणभूदारदंष्ट्रादण्डक्षोभितपयःपूरसमुद्धृतमिव नवनीतपिण्डं, अभितश्चलदुच्छृङ्खलतिमितिमिङ्गिलकुलवालविलोडनोद्भूतमारुतोद्धूतपुञ्जीकृतमिव फेनमण्डलं, एकतः प्रतिपर्वनिर्मुच्यमानपङ्कजनाभशयनोरगनिर्मोकराशिमिव, कालपरिपाकलब्धमृद्भावनिर्मलं नीवीबन्धमिव वसुन्धरादुकूलस्य, कल्पान्तरीयमन्दरवेष्टनक्लेशजनितया मूर्च्छया पतितस्य वासुकेर्जरतो वलयितमिव भोगमण्डलमप्रतिरूपमन्तरीपम् ।

---

स्वामित्यर्थः । अन्तः कुक्षिप्रदेशे लीनः अदृश्यस्सन् वर्तमानो यः हलाहलः विषराजः । 'कालकूटो हलाहल' इत्यमरः । तस्य ऊष्मणा उष्णांशेन चकितः भीतस्सन् स्थिरां अचञ्चलां आपिकां स्थितिं न स्पृहयते नेच्छति । सन्तापभूयिष्ठदेशे कस्य वा वासोऽनुमत इति भावः । क्षीरार्णवान्तस्स्थमुपद्वीपं ददृशुरित्याह ॥ **अपश्यन्निति** ॥ तस्य क्षीरसमुद्रस्य मध्यतः मध्येऽपि । सार्वविभक्तिकस्तसिः किञ्चिदल्पं अन्तः कुक्षिदेशे निमग्नः पुराणः पुरातनः अनादिकालं यावत् । 'पुराणप्रतनप्रत्नपुरातनचिरन्तना' इत्यमरः । यः भूदारः वराहः 'दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि' इत्यमरः । तस्य दंष्ट्रादण्डः दंष्ट्रैव दण्डः तेन क्षोभितः क्षोभं प्राप्तः यः पयसां क्षीराणां पूरः प्रवाहः तस्मात् समुद्धृतं सम्यगुत्क्षिप्तं नवनीतस्य नवोद्धृतस्य पिण्डमिव । 'नवनीतं नवोद्धृतं' इत्यमरः । अभितस्सर्वतः चलतां उच्छृङ्खलानां निरर्गलानां तिमितिमिङ्गिलाख्यमत्स्यानां वालानां पुच्छानां विलोडनेन प्रतिघातलक्षणमन्थनेन उद्भूत उत्पन्नः यो मारुतो वायुः तेन उद्धूतानां उत्थापितानां फेनानां डिण्डीराणां मण्डलं समूहमिव स्थितम् । एकतः एकदेशे प्रतिपर्व पर्वणि पर्वणि । वीप्सायामव्ययीभावः । निर्मुच्यमानः विसृज्यमानः पङ्कजनाभस्य पद्मनाभस्य शयनोरगः मञ्चस्थानीयसर्पः । 'शयनं मञ्चपर्यङ्कपल्यङ्का' इत्यमरः । तस्य निर्मोकानां कञ्चुकानाम् । 'समौ कञ्चुकनिर्मोकौ' इत्यमरः । राशिं पुञ्जमिव कालेन यः परिपाकः परिणामः तेन लब्धः प्राप्तो मृद्भावः मृत्तिकात्वं यस्य स तथाभूतश्चासौ निर्मलश्चेति कर्मधारयः । तं वसुन्धरायाः भूदेव्याः दुकूलस्य क्षौमस्य । 'क्षौमं दुकूलं स्यात्' इत्यमरः । नीवीरूपं बन्धं ग्रन्थिमिव । 'स्त्रीकटीवस्त्रबन्धेऽपि नीवीपरिपणेऽपि च' इत्यमरः । कल्पान्तरीयेण पूर्वकल्पसम्बन्धिना मन्दरस्याद्रेः वेष्टनेन यः क्लेशः खेदः तेन जनितया उत्पादितया मूर्च्छया अवस्थाविशेषेण पतितस्य जरतो जराविशिष्टस्य वासुकेः वासुकिसर्पस्य वलयितं सञ्जातवलयं भोगस्य कायस्य मण्डलं वलयमिव स्थितम् । अप्रतिरूपं असदृशं अन्तरीपं वार्यन्तस्तटप्रदेशम् । 'द्वीपोऽ-

स्थानं विश्वसृजोऽपि तन्निरय इत्याचक्षते यद्विदो
यद्गत्वा गमनीयमुत्तरमितः कुत्रापि न श्रूयते ।
आयस्यापि हि साधयन्ति यतयो यत्रारुरुक्षां परं
तद्दृष्ट्वापि पदं हरेस्सुरगणास्तत्रस्तम्भिरे गाहितुम् ॥ २५ ॥

अपि च ।

दध्युर्यावदुपायं ते गन्तुं तत्र दिवौकसः ।
तावन्निदध्युरायान्तं तत्र देवं पितामहम् ॥ २६ ॥

पश्यन्नथ तत्र पाकशासनमुखानमरान् प्रासादशिखरारोहण-कुतूहलिनः पङ्गूनिव भग्नमनोरथान्, प्रसादविमलया दृष्ट्या-

---

स्त्रियामन्तरीपं यदन्तर्वारिणस्तटं' इत्यमरः । अपश्यन्ददृशुः । दृशिर् प्रेक्षण इति धातोर्लङि पाघ्रेत्यादिना पश्यादेशः । सर्वोत्तममपि स्पृहणीयं सन्निहितदृष्टमपि तद्वैष्णवं पदं गन्तुं देवा नाशक्नुवन्नित्याह ॥ **स्थानमिति** ॥ यद्विदः यद्वैष्णव-पदवेत्तारः विश्वसृजः ब्रह्मणः स्थानमपि निरय इति नरक इत्याचक्षते कथयन्ति । 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियां' इत्यमरः । यद्वैष्णवपदं गत्वा प्राप्य इतः विष्णुपदात् उत्तरं उत्तमं गमनीयं गन्तव्यं कुत्रापि देशे कालेऽपीत्यर्थः । न श्रूयते श्रुतिविदितो न भवतीत्यर्थः । यतयः जितेन्द्रियाः । 'ये निर्जितेन्द्रिय-ग्रामा यतिनो यतयश्च ते' इत्यमरः । आयस्यापि आयासं प्राप्यापीत्यर्थः । य-त्र यद्विष्णुपदविषयिणीं आरुरुक्षां आरोढुमिच्छां साधयन्ति सम्पादयन्ति । सु-राणां गणाः परमुत्कृष्टं हरेस्तत्पदं स्थानं दृष्ट्वापि अवगाहितुं प्रवेष्टुं तस्तम्भिरे स्तब्धा बभूवुः । के वा महदनुग्रहमन्तरा उत्तमपदं प्राप्नुयुरिति भावः । तदा-नीं देवास्तत्पदप्रवेशनिमित्तालोचनसमये आगच्छन्तं ब्रह्माणं ददृशुरित्याह ॥ **दध्युरिति** ॥ यत्र देशे दिवौकसो देवाः गन्तुं तत्पदं प्रवेष्टुं उपायं साधनं यावत्कालं दध्युः चिन्तयामासुः । ध्यै चिन्तायामिति धातोर्लिट् । तत्र तस्मिन् देशे तावत् तावत्काले आयान्तं आगच्छन्तं देवं पूज्यं पितामहं ब्रह्माणं नि-दध्युः ददृशुः । नीत्युपसर्गपूर्वस्य ध्यायतेर्दर्शनार्थकत्वात् । 'निर्वर्णनन्तु निध्या-नं दर्शनालोकनेक्षणं' इत्यमरः । समागतो ब्रह्मा देवानाहूय तैस्सहोपगन्तुं प्रचक्र-म इत्याह ॥ **पश्यन्निति** ॥ अथानन्तरं कमलासनो ब्रह्मा प्रासादाः देवगृहाः राजगृहा वा । 'प्रासादो देवभूभुजां' इत्यमरः । तेषां यानि शिखराणि शृङ्गा-णि । 'कूटोऽस्त्री शिखरं शृङ्गं' इत्यमरः । तेषां आरोहणे अधिरोहणविषये कु-तूहलिनः कुतूहलवन्तः । 'कौतूहलं कौतुकञ्च कुतुकञ्च कुतूहलं' इत्यमरः । भ-ग्नः अनिर्वृत्तः मनोरथः सङ्कल्पो येषां ते तथाविधान् पङ्गून् पादविकलानिव स्थि-तान् । 'पङ्गुस्स्यात्पादविकल' इत्यभिधानात् । पाकशासनमुखान् इन्द्रादीनमरान्

नुगृह्य सहागच्छत मयेति सन्दिशन्नग्रतश्चचाल कमलासनः।
गच्छन्नेव ततस्स तत्र गळितब्रह्माधिकारैश्चिरात्
ऐकान्त्यं परमं गतैर्भगवति श्रीवल्लभे दुर्लभे।
प्राचीनैः कमलासनैरुपगतो भक्त्या महत्या नमन्
सस्नेहं सदयं सखेदमपि च प्रत्येकमापृश्यत ॥ २७ ॥
'कथमद्यापि' वत्स न परिणतोऽसि।
वल्लभोऽसि सरस्वत्या वहसे च श्रुतीर्मुखे।
जगत्पितामहश्चासि कस्तवाप्यनुशासिता ॥ २८ ॥

---

अनुग्रहेण प्रसादेन विमलया निर्मलया सादरं द्रष्टुं प्रवृत्तयेति भावः। दृष्टया अक्ष्णा। 'दृष्टिर्ज्ञाने दर्शने' इत्यमरः। पश्यन् अवलोकयन् सन्। मया सह आगच्छत आगात इतीत्थं अनुगृह्य सन्दिशन् सल्लपन् अग्रतः पुरतः चचाल जगाम। के वा महान्तः प्रयोजनावसरे स्वालम्बिनो जनान् इष्टार्थदातृनिकटं न प्रवेशयन्तीति भावः। गच्छन्नेव ब्रह्मा तावन्निरतिशयभगवद्भक्तिभरितैः प्राचीनविसृष्टाधिकारवैकुण्ठवासिब्रह्मभिः किञ्चिदापृष्ट इत्याह ॥ गच्छन्निति ॥ ततः निर्गमनानन्तरं तत्र मार्गे गच्छन् गमनं कुर्वन् नमन् नमस्कारं कुर्वन् सः सत्यलोकवासी ब्रह्मा भगवति निरतिशयषाड्गुण्यवति दुर्लभे दुष्प्रापे श्रीवल्लभे नारायणे महत्या भक्त्या अधिकया उत्कृष्टया वा भक्त्येत्यर्थः। चिरात् अनादिकालादारभ्य परममुत्कृष्टं एकविधः अन्तः स्वरूपं येषां ते तथा। 'अन्तोऽस्त्री निश्चये नाशे स्वरूपेऽग्रेऽन्तिके करं' इति नानार्थरत्नमाला। एकान्तानां भावः ऐकान्त्यं सारूप्यमिति यावत्। ऐकान्त्यं अन्तिकदेशं वा। 'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदं' इति स्मृतिः। गतैः प्राप्तैः गळितः अतीतः ब्रह्माधिकारः ब्रह्माधिकारलक्षणप्रारब्धकर्म येषां ते तथाविधैः। उपगतैः सम्मुखं समीपं प्रत्यागतैः सम्माननार्थमिति भावः। प्राचीनैः पुरातनैः कमलासनैः ब्रह्मभिः प्रत्येकं पृथक् सस्नेहं स्नेहेनानुरागेण सह वर्तनं यथा तथा। सदयं दयया दुःखप्रहाणेच्छया सह वर्तनं यथा तथा। सखेदमपि च खेदेन व्यथया सह वर्तनं यथा तथा। आदिश्यत आपृच्छयत। तत्रत्यास्सर्वेऽपि ब्रह्माणस्समागत्य प्रत्येकमेतं ब्रह्माणं पप्रच्छुरिति भावः। प्रश्नप्रकारमेवाह ॥ कथमित्यादिना ॥ हे वत्स शिशुकल्प कथं अद्यापि त्वमिति शेषः। परिणतः प्रबुद्धः नासि न भवसीत्यर्थः ॥ वल्लभ इति ॥ सरस्वत्याः त्वं वल्लभः प्रियः असि भवसि मुखे च श्रुतीः वेदान्। 'वेदे श्रवसि च श्रुतिः' इत्यमरः। वहसे धरसीत्यर्थः। जगतां लोकानां पितामहः पितृपिता चासि भवसि तवापि कः अनुशासिता कः शिक्षकः अस्तीत्यर्थः। उद्धरेदात्मनात्मानमिति शास्त्राद्धु-

तच्चिन्तय तावत्स्वयमेव।

आयुर्येषाममीषां परममभिमतं किञ्चिदूनो मुहूर्तः
का सम्पद्वा विपद्वा प्रभवति भवितुं तत्र तेषां क्षणार्धे।
तत्त्यक्त्वा क्षुद्रजन्तून् दिविचरत इमान् चिन्तयन्नात्मनीनं
वत्स त्वं प्रार्थयेथा न किमपि परमं ब्रह्म लक्ष्मीसहायम्॥'

इति बोधितो विधिरिदमाचचक्षे।'जानामि भगवन्तो जानामि।

कतीन्द्राः कति लोकेशाः कति विश्वसृजोऽथ वा।
श्वासे श्वासे प्रजायन्ते प्रलीयन्ते च शार्ङ्गिणः॥ २९-३०॥

तथापि कार्यान्नियुक्तेन मया तदनुगुणं चेष्टितव्यमिति व्यवस्य-

---

द्धिमता स्वेनैव सर्वं पर्यालोचनीयामिति भावः। तत्तस्म न स्वयमेव तावच्चिन्तय परिभावयेत्यर्थः॥ **आयुरिति**॥ येषाममीषां देवानां परमं उत्कृष्टं पूर्णमिति यावत् आयुः जीवनपरिमितकालः। 'आयुर्जीवितकालो ना जीवातुर्जीवनौषधं' इत्यमरः। किञ्चिदूनः एकांशेन विकलः मुहूर्तः घटिकाद्वयं अभिहितं अभिमतमिति वा पाठः। उक्तं सम्मतमिति वार्थः। ब्रह्ममानदृष्ट्या मानवमानस्येव वैष्णवलोकमानदृष्ट्या देवमानस्यातिस्वल्पत्वाद्विष्णुमानानुरोधेन समग्रं मुहूर्तमात्रमपि देवानामायुर्नास्तीति भावः। तत्र क्षणार्धे अर्धक्षण विष्णुलोकदृष्ट्येति भावः। तेषां देवानां का वा सम्पदभ्युदयः विपदपचयः भवितुं वर्तितु प्रभवति समर्था भवति। अर्धक्षणिकयोः प्राप्तयोः सम्पद्विपदोर्हर्षः कियान् विषादो वा कियानिति भावः। तत्तस्मात् हे वत्स दिवि स्वर्गे चरतस्सञ्चारं कुर्वतः इमान् परिदृश्यमानान् क्षुद्रान् कृपणान्। 'कदर्ये कृपणक्षुद्रकिम्पचानमितम्पचाः' इत्यमरः। जन्तून् शरीरिणः। 'प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः' इत्यमरः। त्यक्त्वा विसृज्य। निस्सङ्गतायाः परसुखहेतुत्वादिति भावः। त्वं आत्मनीनं आत्मने हितं लक्ष्मीस्सहायभूता यस्य तत्। अथवा लक्ष्म्याः सहायं परं ब्रह्म चिन्तयन् ध्यायन् किमपि न प्रार्थयेथाः प्रार्थनं मा कुर्वित्यर्थः। फलाभिसन्धिशालिनः कस्य वा उत्तमपदलाभो भवतीति भावः॥ **इतीति**॥ इतीत्थं बोधित आवेदितो विधिर्ब्रह्मा एवं वक्ष्यमाणरीत्या आचचक्षे जगाद। जानामि वेद्मि भगवतः महिमवतः जानामि वेद्मि॥ **कतीति**॥ शार्ङ्गं धनुः तदस्यास्तीति शार्ङ्गी। अत इनिठनाविति इनिप्रत्ययः। तस्य महाविष्णोः श्वासो निश्वासपवनः श्वासे श्वासे। वीप्सायां द्विर्भावः। प्रतिश्वासमित्यर्थः। कतीन्द्राः कति लोकेश्वरा अग्न्यादयः अथवा कति विश्वसृजो ब्रह्माणः। 'विश्वसृड्विधिः' इत्यमरः। प्रजायन्ते उत्पन्ना भवन्ति। प्रलीयन्ते विलीना भवन्ति। उत्पन्नविनष्टकल्पानामनेकेषामस्मादृशां सत्त्वाद्वेतास्मिन् मम का वा आस्थेति भावः। विद्वान-

आगतोऽस्मि। तदद्य भवद्भिरेव दर्शितं भगवन्तमभिगम्य, भवद्दत्तैरेवाक्षरैर्व्याहरेयं' इति प्रश्रितवादिनि पद्मसम्भवे, प्रसन्नाः पारिषदा हस्तग्राहमाकर्षन्तस्तमान्तिक एव दर्शयामासुरान्तरं रहस्यमुपनिषदाम्।

'यं त्वं चिन्तयसे नान्यं सर्वारम्भेषु सर्वदा।
सत्त्वं चिन्तय सेनान्यं विष्वक्सेनमिमं हरेः॥ ३१॥

इमञ्च पश्य वैनीतकं भगवतो वैनतेयं, यस्य किल पुरा कल्पे

---

पि किमर्थं कातर्यलम्पट इव भ्रमसीति चेदत आह॥ **तथापीति**॥ जानन्नपि कन्तु कस्मिंश्चित्कार्ये नियुक्तेन आज्ञप्तेन मया तस्य नियोगस्य कार्यस्य वा अनुगुणं अनुरूपं चेष्टितव्यं यतितव्यमितीत्थं व्यवस्यन्निश्चिन्वन्नागतोऽस्मि। तत्रत्यविष्णुपारिषदास्सविनयमालपन्तः ब्रह्माणं विष्णुसमीपं गमयन्तोऽन्तिकस्थं विष्वक्सेनं दर्शयामासुरित्याह॥ **तदिति**॥ तत्तस्मादद्येदानीं भवद्भिः युष्माभिरेव दर्शितं भगवन्तं अप्रच्युतैश्वर्यशालिनं नारायणं अधिगम्य प्राप्य भवद्दत्तैः युष्माभिरुपदिष्टैरेव अक्षरैः वचनैः व्याहरेयं आलपेयम्। सम्भावनायां लिङ्। भवदुपदेशमन्तरा तत्र सल्लपितुं मम सामर्थ्यं नास्तीति भावः। प्रश्रितवादिनि प्रश्रितं प्रश्रयः विनय इति यावत्। भावे क्तः। तेन वादिनि। अथवा प्रश्रितः विनीतः स चासौ वादी चेति कर्मधारयः। 'विनीतप्रश्रितौ समौ' इत्यमरः। अभिदधति पद्मसम्भवे ब्रह्मणि विषये प्रसन्नाः प्रसादसहिताः अनुग्रहशालिन इति यावत्। पारिषदाः परिषदि साधवः पारिषदो ण्य इत्यत्र परिषद इति योगविभागात्प्रत्ययः। तं ब्रह्माणं हस्ते गृहीत्वा हस्तग्राहं आकर्षन्तः आनयन्तस्सन्तः अन्तिक एव समीप एव। 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययं' इत्यमरः। उपनिषदां वेदान्तानां आन्तरं अन्तःस्थं रहस्यं गोप्यमर्थम्। 'रहश्चोपांशु चालिङ्गे रहस्यं तद्भवे त्रिषु' इत्यमर.। दर्शयामासुः दर्शनं कारयामासुः। एतदारभ्य पश्येत्यन्तेन वासुदेवपरिवारानेव दर्शयामासुरित्याह॥ **यं त्वमिति**॥ सर्वदा सर्वस्मिन् काले सर्वेषां कार्याणामारम्भेषु उपक्रमेषु। 'ज्ञात्वारम्भ उपक्रम' इत्यमरः। त्वं यं नान्यं अनतिरिक्तं अभिन्नमित्यर्थः। नञ्शब्दस्य सुप्सुपेति समासः। चिन्तयसे ध्यायसि। सेनां नयतीति सेनानीः। सत्सूद्विषेत्यादिना क्विप्प्रत्ययः। तं सेनान्यं सेनापतिमित्यर्थः। 'सेनानीस्स्यात्पुमान् कार्तिकेये सेनापतौ पुमान्' इति यादवः। हरेः भगवतो नारायणस्य सत्त्वं प्राणभूतमित्यर्थः।' द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः। तमिमं विषूची सेना यस्य स विष्वक्सेनः तन्नामकं चिन्तय पश्य प्रथममेतद्दर्शने सर्वं कार्यं निर्विघ्नं सिध्यतीति भावः॥ **इममिति**॥ विनीत एव वैनीतकः। स्वा-

सुधाकुम्भहरणसंरम्भसम्भ्रमोद्भूतपक्षमारुतविक्षेपसमुन्मूलिततया परितो विकीर्यमाणेषु नन्दनोद्यानपादपेषु, प्रयत्नेन महता पारिजातमेकमाहृतवतो भगवतोऽपि मन्दाक्षमिवालक्ष्यत इति संश्रृणुमहे । अपि च ।

छन्दो यथा यथा शौरेस्सङ्ग्रामेषु जिगीषतः ।
तथा तथा प्रवृत्तोऽयं छन्दोमय इतीर्यते ॥ ३२ ॥

पादाङ्गुष्ठनखाग्रलम्बितमहाकूर्मद्विपाङ्घ्रिद्वय-
न्यासाटोपविभग्नचञ्चुविधृतन्यग्रोधशाखां गताः ।

र्थे ठक्प्रत्ययः । वाहनीभूतमित्यर्थः । 'परम्परावाहनं यत्तद्वैनीतकमस्त्रियाम्' इत्यमरः । इमं विनताया अपत्यं वैनतेयः स्त्रीभ्यो ढगिति ढक्प्रत्ययः । तं गरुडं पश्य विजानीहि । गरुडमेव स्तौति पद्यद्वयसहितेन गद्येन ॥ **यस्येति** ॥ नन्दनोद्यानं नन्दनसंज्ञकोपवनं तस्मिन् पादपाः वृक्षाः तेषु । यस्य गरुडस्य किल पुरा पूर्वकल्पे सुधाकुम्भः अमृतपूरितकलशः तस्य हरणं अपहारसमयः तस्मिन् संरम्भ उद्योगः स च सम्भ्रमस्त्वरा स च तौ ताभ्यां उद्भूतस्समुत्पन्नः यः पक्षमारुतः पक्षसम्बन्धिपवमानः तस्य विक्षेपः ताडनं तेन समुन्मूलिततया समुत्खाततया परितस्सर्वतः विकीर्यमाणेषु परिस्तीर्णेषु सत्सु । महता अधिकेन प्रयत्नेन एकं पारिजातं वृक्षं आहृतवतः आनीतवतः भगवतोऽपि नारायणस्यापि मन्दाक्षं लज्जेव । 'मन्दाक्षं ह्रीस्त्रपा व्रीडा' इत्यमरः । अलक्ष्यत अलोक्यत इति संश्रृणुमहे श्रवणं कुर्मः । **अपि चेति** ॥ छन्दोमयपदप्रवृत्तिनिमित्तमाह ॥ **छन्द इति** ॥ सङ्ग्रामेषु युद्धेषु जिगीषतः जेतुमिच्छतः शौरेर्वासुदेवस्य छन्दः अभिप्रायः । 'छन्दः पद्ये च वेदे च स्वैराचाराभिलाषयोः' इति सान्तवर्गे त्र्यक्षरशब्देषु मेदिनी । यथा यथा येन येन प्रकारेण प्रवृत्तमासीदिति लिङ्गपरिणामेनान्वयः । तथा तथा तेन तेन प्रकारेण प्रवृत्तः अनुवृत्तः अयं गरुडः छन्दोमयः अभिप्रायमयः गायत्र्यादिच्छन्दसां विकारश्च । 'गायत्रीप्रमुखं छन्द' इत्यमरः । इतीत्थं ईर्यते कथ्यते । 'सुपर्णोऽसि गरुत्मान् त्रिवृत्ते शिरो गायत्रं चक्षुः स्तोम आत्मा साम ते तनूर्वामदेव्यं बृहद्रथन्तरे पक्षौ यज्ञायज्ञियं पुच्छं छन्दांस्यङ्गानि धिष्णियाश्शफा यजूंषि नाम' इति श्रुतेः । गरुडस्यैव माहात्म्यान्तरमाह ॥ **अपि च पादेति** ॥ ऊर्ध्वं उपरिदेशं प्रति पतता गच्छता येन गरुडेन । अथवा येन पतता गरुडपक्षिणा । 'पतत्पत्त्ररथाण्डजा' इत्यमरः । ऊर्ध्वं उपरिदेशं नीताः गमिताः पादाङ्गुष्ठयोः पादस्थूलाङ्गुल्योः अग्रमग्रभागः तत्र लम्बितौ सङ्क्रान्तौ महाकूर्मद्विपौ कूर्मगजेन्द्रौ यस्य तत्तथाभूतं यदङ्घ्र्योः पादयोः द्वयं युग्मम् । 'पदङ्घ्रिश्चरणोऽस्त्रियां' इत्यमरः । तस्य न्यासाटोपेन विन्याससंरम्भे-

येनोर्ध्वं पतता पुराणमुनयो नीताः पुरा मेनिरे
संसिद्धं सशरीरमूर्ध्वगमनं सद्यस्तपोभिर्दृढैः ॥ ३३ ॥

अस्य किलोपवीतमित्यायामतस्साम्यमवधारयन्तः पुरा निर्जरा मौर्वीपदे मेरुधन्वनो वासुकिमादिशन्निति वदन्त्यैतिहासिकाः ।

पश्य ज्ञानक्रियेच्छामणिमयमुकुराबद्धमध्यात्मविद्या-
भास्वद्रत्नप्रदीपप्रकरपरिहृतध्वान्तमन्तस्समन्तात् ।
गाढाविद्याकवाटं प्रबलशमदमद्वारपालाभिगुप्तं
भक्तिद्वारं मुरारेरिदमिह शयनागारमोङ्काररूपम् ॥ ३४ ॥'

---

ण विभग्ना भङ्गं प्राप्ता अत एव चञ्चुविधृता त्रोटीविधृता या न्यग्रोधस्य वटस्य शाखा तां गताः प्राप्ताः पुराणाः ये मुनयः तैः दृढैस्संसारतारकैः तपोभिरुपासनादिभिः सद्यः उपासनावसरे सशरीरं शरीरेण सह वर्तनं यथा तथा । ऊर्ध्वगमनमूर्ध्वलोकान् प्रति यानम् । संसिद्धं सम्प्राप्तमितीत्थं मेनिरे बुबुधिरे ॥ **अस्येति** ॥ पुरा पूर्वकल्पे निर्जरा देवाः वासुकिं तत्संज्ञं सर्पश्रेष्ठं अयमिति शेषः । आयामतः दैर्घ्यात् अस्य गरुडस्य उपवीतं किल यज्ञसूत्रमिव वर्तत इति शेषः । इति एवंप्रकारं । 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरः । समयोस्सदृशयोर्भावस्साम्यं अवधारयन्तः निश्चिन्वन्तस्सन्तः मेरुधन्वनः मेरुरूपधनुष इत्यर्थः । 'धनुश्चापो धन्वशरासनकोदण्डकार्मुकं' इत्यमरः । मौर्वी शिञ्जिनी तस्याः पदे स्थाने आदिशन् न्ययोजयन् । उच्चारणार्थस्य दिशधातोर्लङि रूपम् । इतीत्थं ऐतिह्यासिकाः भारतादीतिहासविदः आख्यानाख्यायिकेतिहासपुराणेभ्यश्चेत्यध्येतृवेदित्रर्थे ठक्प्रत्ययः । ओङ्कारस्वरूपं वासुदेवशयनागारं वर्णयति ॥ **पश्येति** ॥ ज्ञानक्रियेच्छाः ज्ञानशक्तिक्रियाशक्तीच्छाशक्तय एव मणिमया मणिविकाराः मुकुरा आदर्शाः तैराबद्धं सम्बद्धम् । यथा राजमन्दिरं भित्तिनिखातशङ्कुसङ्क्रान्तैर्दर्पणैर्विभाति तथेति भावः । ओङ्कारलक्षणं भगवत्सदनं ज्ञानशक्त्यादिभिः विभातीति भावः । ननु 'इच्छाशक्तिर्ज्ञानशक्तिः क्रियाशक्तिरिति श्रुताः । विद्यन्ते शक्तयस्सर्वा वासुदेवे परात्मनि ॥' इति वचनात् ज्ञानादिमत्त्वं भगवत इति विज्ञायते तत्कथमोङ्कारस्य भगवद्गुणज्ञानाद्याबद्धत्वमिति चेत् प्रणवं पुरुषोत्तममिति श्रुतिसिद्धाभेदादिति बोध्यम् । अन्तस्समीपे समन्तात् परितः आत्मनि अध्यात्मम् । विभक्त्यर्थेऽव्ययीभावः । अध्यात्मविद्या ब्रह्मविद्या सैव भास्वतां प्रकाशमानानां रत्नदीपानां प्रकरस्समूहः तेन परिहृतं निरस्तं ध्वान्तमन्धकारं यस्मिन् तत्तथाभूतम् । ब्रह्मविद्यैव तमः परिहृत्य ओङ्कारस्थं वासुदेवं प्रकाशयितुं समर्थेति भावः । गाढा दुरुच्छेदा या अविद्या अज्ञानम् । 'अथाज्ञानमविद्याहंमतिः स्त्रियां' इत्यमरः ।

**इति प्रबोधितो विधिरीदृशतादृशतानवच्छिन्नवैभवमचक्षुर्ग्राह्य-मनुश्रवैकश्रवणीयमधिगन्तुमिव भगवतो रूपं आसाद्य चक्षुःश्रवस्तनुमक्षिभिस्सहस्राभ्यामनुभवन्तमिव परमाद्भुतं, आशयमागमानां, अतिवेलश्वासनिश्वासपरम्परासम्पादितभोगोप-**

---

सैव कवाटं यस्य तत्तथा। अज्ञानकवाटपाटनमन्तरा तत्र प्रवेशो न सम्भवतीति भावः। प्रबलौ बलवन्तावप्रकम्प्याविति यावत्। यौ शमदमौ अन्तरिन्द्रियबहिरिन्द्रियनिग्रहलक्षणौ तावेव द्वारपालौ ताभ्यामभिगुप्तं रक्षितम्। ऊदित्त्वाद्वैकल्पिक इडभावः। येषां शमादयो वश्याः तानेव तत्र शमादयः प्रवेशयन्तीति भावः। शमादीनां द्वारपालत्वं वासिष्ठरामायणेऽप्युक्तम्। 'मोक्षद्वारे द्वारपालाश्चत्वारः परिकीर्तिताः। शमो विचारस्सन्तोषश्चतुर्थस्साधुसङ्गमः॥ एते सेव्याः प्रयत्नेन चत्वारो द्वौ त्रयोऽपि वा। द्वारमुद्घाटयन्त्येते मोक्षराजगृहे यथा॥ एकं वा सर्वयत्नेन सर्वमुत्सृज्य संश्रयेत्। एकस्मिन् वशगे यान्ति चत्वारोऽपि वशं गताः॥' इति। भक्तिः आराध्यत्वेन ज्ञानं। 'पूज्यानुरागो भक्तिः' इति महोपाध्यायाः। द्वारं प्रतिहारं यस्य तत् तथाभूतम्। नारदीये 'यथा समस्तलोकानां जीवनं सलिलं स्मृतम्। तथा समस्तसिद्धीनां जीवनं भक्तिरिष्यते॥ भक्तिर्द्वारमिति प्राहुर्मोक्षलक्ष्मीनिकेतने॥' इति। इहात्र देशे ओङ्काररूपं प्रणवलक्षणं 'ओङ्कारप्रणवौ समौ' इत्यमरः। मुरारेर्नारायणस्य शयनागारं स्वापसदनं पश्य अवलोकय। 'उद्यमस्था सदा लक्ष्मीः' इतिवत् 'नित्यं यज्ञे प्रतिष्ठितं' इतिवच्च ओङ्कारस्थः परेश्वर इत्यवगन्तव्यम्। शेषशायिनं वासुदेवं तल्पवर्णनपूर्वकं नखादिमकुटपर्यन्तं वर्णयति॥ **इतीति॥** इतीत्थं प्रबोधितः विनिवेदितः तत्र भवैरिति शेषः। विधिः ब्रह्मा ईदृशतादृशते एवंविधतथाविधत्वे ताभ्यामनवच्छिन्नं अपरिज्ञातं अविशिष्टमिति वा वैभवं विभुत्वं व्यापकत्वमिति यावत् यस्य तथाभूतम्। 'तत्सर्वं व्याप्य नारायणः स्थितः' इति श्रुतिः। आकाशव्यापकत्वाविलक्षणं भगवद्व्यापकत्वं एवंविधं तथाविधमिति च वक्तुं न शक्यमिति भावः। अचक्षुर्ग्राह्यं चक्षुषा ग्रहीतुमशक्यमित्यर्थः। 'न चक्षुषा पश्यति कश्चनैनं' इति श्रुतेः। तस्य साक्षिचेतनत्वादिति भावः। अनुसृत्य श्रूयन्ते अनुश्रवा वेदाः तैरेव श्रवणीयं वेदैकवेद्यत्वात्तस्येति भावः। 'तं त्वौपनिषदं पुरुषं' इति श्रुतेः। भगवतो वासुदेवस्य रूपं स्वरूपं अधिगन्तुं द्रष्टुं श्रोतुमिव चक्षूंषि श्रवांसि यस्य तथाभूतस्येत्यर्थः। 'चक्षुःश्रवाः काकोदरः फणी' इत्यमरः। तनुं शरीरं आसाद्य प्राप्य सहस्राभ्यां द्विसहस्रसङ्ख्याकैः अक्षिभिर्नेत्रैः आगमानां वेदानां आशयमभिमतार्थं वासुदेवं परमाद्भुतं यथा तथा अनुभवन्तं विदन्तमिव स्थितम्। 'आश्चर्यवत्पश्यति कश्चिदेनं' इति स्मृतेः। अतिक्रान्ताः वेलामतिवेलाः निर्मर्यादा इत्यर्थः। अत्यादयः क्रान्ताद्यर्थे द्वितीययेति समासः। 'अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि'

चयापचयतया सन्ततमुपपादयन्तमिव विलक्षणामूर्ध्वडोलाविहारनिर्वृतिं, आचार्यं योगविदां, आदिदेशिकं पदतन्त्रस्य, सम्प्रदायप्रवर्तकं शारीरकर्मणां, भोगविमुखेषु हृदयेषु शमधनानां निरन्तरावासनिर्वेदादिव भोगिनमेव कमपि भुवनतलाकल्पमास्तीर्य तल्पमधिशयानं, अतिशयानम्रमौळिभिर्महायोगि-

---

इत्यमरः । तथाविधा ये श्वासनिश्वासाः बाह्यस्य वायोराचमनं श्वासः कुक्षिस्थवायोरुद्गमनं निश्वासः तेषां परम्परा अविच्छेदः तेन सम्पादितौ उत्पादितौ भोगोपचयापचयौ शरीरवृद्धिह्रासौ यस्य तस्य भावः तत्ता तया । 'भोगस्सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः । विभिन्नं लक्षणं स्वरूपं यस्यास्तां विजातीयामित्यर्थः । ऊर्ध्वडोलाविहारः ऊर्ध्वाधोडोलया विहरणं तेन या निर्वृतिस्सुखं तां सन्ततमुपपादयन्तं निरूपयन्तमिव स्थितम् । योगविदां यमादिवेत्तॄणां आचार्यं गुरुं आचार्यलक्षणं मनुनोक्तम् । 'उपनीय तु यश्शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥' इति । अन्यत्रापि 'आचिनोति हि शास्त्रार्थानाचारे स्थापयत्यपि । स्वयमाचरते यस्मादाचार्यस्तेन कथ्यते ॥' इति । भगवानापस्तम्बोऽपि । 'यस्माद्धर्मानाचिनोति स आचार्यः' इति । 'मन्त्रव्याख्याकृदाचार्य' इत्यमरश्च । योगशास्त्रप्रणेतृत्वात्तस्याचार्यत्वमिति भावः । पद्यन्ते ज्ञायन्ते शब्दा अनेनेति पदं व्याकरणभाष्यं तत्संज्ञकं यत्तन्त्रं सिद्धान्तः व्याकरणसिद्धान्त इति यावत् । 'तन्त्रं प्रधाने सिद्धान्त' इत्यमरः । तस्य आदिदेशिकं प्रथमोपदेष्टारम् । 'देशे भवे दैशिकः स्यादुपदेष्टरि देशिकः' इति भास्करः । शरीरमुद्दिश्य प्रवृत्तानि शारीराणि तानि यानि कर्माणि कषायकल्कौषधादिलक्षणानि तेषां सम्प्रदायस्सदाचारः तस्य प्रवर्तकं प्रदर्शकम् । चिकित्साशास्त्रप्रणेतारमिति भावः । उक्तार्थे अभियुक्तवचनम् । 'योगेन चित्तस्य पदेन वाचां मलं शरीरस्य तु वैद्यकेन । योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि ॥' इति । भोगः वैषयिकसुखम् । यद्वा भुज्यन्त इति व्युत्पत्त्या भोगाः विषयाः तस्मिन् तेषु वा विमुखेषु पराङ्मुखेषु निष्कामत्वादिति भावः । शमधनानां मुनीनां हृदयेषु अन्तःकरणेषु निरन्तरनिवासः सन्ततस्थितिः तेन यो निर्वेदो व्याकुलत्वं तस्मादिव भुवनतलस्य पाताळलोकस्य आकल्पमलङ्कारभूतं एकं भोगिनं फणिनमेव सुखिनं च । श्लिष्टरूपकमेतत् । तल्पं शय्यां आस्तीर्य परिस्तीर्य अत्र शेषलक्षणतल्पास्तरणे भगवतो निर्वेदो न हेतुः तस्मिन् सोऽप्यसिद्ध एव तथापि तस्य तल्पास्तरणहेतुत्वोक्तेः हेतूत्प्रेक्षालङ्कारः । लक्षणन्तु 'अहेतोर्हेतुभावेन कथनं हेतूत्प्रेक्षा' इति । अधिशयानं निद्राणमित्यर्थः । अतिशयेन आधिक्येन अत्यन्तमित्यर्थः । नम्राः विभुग्नाः मौळयः शिरांसि येषां ते तथाभूतैः प्रणतैरिति भा-

भिः प्रणामावसरप्रकीर्यमाणेषु कुसुमोपहारेषु सौकुमार्यातिशयसंसक्तैः कतिपयैरिव कल्पतरुप्रसूनैश्चिरनिर्गतसिद्धसिन्धुशीकरशेषैरिव ततस्ततो लग्नैर्नखरैर्निरर्गळापवर्गदानसंसूचनाय नियन्त्रितेनेव ध्वजेन संसारकान्तारसञ्चरणाखिन्नशारीरकच्छायाप्रदानाय समावर्जितेनेव छत्रेण च परिष्कृताभ्यां पादकमलाभ्यामलंकुर्वाणमङ्कतलमादिजनन्योर्लक्ष्मीधरण्योः, कटितटाबद्धकनकांशुकप्रभातरङ्गपरिष्वङ्गपिशङ्गीकृतवसुमतीकमलाविवेचनाचतुरतत्तत्परिचारिकोपचारविपर्यासपरिहासविनोदिनं, आविर्भविष्यदसङ्ख्यहिरण्यगर्भाङ्कुरमयमणिशताचितकार्णि-

---

वः। महान्तो ये योगिनः तैः कुसुमान्यवे उपहाराः उपायनानि तेषु । प्रणामावसराः प्रणतिसमयाः तत्र प्रकीर्यमाणेषु प्रक्षिप्तेषु सत्सु। 'अर्चनानन्तरं भक्त्या प्रकीर्य सुमसञ्चयम्। प्रदक्षिणनमस्कारौ कृत्वा स्तोत्रं पठेद्बुधः॥' इति शास्त्रादिति भावः। सौकुमार्यातिशयेन मृदुत्वातिशयेन संसक्तैः सङ्क्रान्तैः कतिपयैः कल्पतरोः प्रसूनैः पुष्पैरिव स्थितैः ततस्ततः तत्र तत्रेत्यर्थः । लग्नैः संसक्तैः चिरनिर्गता या सिद्धसिन्धुर्मन्दाकिनी तस्याश्शीकराः अम्बुकणाः तेषां शेषैरिव स्थितैः । नखरैर्नखैः। निरर्गळं निर्निरोधं यथा तथा अपवर्गस्य मोक्षस्य दानं वितरणं तस्य संसूचनाय ज्ञापनाय नियन्त्रितेन प्रोत्क्षिप्य निबद्धेनेत्यर्थः। ध्वजेन रेखाकारेण केतुना। संसार एव कान्तारः तस्मिन् सञ्चरणं गमनागमनलक्षणं तेन खिन्नाः खेदवन्तो ये शारीरकाश्शरीरमाश्रित्य वर्तमाना जीवाः तेभ्यः छायाया अनातपस्य प्रदानाय जीवानां तापत्रयाक्रान्तत्वादिति भावः। समावर्जितेन सम्पादितेन छत्रेण रेखाभूतच्छत्रेण च परिष्कृताभ्यामलङ्कृताभ्यां पादौ कमले इवेति उपमितं व्याघ्रादिभिस्सामान्याप्रयोग इत्यनेन समासः । आदिजनन्योः प्रथममात्रोः लक्ष्मीधरण्योः श्रीभूदेव्योः अङ्कतलं ऊरुदेशं अलङ्कुर्वाणं विभूषयन्तम् । कटितटं श्रोणिदेशः तस्मिन्नाबद्धं यत्कनकांशुकं स्वर्णमयं चेलं तस्य प्रभायाः कान्तेर्ये तरङ्गाः परम्पराः तेषां परिष्वङ्गेण सम्बन्धेन पिशङ्गीकृते ये वसुमतीकमले भूश्रीदेव्यौ तयोर्विवेचनायां इयं श्रीरियं भूरिति विवेके अचतुराः अनिपुणाः यास्तत्तत्परिचारिकाः तयोः दूत्यः तासां सम्बन्धी य उपचारः तस्य विपर्यासः व्यत्यासः तस्मिन् विषये यः परिहासः तेन विनोदिनं चमत्कारिणमित्यर्थः। अचतुराणां कृत्यं दृष्ट्वा के वा चतुराः न चमत्कुर्वन्तीति भावः । आविर्भविष्यन्तः उद्भविष्यन्तः असङ्ख्याः पर्याप्तिरहिताः ये हिरण्यगर्भाः ब्रह्माणः तेषां यान्यङ्कुराणि तन्मयाः तद्रूपाः ये मणयः तेषां शतैरनेकैराचिता व्याप्ता

केन प्रतिसर्गावर्तमानप्रकृत्यादिधरण्यन्ततत्त्वकिञ्जल्कपुञ्जेन प्रपितामहेन भुवनानां पाण्डरेण सरोरुहेण मण्डितनाभिमण्डलं, निर्मलचिन्मयवपुषि नित्यानुबिम्बितेन मृगमदतिलकेनेव वक्षःस्थितायाः श्रियः श्रीवत्सेन हृदयादुद्भूते चन्द्रमसि स्पर्धया स्वयमपि हृदयादाविर्भवता बालसूर्येणेव कौस्तुभेन भूषयन्तमप्राकृतानि भूषणान्यपराणि, दिग्दन्तिशुण्डादण्डैरिव दिव्यतरुप्रकाण्डैरिव दुर्मददानवनिर्मथनयशोविशदैरिव मौक्तिक-

---

कर्णिका बीजकोशी यस्य तत्। 'कर्णिका कर्णभूषणे। करिहस्ताङ्गुलौ पद्मबीजकोश्यां त्रिषूत्तर' इत्यमरः। तथाभूतेन प्रकृतिः प्रधानं प्रथमतत्त्वं सा आदिर्येषां तानीति तद्गुणसंविज्ञानबहुव्रीहिः। एवं धरणी पृथिवी चरमतत्त्वं सा अन्तः चरमा येषां तानीति पूर्ववत्समासः। तथाच प्रकृत्यादीनि धरण्यन्तानि च यानि तत्त्वानि ज्ञानेन्द्रियपञ्चककर्मेन्द्रियपञ्चकमनोबुद्ध्यहङ्कारचित्तान्तःकरणचतुष्टयप्राणपञ्चकसूक्ष्मपञ्चभूतलक्षणानि एतान्येव किञ्जल्कपुञ्जः केसरसमूहो यस्य तत्। 'किञ्जल्कः केसरोऽस्त्रियां' इत्यमरः। तेन भुवनानां लोकानां प्रपितामहेन लोकजनकस्य पितामहस्यापि जनकत्वात्पद्मस्य प्रपितामहत्वमिति भावः। पाण्डरेण धवळेन सरोरुहेण पद्मेन मण्डितमलङ्कृतं नाभिमण्डलं नाभिदेशो यस्य स तथाभूतम्। निर्मलं मलरहितं तच्च तच्चिन्मयं चिद्रूपञ्चेति कर्मधारयः। तथाभूते वपुषि देहे नित्यमनवरतमनुबिम्बितेन प्रतिबिम्बितेन वक्षसि स्थितायाः लक्ष्म्याः मृगमदः कस्तूरी तद्रचिततिलकललामेनेव स्थितेन श्रीवत्सेन लाञ्छनेन। 'श्रीवत्सो लाञ्छनं मतं' इत्यमरः। हृदयात् मनसः उद्भूते उत्पन्ने चन्द्रमसि चन्द्रे। 'चित्तं तु चेतो हृदयं स्वान्तं' इत्यमरः। 'तस्माच्चन्द्रमा मनसो जात' इति श्रुतेः। स्पर्धया चन्द्राभिभवेच्छया स्वयमपि हृदयात् हृदयदेशादाविर्भवता आविर्भावं कुर्वता बालसूर्येणेव स्थितेन कौस्तुभेन तन्नामकमाणिक्येन। अपराण्यन्यानि। प्रकृतौ भवानीत्यर्थे प्रकृतिशब्दात्तत्र भव इति सूत्रादण्प्रत्ययः। अथवा प्रकृतेरागतानीत्यर्थे तत आगतानीत्यण्प्रत्ययः। प्रकृतिसम्बन्धीनीति यावत्। तानि न भवन्तीत्यप्राकृतानि प्रकृतिसम्बन्धरहितानीति फलितार्थः। भूषणानि कुण्डलाद्याभरणानि भूषयन्तं अलङ्कुर्वन्तं दिग्दन्तिनां दिग्गजानां शुण्डाः कराः दण्डा इवेत्युपमितसमासः। तैरिव स्थितैः दिव्यतरूणां कल्पवृक्षाणां प्रकाण्डाः स्कन्धाः। 'अस्त्री प्रकाण्डस्स्कन्धस्स्यात्।' इत्यमरः। तैरिव स्थितैः। किञ्च मौक्तिकाः मुक्ताफलानि तेषां दामभिर्मालाभिर्वेष्टितैः वलयितैरत एव दुर्मदाः मत्ताः ये दानवाः मधुकैटभादयः तेषां निर्मथनेन निहननेन यद्यशः तेन विशदैः धवळैरिव स्थितैः। विचित्राणि विस्मयकराणि यानि कनकमयानि अङ्गदकङ्कणादीनि केयूरकरभूषणादी-

दामवेष्टितैर्विजयेन्दिरासमाश्लिष्टैरिव विचित्रकनकाङ्गदकङ्कणाद्यलंकृतैश्चतुर्भिर्भुजैस्सूचयन्तमिव चतुर्व्यूहतां, अहर्मुखविकसदाम्रपल्लवोल्लासिनि दन्तच्छदे विप्रकीर्णतया सान्ध्यरागसम्मूर्च्छितचन्द्रिकोद्गारानुकारिणा मन्दस्मितेन कलिकलुषजीवाशयप्रसादनकतकरेणुभिः कैवल्यलक्ष्मीस्वयंवरदामभिरिव कलितनानावर्णविन्यासपेशलैः परिवहत्करुणासारसम्पातशीतलैः

---

नि तैरलङ्कृतैरत एव विजयेन्दिरया विजयलक्ष्म्या समाश्लिष्टैरालिङ्गितैरिव स्थितैः चतुर्भिः भुजैः चत्वारः वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धनामानः व्यूहाः यस्य सः तस्य भावस्तत्ता तां सूचयन्तमिव ज्ञापयन्तमिव स्थितम्। शारीरकभाष्ये द्वितीयाध्यायद्वितीयपादे केषांचिन्मतनिराकरणावसरे 'भागवता मन्यन्त' इत्युपक्रम्य 'भगवानेवैको वासुदेवो निरञ्जनज्ञानस्वरूपः परमार्थतत्त्वं स च चतुर्धा आत्मानं प्रविभज्य प्रतिष्ठितो वासुदेवव्यूहरूपेण सङ्कर्षणव्यूहरूपेण प्रद्युम्नव्यूहरूपेण अनिरुद्धव्यूहरूपेण च। वासुदेवो नाम परमात्मा सङ्कर्षणो नाम जीवः प्रद्युम्नो नाम मनः अनिरुद्धो नामाहङ्कारः तेषां वासुदेवः परा प्रकृतिरितरे तु सङ्कर्षणादयः कार्यं तमित्थम्भूतं भगवन्तमभिगमनोपादानेज्यास्वाध्याययोगैर्वर्षशतमिष्ट्वा भगवन्तमेव प्रतिपद्यन्त' इति भगवदाचार्यैरुपदिष्टम्। अहर्मुखं उषःकालः तस्मिन् विलसन् प्रकाशमानो य आम्रस्य चूतवृक्षस्य पल्लवः किसलयं स इव उल्लसितुं प्रकाशितुं शीलं यस्य स उल्लासी। ताच्छीलिको णिनिप्रत्ययः। तस्मिन् दन्तच्छदे ओष्ठे प्रकीर्णतया विक्षिप्ततया सन्ध्याया अयं सान्ध्यः स चासौ यो रागः तेन सम्मूर्च्छिता व्यतिकृता मिळितेति यावत्। या चन्द्रिका ज्योत्स्ना तस्या उद्गारः प्रसरः। 'निगारोद्गारविक्षाव' इत्यमरः। तमनुकर्तुं शीलं यस्य तत्तथाभूतेन मन्दस्मितेन। 'सोत्प्रासस्तु मनाक्स्मितं' इत्यमरः। कलिः कलियुगं तस्मिन् तेन वा कलुषाः मलिनाः ये जीवानां प्राणिनां आशयाः आशेरते संस्कारा एष्विति व्युत्पत्त्या मनांसीत्यर्थः। तेषां प्रसादनाय निर्मलीकरणाय कतकाः जलशोधकबीजविशेषाः तेषां रेणुभिः परागैरिव स्थितैः यथा कतकरेणवः कर्दमांशमपनुद्य जलं निर्मलयन्ति तथा भगवत्कटाक्षा अपि कलिकालुष्यांशमपनुद्य जीवाशयान्निर्मलीकुर्वन्तीति भावः। कलितः कृतः नानावर्णानां शुक्लपीतादीनां विन्यासः स्थितिः तेन पेशलैः रमणीयैः कैवल्यं मुक्तिरेव लक्ष्मीः सौभाग्यदेवता तस्यास्स्वयंवरदामानि स्वयंवरणार्थमालाः तैरिव स्थितैः। कैवल्ये सति परापेक्षाराहित्यात्तस्य लक्ष्मीत्वमिति भावः। परिवहन्ती प्रवहन्ती या करुणा कृपा तस्या आसारः प्रसरणं तस्य सम्पातेन सम्बन्धेन शीतलैः कृपारसमेळनात्कटाक्षाणां शीतलत्वमिति भावः। एवंविधैः कटाक्षैः न विद्यते अन्यशरणं रक्षकान्तरं येषां ते तान्।

कटाक्षैरप्यनुगृह्णन्तमनन्यशरणान्महामुनीन्, कार्णवेष्टनिकविलसन्मुखारविन्दकामनीयकावलोकनविस्मयमानकमलावितीर्णचुम्बनासक्तताम्बूलरागसम्पद्विडम्बिना पद्मरागतिलकेन परिष्कृतफालवलयं, अतिनिर्मलफणामण्डलोदरप्रतिबिम्बितैरहिराजफणामणिगणैरिव किरीटरत्नैरभिरञ्जितमहार्होपबर्हं, अतिविनयभारभङ्गुरैरनन्यार्पितदृष्टिभिराकृतिमद्भिरायुधैः पञ्चभिरभितोऽपि यथोचितमासेव्यमानं, अनुपमेयं प्राकृतैर्भावैः, अप्रमेयमनुत्तरपदारोहपङ्गुभिरर्वाचीनैः प्रमाणैः, अक्षोभ्यं विज्ञानसागरं,

---

महान्तो मुनयः मननशीलाःताननुगृह्णन्तं उद्धरन्तं पुरुषार्थदानादिति भावः। कर्णवेष्टनमेव कार्णवेष्टनिकम्। स्वार्थे ठक्प्रत्ययः। कुण्डलमित्यर्थः। 'कर्णिका ताळपत्रं स्यात्कुण्डलं कर्णवेष्टनं' इत्यमरः। तेन विलसत् प्रकाशमानं यन्मुखारविन्दं मुखकमलं तस्य यत् कामनीयकं रमणीयत्वं तस्यावलोकनेन विस्मयमाना आश्चर्यवती या कमला लक्ष्मीः तया वितीर्णं विश्राणितं यच्चुम्बनं तेन आसक्ता सङ्क्रान्ता या ताम्बूलरागस्य वीटीरसारुण्यस्य सम्पदतिशयः तद्विडम्बिना तदनुकारिणा पद्मरागमेव तिलक तेन। 'तमालपत्रतिलकचित्रकाणि विशेषकं' इत्यमरः परिष्कृतः अलङ्कृतः फालवलयः ललाटदेशो यस्य स तथाभूतम्। अतिनिर्मलाः अत्यन्तधवळाः याः फणाः स्फटाः। 'स्फटायान्तु फणा द्वयोः' इत्यमरः। तासां मण्डलस्य समूहस्य उदरं मध्यदेशस्तस्मिन् प्रतिबिम्बितैः प्रतिफलितैः अहिराजस्य शेषस्य याः फणाः तासां मणिगणैः मणिसमूहैरिव स्थितैः किरीटरत्नैः अभिरञ्जितं रक्तं कृतं महार्हमुत्तममुपबर्हमुपधानं यस्य। 'उपधानं तूपबर्हं' इत्यमरः। तथाभूतम्। अतिविनयः अत्यन्तभक्तिः स एव भारः तेन भङ्गुरैः भुग्नैः नम्रैरिति यावत्। अनन्यार्पिताः अन्यत्र अविन्यस्ताः दृष्टयो दृशो येषां तैः आकृतिमद्भिर्मूर्तिमद्भिः पञ्चभिरायुधैः चक्रगदाखड्गादिभिः अभितः परितोऽपि यथोचितमासेव्यमानं प्रकृतिर्माया तस्यां भवाः आभासत्वेन स्थिताः प्राकृताः प्रकृतिसम्बन्धिन इति यावत्। तथाविधैः भावैः जीवात्मभिः। 'भावस्सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु' इत्यमरः। अनुपमेयं तुलनानर्हं अविद्यमानमुत्तरं यस्मात्तथाविधं यत्पदं स्थानं तस्यारोहः आरोहणं तस्मिन् विषये पङ्गुभिः विकलाङ्गतुल्यैः अर्वाचीनैः जघन्यैरिति तात्पर्यार्थः प्रमाणैः शास्त्रैः। 'प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु' इत्यमरः। प्रत्यक्षादिप्रमाणैरिति वार्थः। अप्रमेयं ज्ञातुमशक्यमित्यर्थः। अक्षोभ्यः शोषयितुमशक्यो विज्ञानसागरः विज्ञानसमुद्रः तथाभूतम्। प्रसिद्धसागर इवागस्त्यादिभिश्शोषयितुमशक्य इति भावः। अक्षयं नाशरहितम्। महान्तः आनन्दाः तेषां शेवधिं निधिम्। 'निधि-

अक्षयं महानन्दशेवधिं, अतिदुर्लभमश्रुतानुश्रवैरमीमांसितोपनिषदाशयैरनध्यासितनिदिध्यासनपथैरक्षालितकर्माशयैरनुल्लङ्घिताविद्यकपर्वपञ्चकैः, अनायासलभ्यमतिदृढावलम्बितगुरुचरणैरपायोपायवृत्तिपराङ्मुखैरप्रकम्प्यविश्वाससम्पदवष्टम्भशालिभिरात्मार्पणतत्त्ववेदिभिर्महाभागैः, असाधारणषाड्गुण्यं, अखिललोकशरण्यमालक्ष्य सर्वप्रमाणपरायणं भगवन्तं नारायणं

---

र्ना शेवधिर्भेदा' इत्यमरः । अश्रुताः अश्रवणविषयीकृताः अनुश्रवाः वेदाः यैस्ते तथाभूतैः अमीमांसितः अविचारितः उपनिषदामाशयः तात्पर्यं यैस्ते तथाभूतैः अनध्यासितः अनध्युषितः निदिध्यासनं निर्विकल्पसमाधिः स एव पन्था मार्गो यैस्ते तथाभूतैः । अक्षालितानि अपर्युदस्तानि अशोधितानीति वा । कर्माणि सङ्कल्पलक्षणानि यैस्तैः अक्षालितकर्माणः तथाविधा आशयाः मनांसि येषां ते । 'सङ्कल्पः कर्म मानसं' इत्यमरः । तथाभूतैः । अनुल्लङ्घितानि अनतिक्रान्तानि अविद्यासम्बन्धीनि पञ्चसङ्ख्याकानि पर्वाणि तमोमोहमहामोहतामिस्रान्धतामिस्रनामानि यैस्ते तथाभूतैः । अविद्यायाः पञ्चपर्वत्वे प्रमाणभूतं वचनं सुरेश्वराचार्यैरुदाहृतम् । 'तमोमोहमहामोहतामिस्राण्यन्धसंज्ञिकः । अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥' इति । तथाभूतैः अतिदुर्लभं अतिदुष्प्रापम् । 'नावेदविन्मनुते तं बृहन्तं' इति श्रुतेः 'तं त्वौपनिषं पृच्छामि' इति श्रुतेश्च । उपनिषद्वाक्यजन्यश्रवणादिसहकृततत्त्वसाक्षात्कारमन्तरा तत्पदं दुर्लभमिति भावः । अतिदृढमतिगाढं अवलम्बितावाश्रितौ गुरोश्चरणौ यैस्ते तथाभूतैः । अपायो नाशः स च । 'अपायव्यत्ययौ नाश' इति विश्वः । उपायः उपागतिः । 'उपायस्स्यादुपागतौ' इति नानार्थमाला । स च तयोरुपायापाययोर्व्ययलाभयोरिति यावत् । वृत्तिर्वर्तनं तस्याः पराङ्मुखाः अवाङ्मुखाः विनिर्गता इति यावत् । विद्यमानस्य व्यये नूतनस्य लाभे वा विकाररहिता इति भावः । तथाभूतैः अप्रकम्प्यः स्थिरः यो विश्वासः रक्षिष्यतीति विस्रम्भः तस्य सम्पदतिशयः तया यः अवष्टम्भः गर्वः तच्छालिभिः । आत्मार्पणं नाम आत्मनोः शरीरबुद्ध्योरर्पणं तत्र शरीरार्पणं तु सर्वदा तदर्चनवन्दनतदालयसम्मार्जनादिकर्मस्वेव शरीरस्यावस्थानम् । बुद्ध्यर्पणं तु तत्कथाश्रवणतन्नामानुकीर्तनतत्स्वरूपध्यानादिष्वेव बुद्धेरवस्थापनम् । सर्वमिदं शिवरहस्ये स्पष्टमुक्तम् । उक्तलक्षणस्यात्मार्पणस्य तत्त्वं याथातथ्यं तद्वेदितुं शीलं येषां ते तथाभूतैः । महान् अनल्पः भग एव भागः माहात्म्यं यत्नो वा येषां तैर्महात्मभिरित्यर्थः । 'भगश्श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु' इत्यमरः । 'एतैरुपायैर्यतयस्तु विद्वानस्यैष आत्मा विशते ब्रह्म धाम' इति श्रुतेर्यत्नवतामेव तत्पदप्राप्तिश्रवणादिति भावः । अनायासेन सुखे-

**असकृत्प्रणिपतन्, असकृदुत्थाय, बध्नन् शिरस्यञ्जलिं, असकृदावर्तयन् प्रणवं, असकृदनुस्मरन् परतत्त्वं, अश्रुपूर्णैर्लोचनैरविरळपुळकाङ्कितैरङ्गकैरानन्दगद्गदैश्च वचोभिरित्थमस्तावीत् ।**

**'क्षन्तारं सकलागसां जडधियां यन्तारमन्तस्तमो-**
**हन्तारं जगतामनुत्तरपराहन्ताङ्कितोरःस्थलम् ।**
**उद्यत्कौस्तुभशोभमुत्पलवनीसच्छायमच्छायत-**
**स्निग्धापाङ्गतरङ्गमैक्षिषि परं ब्रह्माच्युतं शाश्वतम् ॥ ३५ ॥**

---

न लभ्यं प्राप्यम्। असाधारणमन्यत्रावर्तमानं ऐश्वर्यादयः षड्गुणा एव षाड्गुण्यं यस्य स तथाभूतम्। अखिललोकानां शरण्यं रक्षणधुरीणं सर्वेषां प्रमाणानां मर्यादानां परायणं प्राप्यस्थानम्। 'सा काष्ठा सा परा गतिः' इति श्रुतेरिति भावः। अथवा सर्वाणि प्रमाणानि प्रमातारः शोधिततत्त्वपदार्था इति यावत्। तेषां परायणं प्राप्यस्थानमित्यर्थः। 'द्विपरार्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥' इति स्मृतेरिति भावः। 'प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु' इत्यमरः। भगवन्तं माहात्म्यवन्तं नारायणमालक्ष्य दृष्ट्वा असकृत्पुनः प्रणिपतन् नमस्कुर्वन्। असकृन्मुहुरुत्थाय शिरसि मूर्धनि अञ्जलिं संयुतपाणिम्। 'तौ युतावञ्जलिः पुमान्' इत्यमरः। बध्नन् प्रणवमोङ्कारमसकृदावर्तयन्नुच्चारयन् परं निरतिशयं यत्तत्त्वं परमात्मानमनुस्मरन् ध्यायन् सन्नित्यर्थः। 'तत्त्वं विलम्बमाने स्यात् स्वरूपे परमात्मनि' इति नानार्थमाला। अश्रूणि आनन्दजनितनेत्राम्बूनि। 'दृग्दृष्टिश्चाश्रु नेत्राम्बु' इत्यमरः। तैः पूर्णैः भरितैः लोचनैः अविरळाः सान्द्राः पुलकाः कण्टकाः। 'पुलकः कण्टको लोमविक्रिया रोमहर्षणं' इति हेमचन्द्रः। तैरङ्कितैः चिह्नितैरङ्गकैरवयवैश्च उपलक्षितः सन्निति शेषः। अनुकम्पायां कन्प्रत्ययः। आनन्देन लक्षणया आनन्दपारवश्येन गद्गदानि त्वराविलम्बाभ्यामस्फुटानि तथाभूतैर्वचोभिः इत्थमस्तावीत्। वक्ष्यमाणप्रकारेण गुणकीर्तनं चकारेत्यर्थः। स्तुतिप्रकारमेवाह त्रिभिः श्लोकैः ॥ **क्षन्तारमिति** ॥ सकलानि यानि आगांसि अपराधाः तेषाम्। कर्तृकर्मणोः कृतीति कर्मणि षष्ठी। क्षन्तारं तितिक्षुमित्यर्थः। जडा मलिना धियो येषां ते जडधियः तेषां रावणादीनामिति भावः। षष्ठी पूर्ववत्। यन्तारं निगृह्णन्तं जगतां लोकानां अन्तस्तमः अज्ञानं तस्य हन्तारं विनाशकम्। 'तेषामेवानुकम्पार्थमहमज्ञानजं तमः। नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता' इति शास्त्रादिति भावः। अविद्यमानमुत्तरं यस्मात्तदनुत्तरं पराहन्तया परलक्ष्म्या अङ्कितमुरस्स्थलं यस्येति नीलोज्वलवपुरितिवत् बहुपदबहुव्रीहिर्बोध्यः। अहन्ताशब्दो लक्ष्मीं कथमभिधत्त इति चेदत्र केचित्। श्रीमदाचार्यैस्सौन्दर्यलहर्यां पुरमथितुराहो-

किं तर्कैरतिवक्रैः किं फलमुपबृंहणैर्विविधैः।
अद्राक्षिषि श्रुतीनामाशयमहिराजभोगशयम् ॥ ३६ ॥

अहो धन्योऽस्मि धन्योऽस्मि।

एकं तद्द्विविभूति त्रिधामनिहितं चतुर्व्यूहम्।
पञ्चायुधं प्रपद्ये षड्गुणसम्पन्नमशरणश्शरणम् ॥ ३७ ॥' इति

---

पुरुषिकेति श्लोके आहोपुरुषिकात्वेन पार्वत्या वर्णनं कृतं तथा 'अहं तामालम्बे दृढतरमहन्तां पशुपतेः' इति मूकपञ्चशतीश्लोके पशुपत्यहन्तात्वेन शिवायाः एव वर्णनं कृतं वर्तत इत्येतदनुसारेण नारायणाहन्तात्वेन श्रियो वर्णनं कृतवान् कविरिति समाधानमाहुः। उद्यन्ती कौस्तुभस्य शोभा कान्तिर्यस्मिन् तथाभूतम्। स्त्रियाः पुंवदित्यादिना उद्यन्तीशब्दस्य पुंवद्भावः। समाना छाया कान्तिर्यस्य स सच्छायः उत्पलवन्या उत्पलवनेन सच्छायस्तत्समानमिति यावत्। अच्छा निर्मला आयता दीर्घास्स्निग्धा अपाङ्गा एव तेषां वा तरङ्गा यस्य तं तथाभूतम्। शाश्वतं शश्वत् सर्वेषु कालेषु भवतीति शाश्वतम्। सार्वत्रिकमित्यर्थः। 'शाश्वतस्तु ध्रुवो नित्यसदातनसनातना' इत्यमरः। अविद्यमानं च्युतं स्खलनं यस्य सोऽच्युतः तं नित्यमित्यर्थः। 'शाश्वतं शिवमच्युतं' इति श्रुतेः। परं निरतिशयं ब्रह्म ऐक्षिषि अपश्यम्। ईक्ष दर्शनाङ्कनयोरित्यस्माल्लुङि रूपम्। अत्राहन्ताशब्देन लक्ष्म्या निगरणपूर्वकाहन्तारूपताध्यवसानाद्रूपकातिशयोक्त्यलङ्कारः। तल्लक्षणं तु 'रूपकातिशयोक्तिस्स्यान्निगीर्याध्यवसानतः' इति ॥ **किमिति** ॥ अतिवक्रैः अतिकुटिलैः तर्कैः कामैः बहुधा प्रसरणात्तेषां वक्रत्वमिति भावः। 'तर्कौ वितर्के काङ्क्षायामूहवर्मविशेषयोः' इति हैमः। किं न किमपीति सम्पाद्याभावादिति भावः। विविधैः अनेकप्रकारैः उपबृंहणैरभिवृद्धिभिः। बृहि वृद्धाविति धातोर्ल्युट्प्रत्ययः। तस्य युवोरनाकावित्यनादेशः। किं फलं न किमपीत्यर्थः। भङ्गुरत्वाद्वृद्धीनामिति भावः। अत्र केचित् तर्कैः युक्तिभिः उपबृंहणैरितिहासादिभिरितरत्समानमिति व्याजह्रुः। तच्चिन्त्यं अत्रास्मिन् काले देशे वेत्यर्थः। श्रुतीनां वेदानां आशयं तात्पर्यविषयीभूतं अहीनां सर्पाणां राजा अहिराजः तस्य भोगः कायः तस्मिन् शयं निद्राणं परब्रह्मेत्यस्यानुषङ्गः। ऐक्षिषि अपश्यम्। ईक्ष दर्शन इति धातोर्लुङि रूपम्। अत्रोपमेयत्वेन सम्भावितस्यात्युपमस्य भगवद्दर्शनस्य लाभेन पुरुषार्थतया तदुपमानत्वेन सम्भावितस्योपबृंहणस्य निराकरणाद्विच्छित्तिविशेषशाली प्रतीपालङ्कारः। तथोक्तं काव्यादर्शे 'प्रतीपमुपमानस्य कैमर्थ्यमपि मन्वते। अन्योपमेयलाभेन वर्ण्यस्यानादरश्च तत् ॥ अन्योपमेयलाभेन तथान्यस्याप्यनादरः।' इति। अत इत्यस्याध्याहारः भगवद्दर्शनात् धन्योऽस्मि अहो इत्याश्चर्यार्थकः ॥ **एकमिति** ॥ द्वे विभूती जीवेशलक्षणे य-

**अत्रान्तरे वाचस्पतिं पुरस्कृत्य वासवमुखा बर्हिर्मुखाः प्रविकीर्य पुष्पाञ्जलीन्, प्रणिपत्य दूरतश्शतकृत्वः, समुत्थाय शिरसि सङ्घटिताञ्जलयो विस्मयस्तिमितास्स्तम्भवदासाञ्चक्रिरे।**

**तुष्टूषतोऽस्य बहुधा सुरदेशिकस्य**
**दिव्याद्भुतानि चरितानि परस्य धाम्नः।**

---

स्य तद्द्विविभूति अथवा द्वे विभूती चराचरलक्षणे ज्ञानैश्वर्यलक्षणे वा यस्य तद्द्विविभूति। त्रीणि यानि धामानि जाग्रत्स्वप्नसुषुप्त्यवस्थालक्षणानि स्थानानि। 'धाम जन्मप्रभास्थानप्रभावसुखसद्मसु' इति नानार्थरत्नमाला। तेषु निहितं साक्षित्वेन स्थितम्। अथवा भूतभविष्यद्वर्तमानलक्षणरूपाणि त्रीणि धामानि तेषु स्थितम्। अथवा सूर्यचन्द्राग्निषु निहितम्। 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्॥' इति स्मृतेः। यद्वा द्वे विभूती लीलाविभूतिनित्यविभूत्यात्मिके यस्य तत्तथा। त्रीणिधामानि सूर्यमण्डलक्षीराब्धिपरमपदनामानि तेषु निहितं सन्निहितम्। चत्वारः व्यूहाः वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धनामानो यस्य तच्चतुर्व्यूहम्। यस्य पञ्चसङ्ख्याकानि आयुधानि प्रहरणानि शङ्खचक्रगदाशार्ङ्गनन्दकरूपाणि यस्य तत्तथाभूतम्। षट्सङ्ख्याकाः ये गुणाः ज्ञानशक्तिबलैश्वर्यवीर्यतेजोरूपाः तैस्समग्रं सहितम्। एकं अद्वितीयं तत्परं ब्रह्म कर्म अशरणः रक्षकान्तररहितः अहं शरणं संरक्षकं प्रपद्ये प्राप्तोऽस्मि। विधिवृत्तान्तमुपवर्ण्य संप्रति देवानां वृत्तान्तमाह॥ **अत्रेति** ॥ अत्रान्तरे अस्मिन्नवसरे वाक्पतिं पुरस्कृत्य पुरतः कृत्वा वासवमुखा इन्द्रादयः बर्हिरग्निर्मुखं येषां ते बर्हिर्मुखा देवाः पुष्पभरिताश्च तेऽञ्जलयश्चेति कर्मधारयः। शाकपार्थिवादित्वात् उत्तरपदलोपः। तान् प्रकीर्य विकीर्येत्यर्थः। यद्यप्यञ्जलिसंप्रकिरणं न सम्भवति किन्तु पुष्पाणामेव तथापि सर्वे देवाः सम्भूय युगपदेवाञ्जलिभिः पुष्पाणां प्रकिरणं कृतवन्तः तदाञ्जलय एव प्रकीर्णा इव स्थिता इति भावः। दूरतः दूरे। इतराभ्योऽपि दृश्यन्त इति सप्तम्यास्तसिः। शतकृत्वः शतवारम्। सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुजिति कृत्वसुच्प्रत्ययः। प्रणिपत्य नमस्कृत्य सङ्घटितास्संयोजिता अञ्जलयो यैस्ते तथाभूतास्सन्तः। विस्मयः अद्भुतं तेन स्तिमिता निश्चलास्सन्त आर्द्रा इति वार्थः। 'आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तं च' इत्यमरः। सात्त्विकभावोदयादिति भावः। स्तम्भेन स्थूणया तुल्यं स्तम्भवत्। तेन तुल्यमिति वत्प्रत्ययः। आसाञ्चक्रिरे तस्थुः॥ **तुष्टूषत इति** ॥ धाम्नस्सर्वाधारस्य परस्य परमात्मनः। 'परोऽरिपरमात्मनोः' इति विश्वः। दिव्यानि श्रवणरमणीयानि च तानि अद्भुतानि आश्चर्यकराणि चेति कर्मधारयः। चरितानि कर्माणि बहुप्रकारैः तुष्टूषतः स्तोतुमिच्छतः। ष्टुञ्धातोस्सनि अज्झनगमां सनीति

स्तब्धा सती श्वशुरदर्शनसाध्वसेन
वाणी न वक्त्रकुहराद्बहिराविरासीत् ॥ ३८ ॥

ततः प्रसादविमलपद्मनाभकटाक्षपरिक्षेपविदितेङ्गितया पादमूलनिविष्टया तस्य भगवत्या पद्महस्तया निसर्गमधुरैरपि निर्भरवात्सल्यसुधासारमधुरैरक्षरैः 'वत्स चिरादागतोऽसि वर्तसे कुशलेन, का इमाः प्रजाः कान्दिशीका इव लक्ष्यन्ते' इत्यनुयुज्यमानो विधिरन्तरानन्दतुन्दिलः प्रणम्य शतशः परां देवतामिदमाबभाषे।

'जय जय जगदम्ब जाम्बूनदाम्भोजकोशप्रभे
जय जय कमलाक्षवक्षःस्थलीहर्म्यनर्मप्रिये।

---

दीर्घः। सुरदेशिकस्य सुरगुरोः वक्त्रकुहरात् मुखाबलात् वाणी सरस्वती श्वशुरः पत्युः पिता 'पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः' इत्यमरः। तस्य दर्शनं साक्षात्कारः तस्मात् साध्वसं भयं तेन स्तब्धा निश्चला सती बहिर्नाविरासीत् न प्रादुर्बभूव ॥ तत इति ॥ ततो देवप्रणामानन्तरं प्रसादः प्रसन्नता आभिमुख्यमिति यावत्। तेन विमलाः मनोहराः ये पद्मनाभस्य नारायणस्य कटाक्षाः। 'कटाक्षोऽपाङ्गदर्शने' इत्यमरः। तेषां परिक्षेपः परिपातः तेन विदितं श्रुतं इङ्गितम्। 'निकारो विप्रकारः स्यादाकारस्त्विङ्ग इङ्गितं' इत्यमरः। भावो यया सा। तथाभूतया। तस्य नारायणस्य पादयोर्मूले निविष्टया उपविष्टया भगवत्या महिमशालिन्या पद्महस्तया रमादेव्या निसर्गः स्वभावः तस्मान्मधुरा रमणीयाः तथाभूतैरपि निर्भरमतिमात्रमित्यर्थः। 'अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरं' इत्यमरः। वात्सल्यं प्रेम तदेव सुधा पीयूषं तस्याः आसारः धारासम्पातः तेन मधुरैः स्पृहणीयैः। हे वत्स चिरात् चिरकालेनेत्यर्थः। आगतोऽपि कुशलेन क्षेमेण वर्तसे किमिति काकुः। इमाः परिदृश्यमानाः प्रजाः जनाः। 'प्रजा स्यात्सन्ततौ जने' इत्यमरः। कान्दिशीकाः भयद्रुता इव। 'कान्दिशीको भयद्रुतः' इत्यमरः। लक्ष्यन्ते दृश्यन्ते इतीत्थंविधैरक्षरैः वर्णैर्वचोभिरिति फलितार्थः। अनुयुज्यमानः आपृष्टः अत एवानन्देन सुखेन तुन्दिलः मांसलः। 'तुन्दिलस्तुन्दिभस्तुन्दी' इत्यमरः। विधिः ब्रह्मा शतशः अनेकधा। बह्वल्पार्थाच्छसिति शस्प्रत्ययः। परां देवतां मङ्गळदेवतां प्रति प्रणम्य नमस्कृत्य इदं वक्ष्यमाणं वच आबभाषे जगाद। अथ कथनप्रकारमाह ॥ जयेति ॥ जगतां लोकानां अम्बा जगदम्बा तस्यास्सम्बुद्धिः हे जगदम्ब। अम्बार्थनद्योर्ह्रस्व इति सम्बुद्धिनिमित्तकह्रस्वः। जाम्बूनदं सुवर्णं तन्मयो यः अम्भोजस्य कोशः कुड्मलं तस्य प्रभेव प्रभा यस्याः तस्यास्सम्बुद्धिः। जय जय सर्वोत्कर्षेण वर्तस्व। भक्तिवशाद्धातोर्द्वि-

जय जय करुणाकटाक्षप्रतीक्षत्रिलोकेश्वरे
जय जय जनिमार्गलग्नाणुवर्गापवर्गप्रदे ॥ ३९ ॥
वत्सेति प्रवहत्सुधारसपरिष्वक्तं यदामन्त्रितं
दृष्टं यच्च दयातरङ्गशिशिरोत्सङ्गैरपाङ्गैस्त्वया ।
तस्मादस्म्यधुना विशिष्य कुशली धन्याश्च देवा इमे
विज्ञाप्यं तु कथं हरौ किमथवा तस्यादिरादिश्यताम् ॥'
इति यावत्प्रार्थयते कमलां कमलासनस्तावद्गोविन्द एव स्वयमित्थमनुजगृहे ।

---

क्तिः । कमलाक्षस्य या वक्षःस्थली सैव हर्म्यं सौधः तस्मिन्नर्म केळिः तत्प्रियं यस्यास्सा तस्यास्सम्बुद्धिः । जय जय । करुणा कारुण्यं तन्मिश्राश्च ते कटाक्षाश्चेति शाकपार्थिवादित्वात्समासः । तथाविधकटाक्षान् प्रतीक्षमाणाः प्रतिपालयन्तः त्रिलोकेश्वराः यस्यास्सा तस्यास्सम्बुद्धिः । जय जयेति सम्बन्ध जनिरुत्पत्तिः तस्या मार्गः संसारमार्ग इति तात्पर्यार्थ । तस्मिन् लग्नास्सम्बद्धा ये अणवः परिमाणविशेषविशिष्टा जीवा इत्यर्थः । तेषां यो वर्गस्सद्घातरूपः मूर्तिभूत इति यावत् । तस्यापवर्गप्रदा मोक्षप्रदा तस्यास्सम्बुद्धिः । जय जय सर्वोत्कर्षेण वर्तस्व । भगवत्यास्सर्वोत्कर्षे प्रतिपादिते सति सर्वान्तःपातित्वात् स्वस्यापि स्यापेक्षयापि भगवत्यामुत्कर्षोऽभिहितप्राय एवेतीयमुक्तिस्स्वावधिकतदुत्कृष्टत्वानुसन्धानरूपनमस्कार एव पर्यवस्यतीति वेदितव्यम् । मातृवचनप्रशंसापूर्वकं स्वक्षेममभिधाय भगवन्निकटे वक्तव्यक्रमं पृच्छतीत्याह ॥ **वत्सेति** ॥ त्वया प्रवहन् प्रसरन् सुधारसो अमृतद्रवः तेन परिष्वक्तं परिप्लुतं वत्सेति यदामन्त्रितम् । नपुंसके भावे क्तः । यदाह्वानमित्यर्थः । दया कृपा तस्यास्तरङ्गाः परम्परा इति तात्पर्यार्थः । तैश्शिशिरः शीतलः उत्सङ्गः समीपदेशः येषां ते तथाभूतैः 'अङ्कस्समीप उत्सङ्ग' इति विश्वः । अपाङ्गैः नेत्रान्तैः यद्दृष्टं अत्रापि पूर्ववत् क्तः । यदवलोकनमित्यर्थः । तस्मादाभाषणावलोकनलक्षणादुभयस्मात् अहं विशिष्य विशेषतः अधुना कुशली पुण्यवानस्मि भवामि । 'पर्याप्तिक्षेमपुण्येषु कुशलं' इत्यमरः । इमे देवाश्च धन्याः हरौ भगवद्विषये तु कथं विज्ञाप्यं विज्ञापना कथं कर्तव्येत्यर्थः । अथ कार्त्स्न्येन । 'मङ्गळानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः । तस्य विज्ञाप्यस्यादिः प्रकारः । 'आदिः प्रकारे प्रथमे निदाने परपूरुष' इति भास्करः । आदिश्यतामुच्यताम् । आङ्पूर्वाद्दिशतेरुच्चारणार्थाद्भावकर्मणोरित्यात्मनेपदं लोट् ॥ **इतीति** ॥ कमलासनो ब्रह्मा कमलां लक्ष्मीं प्रति इतीत्थं यावत्प्रार्थयते प्रार्थनां कुर्यात् । यावत्पुरानिपातयोर्लडिति लट्प्रत्ययः । तावद्गोविन्दः स्वयमेव इत्थं वक्ष्यमाणप्रकारं अनुजगृहे अनुग्रहं

'स्रष्टासि तात जगतोऽस्य चराचरस्य
सन्धारयस्यथ मुखैश्चतुरोऽपि वेदान् ।
तेनासि लोकदयितो दयितो ममापि
तद्ब्रूहि कं सफलयामि मनोरथं ते ॥ ४०-४१ ॥

कत्यसृजं विश्वसृजः कति वा स्रक्ष्यामि कति सृजाम्यधुना ।
भवति परभक्तिशालिनि भवतीव न मे कचित्करुणा ॥ ४२ ॥'

इति मधुरां गिरमिन्दिरापतेः पिबन्नष्टभिः कर्णैः पितामहस्तादात्विकहर्षसम्भ्रमावलुप्तवक्तव्यः कथञ्चिदिदमाचचक्षे ।

'स्वप्नोन्मादावपि हि सृजतो नाथ वस्तूनि मिथ्या
सन्धार्यन्ते ननु च मनुजैरप्यमी वेदवादाः ।

---

कृतवान् । अनुग्रहप्रकारमेवाह ॥ **स्रष्टेति** ॥ तातेत्यामन्त्रणं लोकवत्प्रेमातिशयेनेति बोध्यम् । यस्मात्कारणात् चरं चाचरं चानयोस्समाहारः चराचरं तस्य स्थावरजङ्गमात्मकस्येत्यर्थः । अस्य परिदृश्यमानस्य जगतः लोकस्य । 'विष्टपं भुवनं जगत्' इत्यमरः । स्रष्टा निर्मातासि भवसि अथ चतुरो वेदान् ऋग्यजुस्सामाथर्वणः मुखैः सन्धारयसि वहसि तेन कारणेन लोकानां जनानां दयितः प्रियः असि । स्वर्गापवर्गसम्पादकशरीरनिर्माणादिति भावः । ममापि दयितः प्रियः असि मदाज्ञारूपवेदधारणादिति भावः । तत्तस्मात्ते तव कं मनोरथं सङ्कल्पं सफलयामि अद्यैव सफलं करोमि । तत्करोति तदाचष्ट इति सफलशब्दाद्वर्तमाने लट् । ब्रूहि ॥ **कतीति** ॥ कति विश्वसृजः विधातॄनहमसृजं निर्मितवानास्मि कति वा विधीन् इतः परामिति शेषः । स्रक्ष्यामि निर्माणं करिष्यामि अधुना कति ब्रह्मणः सृजामि निर्माणं करोमि कालस्यानादित्वादनेके ब्रह्माणः पूर्वं बभूवुः । उत्तरत्रानेके भविष्यन्ति ब्रह्माण्डानामानन्त्यादधुना अनेके वर्तन्ते तथापीति भावः । परा उत्कृष्टा या भक्तिः मय्यनुरागः तया शाली शोभमानः तथाभूते भवति त्वयीव मे मम कचित् कस्मिन्नपि ब्रह्मणीत्यर्थः । करुणा कृपा न भवति नास्तीत्यर्थः ॥ **इतीति** ॥ पितामहः ब्रह्मा इति एवंप्रकारं इन्दिरापतेः माधवस्य तां तादृशीं गिरं वाचं अष्टभिरष्टसङ्ख्याकैः कर्णैः श्रोत्रैः चतुर्मुखत्वात्तस्याष्टकर्णत्वमित्याशयः पिबन् शृण्वन्निति तात्पर्यार्थः । तदात्वं तत्कालः । 'तत्कालस्तु तदात्वं स्यात्' इत्यमरः । तत्र भव इत्यर्थे कालवाचित्वात् ठञ्प्रत्ययः । एवं तादात्विकः यो हर्षः आनन्दः तेन सम्भ्रमेण आदरेण चावलुप्तं अदृष्टं अस्फुरितमिति यावत् । वक्तव्यं कथनीयं यस्य स तथाभूतस्सन् कथञ्चित् कृच्छ्रेणेदं वक्ष्यमाणं आचचक्षे जगाद । उक्तिप्रकारमेवाह ॥ **स्वप्नेति** ॥ स्वप्नः

प्राप्तं श्रेयः किमहमियता प्रापमेवानया तु
स्वामिन् दृष्ट्या तव शिशिरया मङ्गळं मङ्गळानाम् ॥ ४३ ॥
मनोरथानामपि यो मनोरथः
सुदुर्लभानामपि यत्सुदुर्लभम् ।
तदेव लब्धं तव पादपङ्कजं
कदर्थनान्येव कदर्थनान्यतः ॥ ४४ ॥

अपि च ।

के देवाः के दनुजाः किं जगदेवेदमन्ततः कोऽहम् ।
परिहृत्य विमोहमिमं पालय दासोऽस्मि दासोऽस्मि ॥ ४५ ॥'

---

स्वापावस्था । 'स्यान्निद्रा शयनं स्वापस्स्वप्नस्संवेश इत्यपि' इत्यमरः । उन्मादः उन्मादावस्था । 'उन्मादश्चित्तविभ्रमः' इत्यमरः । तौ स्वप्नोन्मादावपि कर्तारौ हे नाथ मिथ्या वितथा । 'मृषा मिथ्या च वितथा' इत्यमरः । वस्तूनि पदार्थान् सृजतः निर्माणं कुर्वतः अमी एते वेदवादाः वेदोक्तयः मनुजैरपि सन्धार्यन्ते ननु एकैकमुखेनापीति भावः । ध्रियन्ते खलु । इयता एतावता इहेदानीं किं श्रेयः प्राप्तं प्राप्तवानास्मि न किमपीत्यर्थः । हे स्वामिन् अनया शिशिरया शीतलया तव दृष्ट्या दर्शनेन । 'दृष्टिर्ज्ञानेऽक्षिण दर्शने' इत्यमरः । मग्यन्ते उपसृप्यन्त इति मङ्गळाः उपसर्पणीया इत्यर्थः । मगि सर्पण इति धातोः मगेरलच्प्रत्ययः । तेषां मङ्गळं उपसर्पणीयं धामेति शेषः । प्रापं प्राप्तवानस्मि । यद्वा मङ्गळानां मङ्गळं परमं शुभमित्यर्थः । 'कल्याणे मङ्गळे भौमे मङ्गळा श्वेतदूर्विका' इति हेमचन्द्रः । प्रापं पूर्ववत् ॥ **अपि चेति** ॥ मनोरथानां इच्छानां निर्धारणे षष्ठी । 'इच्छा काङ्क्षा स्पृहेहा तृड्वाञ्छा लिप्सा मनोरथः' इत्यमरः । यः मनोरथः मुख्यसङ्कल्प इत्यभिप्रायार्थः । सोऽपि फलित इति पदद्वयस्य शेषः । सुदुर्लभानामपि अनुपलभ्यमानवस्तूनामपि यद्दुर्लभं पूर्ववत्षष्ठी तत्तथाविधं तव पादसेवनं पादसेवा एवकारो भिन्नक्रमः लब्धमेव प्राप्तमेव अतः । ल्यब्लोपे पञ्चमी । एतत्तव पादसेवनं विहायेत्यर्थः । अतिरिक्तप्रार्थनानीति शेषः । कदर्थनानि कदर्थनानि द्विरुक्तानि अलमलमितिवन्निस्पृहत्वातिशयद्योतनार्थेति बोध्यम् । अत्यन्तकुत्सितप्रार्थनान्येवेत्यर्थः । अनश्वरभवत्पादसेवनमपहाय नश्वराणामन्येषां केषां वा प्रार्थना कुत्सिता न भवतीति भावः ॥ **अपि चेति** ॥ देवाः इन्द्रादयः के इति प्रश्नः मन्मातृभगिनीपुत्रा न भवन्तीति भावः । दनुजाः क इति प्रश्नः मत्सपत्नीमातृपुत्रा न भवन्तीति भावः । इदं जगत् किं अहं शिरसि जगद्धृत्वा न गच्छामि खल्विति भावः । अन्ततोऽवसाने अहं कः अहं वा किंयत्कालं स्थास्यामि मम वा किं शाश्वतमिति भावः । इमं मदीयं विमोहमज्ञानं परिहृत्य निवार्य

इति कटाक्षपातेन कमलायाः परिग्रहेण च भगवतः प्रतिबुध्य तत्त्वमुदासीने पद्मसम्भवे, प्रपञ्चपाञ्चालिकानटनसूत्रधारः परमपुरुषः सर्वपथीनया महामायया तमाच्छादयन्, कर्तव्यमस्योपदिदेश 'सत्यमेव भवानाह कदर्थनान्येव कदर्थनानीति, अलमेव ह्यग्रतास्स्थितिरस्माकं, अवहितो गृहाणेदं आदिश च सर्वानमरान्।

सन्धानं कुरुतासुरैः प्रथमतो मन्थानमुर्वीधरं
कृत्वा मन्दरमर्णवे क्षिपत ते यूयं समेतास्ततः।
बद्ध्वा वासुकिनाथ मन्थत ततस्सम्पत्स्यते या सुधा
तामास्वाद्य गमिष्यथाप्यमरतां यूयं न वश्शात्रवः ॥ ४६ ॥

---

पालय संरक्षण कुरु दासोऽस्मि दासोऽस्मि अत्यन्तं भृत्योऽस्मीति तात्पर्यार्थः। द्विरुक्तिः भक्त्यतिशयद्योतनार्था ॥ इतीति ॥ इतीत्थं कमलाया लक्ष्म्याः कटाक्षाणां पातः प्रसरणं तेन भगवतो नारायणस्य परिग्रहेण केवलं भक्त इति स्वीकारेण चेत्यर्थः। तत्त्वं वास्तवार्थं प्रतिबुध्य ज्ञात्वा पद्मसम्भवे ब्रह्मणि उदासीने तटस्थे सतीत्यर्थः। प्रपञ्च एव पाञ्चालिका दारुप्रतिमा। 'पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता' इत्यमरः। तस्याः नटनं नर्तनं तस्मिन् सूत्रधारः सूत्रधारसदृशः यथा भरताचार्यः सूत्रधारः प्रतिमां नर्तयति तथा वासुदेवः सूत्रधारस्थानीयस्सन् जगत्पाञ्चालिकां नर्तयति सर्वस्यापि तदायत्तत्वादिति भावः। परमपुरुषः उत्तमपुरुषो नारायणः सर्वपथीनया सर्वमार्गव्यापिन्या महामायया तमाच्छादयन् आवृण्वन् अस्य ब्रह्मणः कर्तव्यं कार्यांशमुपदिदेश उपदेशं कृतवान्। उपदेशप्रकारमाह ॥ भवान् कदर्थनान्येव कदर्थनानीति ॥ सत्यमेवाह अवदः भवद्यागान्न मध्यम। अस्माकमग्रतःस्थितिः अलं इदं अवहितस्सन् गृहाण किञ्च सर्वानखिलानमरान् देवानादिशाज्ञापय इत्युपदिष्टवानित्यर्थः ॥ सन्धानमिति ॥ प्रथमतः प्रथमं असुरैस्सह सन्धानं सन्धिं कुरुत सन्धिं कृत्वैव सर्वनिर्वाहं करिष्यथेत्यर्थः। ततोऽनन्तरं समेताः मिळिताः यूयं देवाः ते असुराः। अथवा यूयं समेतास्सन्त इति योजना। मन्दरं तन्नामकमुर्वीधरं पर्वतम्। मन्थानं मन्थनदण्डम्। 'वैशाखमन्थमन्थानमन्थानो मन्थदण्डकः' इत्यमरः। कृत्वा अर्णवे क्षिपत स्थापनं कुरुत। अथानन्तरं तमद्रिं वासुकिना बद्ध्वा वासुकिसर्पेण वेष्टनं कृत्वा मन्थत मन्थनं कुरुत। ततः मन्थनानन्तरं या सुधा यदमृतं सम्पत्स्यते उत्पन्ना भविष्यतिताममृतमास्वाद्य पीत्वा यूयं देवा अमरतां अमरत्वं गमिष्यथ प्रा-

परन्तु भवितात्र दुष्परिहारः प्रत्यूहः, परिहरिष्यते च प्रसादादेव देवदेवस्य तदद्यप्रभृति विशिष्यावलम्बध्वमम्बिकारमणं शरणमिति।

जानाम्यहमुमाकान्तं जानासि त्वं च मद्गिरा।
जानन्ति किमिमे मूढास्तत्सम्यगनुशिष्यताम्॥ ४७॥'

इति परमुपदेशं देशिको देवतानां
निरवधिकरुणाब्धिर्निर्जरेभ्यो वितीर्य।
स्वयमपि हृदि गाढं चिन्तयन्निन्दुचूडं
मिषति कमलपीठे पद्मनाभस्तिरोऽभूत्॥ ४८॥

अथ यथोपदेशमिन्दिरापतेरादिश्यादेष्टव्यं, अन्तर्हिते पितामहे, पूर्णमनोरथा दिवौकसः पुरहराराधनकौतूहलेन

---

मा भविष्यथ। वः युष्माकं शत्रवः अरयः असुराः अमरताममरत्वं न गमिष्यन्तीति पुरुषव्यत्यासेनान्वयो बोध्यः। वक्तव्यमुक्त्वा फलप्राप्तिप्रतिबन्धकनिवृत्त्युपायमुपादशतीत्याह॥ **परं त्विति**॥ अत्रास्मिन् कार्ये दुःखेन परिहर्तुमशक्यः दुष्परिहारः दुर्निवार इत्यर्थः। प्रत्यूहः विघ्नः। 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः। भविता भविष्यति स विघ्नो देवदेवस्य महादेवस्य प्रसादादनुग्रहात्परिहरिष्यते निवारयिष्यत एव। तत्तस्मादद्यप्रभृत्येतत्क्षणमारभ्य अम्बिकारमणं अम्बिकायाः पार्वत्याः पतिम्। 'मृडानी चण्डिकाम्बिका' इत्यमरः। शरणं रक्षकं विशिष्य अधिकमित्यर्थः। अवलम्बध्वं इतीत्थमुपादिदेशेत्यनेनान्वयः॥ **जानामीति**॥ अहं उमायाः पर्वतवर्धन्याः कान्तं पतिं शिवं जानामि तत्त्वतो वेद्मीत्यर्थः। मद्गिरा मम वाचा त्वं च जानासि वेत्सि मदनुग्रहमाहिम्नेति भावः। मूढाः अज्ञाः निर्भाग्या इति वा। 'मूढाल्पापटुनिर्भाग्याः' इत्यमरः। इमे वासवादयः जानन्ति किं न विदन्तीत्यर्थः। तत्तस्मात्सम्यगनुशिष्यतां शिक्ष्यताम् भावे लोट्॥ **इतीति**॥ निष्क्रान्ता अवधेर्निरवधिः निस्सीमेत्यर्थः। तथाभूता या करुणा कृपा तस्यास्समुद्रः देवतानां ब्रह्मादीनां देशिकः गुरुः पद्मनाभः वासुदेवः इति एवंप्रकारं परं उपदेशं निदर्शं निर्जरेभ्यो देवेभ्यो वितीर्य दत्वा स्वयं पद्मनाभः हृदि मनसि इन्दुचूडं चन्द्रशेखरं गाढं नितान्तं चिन्तयन् ध्यायन् सन् कमलपीठे पद्मसम्भवे ब्रह्मणि मिषति पश्यति सति तिरोऽभूत् अन्तरधात्॥ **अथेति**॥ अथ हर्यन्तर्धानानन्तरं पितामहे ब्रह्मणि इन्दिरापतेर्लक्ष्म्याः पतेर्नारायणस्य सम्बन्धि आदेष्टव्यं वक्तव्यं आदेशं निदेशं यथोपदेशमुपदेशमनतिक्रम्येत्यर्थः। आदिश्य अभिधाय नियोगं कृत्वेति भावः। अन्तर्हिते अन्तर्धानं गते स-

पुनरासेदुरुपत्यकां परमानन्दमन्थरा मन्दराद्रेः ।

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिक-
शतप्रबन्धनिर्वाहकश्रीमन्महाव्रतयाजिश्रीमदप्पयदीक्षित-
सोदर्यश्रीमदाच्चान्दीक्षितपौत्रेण नारायणदीक्षितात्मजेन
श्रीभूमिदेवीगर्भसंभवेन श्रीनीलकण्ठदीक्षितेन
विरचिते श्रीनीलकण्ठविजये चम्पुकाव्ये
द्वितीय आश्वासः ॥

---

त पूर्णः सफलः मनोरथः वाञ्छा येषां ते तथाभूता अत एवानन्दमन्थराः आनन्दतुन्दिलाः दिवौकसो देवाः पुरहरः त्रिपुरान्तकः तस्याराधनं तस्मिन् कुतूहलेन कौतुकेन पुनः मन्दराद्रेरुपत्यकामासन्नभूमिमासेदुः आययुः ॥

इति श्रीमद्भारद्वाजवेल्लालमहादेवसूरिविरचिते नीलकण्ठविजयव्याख्याने
विबुधानन्दाख्याने द्वितीयाश्वासविवृतिः ॥

## अथ तृतीयाश्वासः ॥

उपासीना नानाविधिभिरुपहारैश्च विविधैः
शरण्यं लोकानां शशधरकलोत्तंसममराः ।
मृषा सन्धित्सन्तः प्रकृतिकुटिलैर्दानवगणैः
विरिञ्चस्यादेशादवृणुत गुरुं दूत्यविषये ॥ १ ॥

'परायणं नः परमं भवान्यतो
गुरुः पुरोधास्सचिवश्च दैवतम् ।
अतो वयं तावदनन्यसाधना
वृणीमहे त्वामवमेऽपि कर्मणि ॥ २ ॥'

---

अथ भगवदाज्ञानिर्वर्तनाय सन्धिालप्सुर्वासवः दूत्यं कर्तुं गुरुं प्रार्थयामासेत्याह श्लोकद्वयेन ॥ **उपासीना इति** ॥ नानाविधाः ये विधयः मन्त्रानुष्ठानानि तैर्विधैः अनेकप्रकारैः उपचारैः ध्यानावाहनाद्युपचारैश्च लोकानां भुवनानां 'लोकस्तु भुवने जन' इत्यमरः । शरणे साधुः शरण्यः संरक्षणधुरीण इत्यर्थः । तं शशधरस्य चन्द्रस्य या कला सैव उत्तंसोऽवतंसः यस्य स तथाभूतं शिवं उपासीनाः भजमानाः अमराः । प्रकृतिः स्वभावः । 'प्रकृतिः पञ्चभूतेषु स्वभावे सचिवादिषु' इति नानार्थमाला । तया कुटिलाः वक्राः तैः दानवानां गणैः मृषा वितथं सन्धित्सन्तः सन्धातुमिच्छन्तस्सन्तः लोके ययोस्सन्धिस्तयोरुभयोरपि प्रयोजनं दृष्टं प्रकृते सन्धिना देवानां एकेषां प्रयोजने सत्यपि इतरेषां दानवानां तदभावात्सन्धेः पाक्षिकवैतथ्यमिति भावः । विरिञ्चस्य ब्रह्मणः । 'शतानन्दश्शतधृतिर्विरिञ्चोऽजो विरिञ्चन' इत्यमरः । आदेशान्नियोगाद्गुरुं वाचस्पतिं दूतस्य कर्म दूत्यं । 'स्यात्सन्देशहरो दूतो दूत्यं तद्भावकर्मणोः' इत्यमरः । तस्य विषये करणाय अवृणुत वृतवन्तः । वृञ् वरणे इत्यस्मात् कर्तरि लङ् ॥ **परायणमिति** ॥ पुरोधाः पुरोहितः । 'पुरोधास्तु पुरोहित' इत्यमरः । भवान्यतः कारणात्प्रथमं आदौ मुख्यमिति वा । 'सूक्ष्ममध्यात्ममप्यादौ प्रधाने प्रथमं त्रिपु' इत्यमरः । नः अस्माकं परमुत्कृष्टं अयनं निलयः गम्यस्थानमिति यावत् । अथवा परमुत्कृष्टं अयनं मार्गः सन्मार्ग इति यावत् । भवद्द्वारैवास्माकं सर्वकार्यसिद्धिरिति भावः । 'अयनं निलये मार्गे दक्षिणोदग्गतौ रवेः' इति नानार्थरत्नमाला । यद्वा परायणं सर्वत्र सङ्गरहित इत्यर्थः । भवानित्यस्य विशेषणम् । 'साकल्यासङ्गवचने पारायणपरायणे' इत्यमरः । मदीयसकलस्वमित्यथा वा बोध्यः गुरुः उपदेष्टा पिता वा । 'निषेकादीनि कर्माणि यः करोति

इति प्रार्थितो देवैरिदमुवाच वाचस्पतिः 'नैतावदभिधातव्यं, नहि किञ्चिदवमं नाम कर्मास्ति राजोपजीविनाम्।

तत्तस्य कीर्तिदं कर्म तदलभ्यं तदीप्सितम्।
राजानः पुरुषं यत्र राजकीयं नियुञ्जते ॥ ३ ॥

परन्तु किञ्चिदत्र विवेक्तव्यम्। तथाहि।

अनालोच्य निजां शक्तिमदृष्ट्वा कार्यगाधताम्।
औत्सुक्यादवगाहन्ते मन्दा मज्जन्ति चातलम् ॥ ४ ॥

---

यथाविधि। सम्भावयति चानेन स विप्रो गुरुरुच्यते ॥' इति हेमचन्द्रः। 'जनिता चोपनेता च यस्तु विद्यां प्रयच्छति। अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥' इति शास्त्रात्तस्य तत्पितृत्वमिति भावः। सचिवो मन्त्री। 'मन्त्री धीसचिवोऽमात्य' इत्यमरः। दैवतं उपास्यदेवता च श्रेयस्करजालमेव त्वमस्माकमिति भावः। अतः कारणाद्वयं तावन्न विद्यते अन्यद्भवदतिरिक्तं साधनं कार्यसाधकं येषां ते तथाभूतास्सन्तः त्वदतिरिक्तसहायरहिता इति यावत्। त्वां भवन्तमेव अवमं अधमं। 'रेफयाप्यावमाधमा' इत्यमरः। तस्मिन् कर्मण्यपि दूतरूप इति भावः। वृणीमहे वृतवन्तः स्म ॥ **इतीति** ॥ इति इत्थं देवैः प्रार्थितः याचितः वाचस्पतिः गुरुः इदं वक्ष्यमाणं वचनं उवाच तत्किमिति चेदत आह ॥ **नेति** ॥ एतावदिदन्नाभिधातव्यं न वक्तव्यमित्यर्थः। कुत इति चेदत आह ॥ **न हीति** ॥ हि यस्माद्राजानमुपजीवितुं शीलं येषां ते राजोपजीविनः राजायत्तजीविका इत्यर्थः। तेषां अवमं नाम अधममिति प्रसिद्धं किञ्चित्कर्म नास्ति ततो नाभिधातव्यमिति पूर्वेणान्वयः। राजाज्ञया तेषां उत्तममध्यमाधमनिखिलकर्मकर्तृत्वस्यैव धर्मत्वादिति भावः। राजाभिमतकर्मणः कर्तव्यत्वे उपपत्त्यन्तरमाह ॥ **तदिति** ॥ राजानः भूपाः यत्र यस्मिन् कर्मणि राज्ञः अयं राजकीयः तत्सम्बन्धीति यावत्। तथाभूतं पुरुषं सेवकजनमिति समुदितार्थः। नियुञ्जते प्रवर्तयन्ति तत्कर्म तद्व्यापारः तस्य सेवकजनस्य कीर्तिदं यशःप्रदं तत्कर्म अलभ्यं लभ्यं न भवतीत्यर्थः। अथवा अल्पं लभ्यमिति अनुदरा कन्येतिवन्नञ अल्पार्थकत्वम्। तथाचोक्तं 'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाष्षट् प्रकीर्तिताः ॥' इति। कतीनामेव तथाविधानां लाभादिति भावः ॥ **परमिति** ॥ परन्तु तथापीत्यर्थः। अत्र सन्धिफलकदूत्यविषये किञ्चित् अल्पं विवेक्तव्यं पर्यालोचनीयम्। पर्यालोचनं कुत इति चेदत आह ॥ **अनालोच्येति** ॥ मन्दाः मूढाः। 'मन्दाल्पापटुनिर्भाग्या मन्दाः स्युर्द्वौ तु शारदौ' इत्यमरः। निजां स्वकीयां शक्तिं सामर्थ्यं। 'कासूसामर्थ्ययोश्शक्तिः' इत्यमरः। अनालोच्यापर्यालोच्य कार्यस्य गाधतां तलस्पर्शित्वं अदृष्ट्वा ए-

**सन्धिर्नाम ऋजूपायस्साधुष्वेवायमायतते न पृथग्जनेषु। दूरे पुनर्दुरहङ्कारदूषितेषु दानवेषु। किञ्च। दूतवाङ्मुखकौशलसा-**

---

वंविधं कार्यं मद्विधेन येनकेनापि कृतं मयापीदं कर्तुं शक्यमशक्यं वेत्यननुसन्धायेति भावः। कार्यसाधुतामिति पाठे इदं कार्यं साधु समीचीनं स्वामिनस्सुकरं मम वेत्यननुसन्धायेति भावः। कार्यगौरवमिति पाठे इदं कार्यं गुरु महत् स्वामिनः मम वा यशःप्रदमित्यननुसन्धायेति भावः। उत्सुकः इष्टार्थोद्युक्तः। 'इष्टार्थोद्युक्त उत्सुकः' इत्यमरः। तस्य भावः औत्सुक्यं तस्मादभिनिवेशादिति यावत्। अवगाहन्ते कार्ये इति शेषः। प्रविशन्तीत्यर्थः। तलमधोदेशः तदभिव्याप्यातलमित्याङ्मर्यादाभिविध्योरिति समासः। पातालपर्यन्तमिति यावत्। मज्जन्ति मज्जनं कुर्वन्ति च पुनरुत्थिता न भवन्तीति भावः। अथ पर्यालोचने सम्यक्कृते आवयोस्सन्धिरेव न भविष्यतीत्याह॥ **सन्धिरिति**॥ सन्धिर्नाम सन्धानमिति प्रसिद्धः अयं भवदुक्तः ऋजुरवक्र उपायः समाधानं उभयोः प्राप्तवैरसमाधानमिति भावः। 'उपायः स्यादुपागतौ। समाधावथ संख्यायां' इति नानार्थमाला। अथवा उपायः कर्म कार्यमिति वार्थः। 'उपायः कर्म चेष्टा च' इत्यमरः। साधुष्वेव सज्जनेष्वेव आयतते प्रयतते प्रवर्तत इति यावत्। 'सभ्यसज्जनसाधवः' इत्यमरः। सतामेव सन्धेयत्वादिति भावः। अत एव कामन्दकोऽपि सज्जनानेव सन्धेयानाह। 'सत्यार्यधार्मिकानार्यभ्रातृसङ्घातवान् बली। अनेकविजयी चैव सन्धेयास्सप्त पार्थिवाः॥' इत्युक्त्वा सत्यादीनाह 'सत्योनुपालयन् सत्यं सन्धितो नैति विक्रियां। प्राणात्ययेऽप्यसन्त्यक्तमर्यादो नैत्यधर्मताम्॥' इत्यादिना। पृथग्जनेषु नीचेषु। 'विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः' इत्यमरः। नायतते न प्रवर्तते असतामसन्धेयत्वादिति भावः। असतोऽसन्धेयानाह कामन्दकः। 'बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः। भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा॥ विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान्। अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः॥ दैवोपहतकश्चैव दैवचिन्तक एव च। दुर्भिक्षव्यसनी चैव बलव्यसनसङ्कुलः॥ अदेशस्थो बहुरिपुर्युक्तः कालेन यश्च न। सत्यधर्मव्यपेतश्च विंशतिः पुरुषास्त्विमे॥ एभिस्सन्धिं न कुर्वीत विगृह्णीयात्तु केवलम्। एते विगृह्यमाणास्तु ध्रुवं यान्त्यचिराद्वशम्॥' इति। दुरहङ्कारः दुरहङ्कारभावः तेन दूषितेषु दुष्टेषु दानवेष्वसुरेषु पुनः दूरे तद्विषये सन्धेयत्वाभावात्तेषां सन्धिर्न भवतीति भावः। सन्धिर्न भविष्यतीत्यत्रैवोपपत्त्यन्तरमाह॥ **किञ्चेति**॥ अयं सन्धिलक्षणः अर्थः प्रयोजनं दूतः सन्देशहरः। 'स्यात्सन्देशहरो दूत' इत्यमरः। तस्य वाग्वचनमेव मुखं तस्य कौशलेन चातुर्येण साधनीयः सम्पादनीयः। 'सन्धित्सुरथ मेधावी प्रापयेद्दूतमन्तिकम्। तन्मुखेनैव निखिलं कार्यमासादयेत्सुधीः॥' इति शास्त्रादिति भावः। दूतानां दर्शनमवलोक-

धनीयोऽयमर्थः। कथं नाम दूतदर्शनमप्यसहमानेषु सङ्घटते।
श्रूयत एव हि वैश्रवणेन प्रहितो दूतस्सद्य एव समापितस्सदसि लङ्कापतेः। अपिच। प्रवृत्तास्समरकर्मणि भग्नोद्यमास्सर्वतोऽपि सन्धित्सन्ते दूरदर्शिनो लब्धुं कथञ्चिदपि लिप्सितं नतु लब्धमपि नाशयितुम्। पश्यत।

स्थानाच्च्यावयितुं क्षणात्पुनरपि स्थानेऽभिषेक्तुं च वा
शक्ताः केळिकथान्तरेष्वपि भवन्त्यर्धोद्गता यद्गिरः।
तेऽमी सर्वसुनिर्वृता दनुभुवस्सन्धाय किं धावता
भिक्षार्थं परितोऽधुना मघवता सम्पादयन्त्वीप्सितम्॥

---

मपि असहमानेष्वसम्मन्यमानेषु कथं घटते सज्जते न घटत एवेति भावः। अथ दानवा दूतदर्शनं न सहन्त इति कथं ज्ञातमिति चेदत्राह॥ श्रूयत इति॥ वैश्रवणेन कुबेरेण। 'किन्नरेशो वैश्रवणः' इत्यमरः। प्रहितः प्रेषितः दूतः सन्देशहरः लङ्कापतेः रावणस्य सदसि सभायां सद्यः तत्क्षणं समापितः विनाशितः इतीति शेषः। श्रूयतेहि श्रवणविषयीक्रियते। पुरा खलु रावणस्त्रिलोकविजयावसरे सर्वं विजित्य उदीचीं दिशं गत्वा कुबेरनिधीनपहर्तुकामः प्रस्थे तदानीं तदीयपुष्पकमात्रलाभेन पराबृत्य स्वपुरीमाप। तदा कुबेरः तेन सन्धित्सुः कञ्चिद्दूतमत्रसु नाम किन्नरं प्राहिणोत् तदागतं श्रुत्वा तदेव घातितवानिस्यैतिह्यमस्ति कथात्रानुसन्धेया। ग्रन्थविस्तरभयात्तत्सर्वमिह न लिख्यते। अस्माभिस्सह ते सन्धित्साभिमन्यन्त इत्यत्र युक्तिमाह॥ अपि चेति॥ समरकर्मणि युद्धे प्रवृत्ताः व्यापृताः सर्वतः सर्वप्रकारैरित्यर्थः। भग्नः शिथिलः उद्यमः उद्योगः येषां न तथाविधा दूरदर्शिनः विचक्षणाः। 'दूरदर्शी दीर्घदर्शी' इत्यमरः। अभीप्सितं इष्टमर्थं कथञ्चित्कृच्छ्रेणापि लब्धुं सम्पादयितुं सन्धित्सन्ते सन्धातुमिच्छन्ति लब्धं प्राप्तं नाशयितुं नापि सन्धित्सन्त इत्यन्वयः। 'विगृह्य सुचिरं कालमलब्ध्वा श्रियमात्मवान्। विनिर्गत्य तदा पश्चाल्लब्धुं राज्यं क्रमेण तु॥ सन्धिं कुर्वीत निपुणः न तु लब्धविनिह्नुया' इति वचनादिति भावः। अस्माभिस्सह तेषां सन्धित्सानुत्पादे हेतुमवगमयन्नाह॥ पश्यतेति॥ केळिकथान्तरेषु क्रीडाप्रस्तावावसरेष्वपि अर्धोद्गताः असम्पूर्णविनिर्गताः येषां दानवानां गिरः वाचः स्थानाद्बहुकालादारभ्य प्राप्तसिंहासनाच्चालयितुं स्खलयितुं पातयितुमिति वार्थः। पुनरपि स्थाने तत्रैवेत्यर्थः। अभिषेक्तुं पट्टाभिषेकं कर्तुं च वा शक्तास्समर्था भवन्ति गच्छेत्युक्ते गन्तव्यं आगच्छेत्युक्ते आगन्तव्यं तिष्ठेत्युक्ते स्थातव्यं उत्तिष्ठेत्युक्ते उत्थातव्यं एवं सिंहासनाधिपतिष्वपि तेषां वाग्जीवतीति भावः। सर्वैः प्रकारैः सुनिर्वृताः सुखिताः ते अमी दनुभुवः दानवाः भिक्षार्थं

अपि च ।

गौरश्वः करिणः स्त्रियो मणिगणाश्शस्त्राणि वस्त्राणि वा
यानि प्राभृतयेम तान्यपहृतान्याक्रम्य तैरेव नः ।
तद्रिक्तेन करेण रिक्ततरया वाचापि चाहं कथं
शक्तः स्यां दनुजेश्वरान्वशयितुं सन्द्रष्टुमप्यन्ततः ॥ ६ ॥'

इति युक्तियुक्तमुपपाद्य विरमति देवगुरौ, विहस्तेषु च समस्तेषु दैवतेषु कृतमुखस्स्वयं शतमखः किञ्चिदिदमाचचक्षे । 'भगवन्नेवमेवैतद्यदभिहितं भवता । किंतु ।

---

तण्डुललाभार्थम् । भिक्ष लाभ इति धातोः पचाद्याच टाप् । परितः सर्वतः धावता अटता । धाव् गतावित्यस्माल्लटश्शत्रादेशः मघवता देवेन्द्रेण सन्धाय सन्धिं कृत्वा किमीप्सितं कं पुरुषार्थं सम्पादयन्तु प्राप्नुयुः । सम्भावनायां लोट् । सङ्घटयता दूतेनावश्येनतव्यश्रेष्ठवस्त्वभावात्सर्वशून्यस्सन् तत्र गत्वा तान्वशयितुं न शक्नोमीत्याह ॥ गाव इति ॥ यद्यस्मात्कारणाद्गावः धेनवः अश्वाः करिणः गजाः स्त्रियः सुन्दर्यः मणीनां रत्नानां गणाः समूहाः शस्त्राणि वस्त्राणि वा एतान्येव यानि वस्तूनि प्राभृतानि कुर्वन्ति प्राभृतयन्तीति तत्करोतीति णिचि लिङि रूपम् । एवञ्च प्राभृतयेम उपायनानि करवाम । 'घट्टादिदेयं शुल्कोऽस्त्री प्राभृतं तु प्रदेशनं' इत्यमरः । नोऽस्माकं तानि वस्तूनि आक्रम्य पराक्रम्य तैः दानवैरपहृतान्येव । तत्तस्मात् अथवा तद्रिक्तेनेति समस्तं पदं तैः धेन्वादिवस्तुभिः रिक्तेन शून्येन करेण रिक्ततरया अतिवन्ध्यया वाचा दनुजेश्वरान् दानवेन्द्रान् वशयितुं अधीनान् कर्तुमहं कथं शक्तः समर्थस्स्यां भवेयम् । अन्ततः पर्यवसाने । सार्वविभक्तिकस्तसिः । सन्द्रष्टुमपि तद्दर्शनं कर्तुं वा कथं शक्तः समर्थः स्यामित्यनेनान्वयः । अत्र कामन्दकः । 'बलवद्विगृहीतस्सन् नृपोऽनन्यप्रतिक्रियः । आपन्नस्सन्धिमन्विच्छेत्कुर्वाणः कालयापनम् ॥' इत्युक्त्वा 'कपाल उपसंहारस्सन्तानस्सङ्गतस्तथा । उपन्यासः प्रतीकारः संयोगः पुरुषान्तरः ॥ अदृष्टनर आदिष्टः आत्मामिष उपग्रहः । परिक्रयस्तथोच्छिन्नः तथा च परदूषणः ॥ स्कन्धोपायनसन्धिश्च षोडशः परिकीर्तितः ।' तेषामेव विवरणं 'कपालद्वयवत्सान्धिः कपालः परिकीर्तितः । संप्रदानाद्भवति य उपहारः स उच्यते ॥ सन्तानसन्धिर्विज्ञेयो वार्याद्यशनपूर्वकः । सद्भिस्सङ्गतसन्धिस्तु मैत्रीपूर्व उदाहृतः ॥ भव्यामेकार्थसंसिद्धिं समुद्दिश्य क्रियेत यः । स उपन्यासकुशलैरुपन्यास उदाहृतः ॥ पुनर्यः क्रियते सन्धिः प्रतीकारस्स उच्यते । एकार्थं सम्यगुद्दिश्य यात्रां यत्र हि गच्छतः ॥ स संहितप्रयाणस्तु संयुक्तस्सन्धिरुच्यते । आवयोर्योगमुख्याभ्यामेषोऽर्थस्साध्यतामिति ॥ यस्मिन् पणश्च क्रियते स सन्धिः पुरुषान्तरः ।

निस्सङ्ख्यस्फुरदुत्तरोत्तरचमत्कारासु धारासु ते
वाचामक्षरमक्षरं त्रिजगतीवाग्गर्वसर्वङ्कषम् ।
श्रोतुं लालयितुं पुनः प्रतिसमाधातुं च वा किञ्चिद-
प्यर्वाञ्चः क इमे वयं यदि परं देवस्स वार्चा निधिः ॥

विजीगीषोः पुरः कश्चिदृश्यते नैव पूरुषः ॥ सोऽदृष्टनर इत्युक्तस्सद्भिर्नीतिविशारदैः । यत्र भूम्येकदेशेन पणेन रिपुरूर्जितः ॥ सन्धीयते सन्धिविद्भिरादिष्टस्सन्धिरुच्यते । आमिषीक्रियते चात्मा तदामिष उदाहृतः ॥ क्रियते प्राणरक्षार्थं सर्वदानमुपग्रहः । कोशांशेनावकुप्येन सर्वकोशेन वा पुनः ॥ शेषप्रकृतिरक्षार्थं परिक्रय उदाहृतः । भुवां सारवतीनां च दानमुच्छिन्न उच्यते । एतत्सर्वं त्वया उपद्रवेण गृहीतमेवेति परदूक्षणसन्धिः । किञ्च । परिच्छिन्नं फलं यत्र स्कन्धं स्कन्धे विलीयते । स्कन्धोपनयनं प्राहुस्सन्धिं सन्धिविदो जनाः ॥' इत्याह कामन्दकः । तथाच सन्धीनां निमित्तस्य कस्याप्यभावाद्दानवैस्सहास्मकं सन्धिर्न घटत इति भावः । देवगुरौ सुराचार्ये इतीत्थं युक्तयस्साधकबाधकप्रमाणोपन्यासाः तैर्युक्तं सहितं यथा तथा उपपाद्य निरूपणं कृत्वा विरमति तूष्णींभूते सति । व्याङ्परिभ्यो रम इति विपूर्वस्य रमतेः परस्मैपादित्वाल्लटश्शत्रादेशः । समस्तेषु निखिलेषु दैवतेषु देवेषु । 'बृन्दारका दैवतानि' इत्यमरः । विहस्तेषु व्याकुलेषु सत्सु । 'विहस्तव्याकुलौ समौ' इत्यमरः । कृतमुखः कुशलः । 'वैज्ञानिकः कृतमुखः कृती कुशल' इत्यमरः । शतमखः इन्द्रः किञ्चित् स्वल्पं इदं वचनमाचचक्षे जगाद । तदेवाह । हे भगवन् भवता यत् अस्मत्स्वरूपमुद्दिश्य अभिहितं कथितं तदस्मत्स्वरूपं एवं एतद्रीतिकं मत्स्वरूपानुसारेणैव भवानुक्तवानिति भावः । अथवा भवता त्वया यद्वचनमभिहितं निगदितं तद्वचनं एवं विद्यमानार्थकं विद्यमानमेवार्थं भवानाहेति भावः । प्रकृतकार्ये प्रवर्तयितुं बृहस्पतिं स्तौति ॥ **निस्सङ्ख्येति** ॥ निष्क्रान्तास्सङ्ख्याया निस्सङ्ख्याः । निरादयः क्रान्ताद्यर्थे पञ्चम्येति समासः । पर्याप्तसङ्ख्यारहिता इत्यर्थः । एवंविधा उत्तरोत्तरमुपर्युपरि चमत्काराः विच्छित्तिविशेषाः यासां ता इति नीलोज्ज्वलवपुरितिवत्त्रिपदबहुव्रीहिः । तथाविधासु ते तव वाचां धारासु परम्परासु तिस्रश्च ता जगत्यश्चेति समानाधिकरणसमासः । 'जगती भुवने क्ष्मायां' इति विश्वः । त्रिभुवनानीत्यर्थः । तासां लक्षणया तत्स्थजनानां यो वाग्गर्वः वाक्प्रयुक्तोऽहङ्कारः वाग्भिर्वयमेव कुशला इत्यभिप्रायः । अथवा वाचामहङ्कारः वयमेव रमणीया इत्यभिमान इति भावः । तस्य सर्वं कषतीति सर्वङ्कषम् । सर्वकूलाभ्रकरीषेषु कष इति मुम् । वाग्गर्वसर्वस्वनाशकमिति भावः । अक्षरमक्षरं वृक्षं वृक्षं सिञ्चतीतिवद्वीप्सायां द्विर्भावः । श्रोतुं लालयितुं बहुमन्तुं कि-

परं त्विदमेकमनुस्मारयामि आदिष्टं यदध्यक्षमेव नस्समस्तानां सन्धानं कुरुतासुरैरिति शार्ङ्गधन्वना परमेष्ठिने, यदपि च तेन तुभ्यम्।

शिष्टं यदत्र दुष्टं वा न विवेक्तुं क्षमामहे।
स जानीते स जानीते त्वं जानीषे तदन्ततः ॥ ७-८ ॥'

इति।

अनितरशरणत्वमात्मनस्तत् दृढमुपपादयताथ देवभर्त्रा।
प्रतिहतवचनो गुरुस्सुराणां प्रकटयितुं धियमात्मनः प्रतस्थे ॥ ९ ॥

गच्छन्नेव च स पथि सर्वं करणीयमवधारयामास। अपिच।

---

चित् प्रतिसमाधातुं समाधानं कर्तुं अर्वाञ्चः जघन्या इमे वयं के कथम्भूता इत्यर्थः। देवो यदि स्वामी त्वित्यर्थः। भवानित्यभिप्रायः। स प्रसिद्धः परं वाचां निधिः निदानं वाचां खनिरिति भावः ॥ **परमिति** ॥ परन्तु तथापि इदं भगवदादेशरूपम्। एकं केवलं अनुस्मारयामि न त्वादिशामीति भावः। गतिबुद्धीत्यादिना अणिकर्तुः कर्मत्वम्। स्मृ आध्यान इति धातोर्णिचि रूपम् ॥ **आदिष्टमिति** ॥ समस्तानां सर्वेषां नोऽस्माकं अध्यक्षं प्रत्यक्षमेव असुरैस्सन्धानं सन्धिं कुरुतेति शार्ङ्गधन्वना वासुदेवेन परमेष्ठिने ब्रह्मणे यदादिष्टं आज्ञप्तं तेन परमेष्ठिना तुभ्यं भवते च तत्केवलमनुस्मारयामीति पूर्वेणान्वयः। फलितमाह ॥ **शिष्टमिति** ॥ अत्रास्यां वेळायां यच्छिष्टं यदनुष्ठेयं यद्दुष्टं अननुष्ठेयं तदनुष्ठेयाननुष्ठेयद्वयं विवेक्तुं विभागं कर्तुं। अथवा यच्छिष्टं यत्समीचीनं यद्दुष्टमसमीचीनं तत्समीचीनासमीचीनोभयं विवेक्तुं सम्यग्वेत्तुमित्यर्थः। दुष्टाशिष्टशब्दौ भावे क्तान्ताविति बोध्यम्। न क्षमामहे समर्था न भवाम इत्यर्थः। तत् शिष्टदुष्टद्वयं कर्म स वासुदेवः जानाति वेत्ति सः ब्रह्मा जानीते अन्ततः अन्त त्वं भवान् जानीषे वेत्सि वयं तु केवलमाज्ञाहारकाः किमपि न विद्म इति भावः। भगवान् गुरुस्तु विदितभाविकार्यतया तूष्णीम्भूतस्सन् ययावित्याह ॥ **अनितरेति** ॥ अथ आत्मनः स्वस्य अनितरशरणत्वं रक्षकान्तरराहित्यं दृढमुपपादयता निरूपयता देवानां भर्त्रा स्वामिना इन्द्रेण प्रतिहतं स्तम्भितं वचनं यस्य स तथाभूतः सुराणां गुरुः आत्मनः स्वस्य धियं बुद्धिं प्रकटयितुं प्रकाशीकर्तुं प्रतस्थे प्रययौ। समवप्रविभ्यः स्थ इति तिष्ठतेरात्मनेपदं लिट् ॥ **स इति** ॥ स गुरुः पथि मार्गे गच्छन् गमनं कुर्वन्नेव करणीयं कर्तव्यं सर्वं निखिलं अवधारयामास अनुसन्दधे निश्चिकायेति वार्थः। अथ पूर्वं इन्द्रं प्रति तथा वदन्नपि गुरुः पश्चादुत्साहवानेव शुक्राचार्यं प्राप्स्यामीत्याशयेनाह ॥ **अयमिति** ॥ बुद्धेः नीतिशास्त्रप्रणयनोचितायाः धियः अयं कालः विनियोगकाल इत्यर्थः। चाटुवचसां चाटूक्तीनां अयमवसरः

अयं कालो बुद्धेरयमवसरश्चाटुवचसां
इयं युक्ता वेला दिशि दिशि यशस्सङ्घटयितुम्।
असावत्यर्घो नस्सुकृतमुपचेतुं सुमह-
दित्यवस्यन् प्राप प्रागसुरगुरुमाखण्डलगुरुः' ॥ १० ॥

ततश्च तमतर्कितोपनतमभिगम्य सह शिष्यैरभ्यर्च्य विधिवद-घ्योदिभिस्सपर्याभिरासयन्महति मणिविष्टरे, भार्गवः स्वय-मासीनस्तदनुज्ञया सविनयमिदमाचचक्षे । 'अद्य मे सफलं जीवितं, अद्य हुतं विधिवदग्निषु, अद्य दत्तमतिथिष्वभ्याग-

समयः स्वशिष्याणां पुरतः तदनुपयोगादिति भावः। दिशि दिशि प्रातादेशं यशः कीर्तिं सङ्घटयितुं संयोजयितुं इयं वेळा अयं समयः युक्ता समुचिता। प्रेरकवासुदेवाज्ञया सन्धेरवश्यम्भावित्वेन मम निमित्तमात्रत्वेनापि यशस्सम्प-त्तिरिति भावः। नोऽस्माकं महदुत्कृष्टं पुण्यं उपचेतुं सम्पादयितुं अयं कालः अतिक्रान्तः अर्घं मूल्यं अत्यर्घः।' मूल्ये पूजाविधावर्घ' इत्यमरः। अत्यादयः क्रान्ता-द्यर्थे द्वितीययेति समासः। मत्प्रयत्नरूपमूल्यमतिक्रम्य यशोरूपमहापदार्थलाभो भवतीति भावः। इति व्यवस्यन् निश्चिन्वन् प्राक् प्रथमं आखण्डलस्येन्द्रस्य गुरुः असुराणां गुरुं शुक्राचार्यं प्राप प्राप्तवान्। तद्द्वारैव सर्वं कार्यं साधनीयमिति मत्वेति भावः। अथ प्राप्तं सुराचार्यं प्रत्युत्थानादिभिः सभाजयित्वा तदागमनं प्रशशंसेत्याह वाक्यत्रयेण ॥ तत इति ॥ तत आगमनानन्तरं भार्गवः शुक्रः अतर्कित अचिन्तितस्स चासावुपनतः प्राप्तश्चेति स्नातानुलिप्तवत्समासः। यद्वा अतर्कितमचिन्तितमुपनतं उपनतिर्यस्य स तथाभूतं तं गुरुं शिष्यैस्सह अभिग-म्य प्रत्युत्थानप्रत्युद्गमनादिभिः संमान्येत्यर्थः। विधिवदर्घ्यं पूजां अर्हतीत्यर्घ्यं पूजोपयोगिद्रव्याणि। पादार्घाभ्यां चेति यत्प्रत्ययः। त एव आदयो यासां ताभिः। 'षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि' इत्यमरः। सपर्याः पूजाः। 'पूजा नमस्यापचितिस्सपर्याचार्हणास्समाः' इत्यमरः। ताभिरभ्यर्च्य अभिपूज्य सेवित्वेति तात्पर्यार्थः। महत्युत्तमे विष्टरे पीठे। 'विष्टरो विटपे दर्भमुष्टिः पीठाद्य-मासनं' इत्यमरः। आसयन्नुपवेशयन् तस्य गुरोरनुज्ञया आदेशेन स्वयं शुक्रः आसीनः उपविशन् सन् सविनयं विनयः नम्रता तेन सह वर्तनं यथा तथा इदं वचनं आचचक्षे जगाद ॥ अद्येति ॥ अद्येदानीं मे मम जीवितं प्राणधा-रणं सफलं फलवत् भवदागमजनितपरमानन्दलाभादिति भावः। यद्वा अन्यथा भवदागमनजनित आनन्द एव न स्यादिति भावः। अद्येदानीं अग्निषु आह-वनीयादिषु विधिवत् यथाशास्त्रं हुतं होमः कृतः। 'यस्याग्निहोत्रमदर्शपूर्णमा-समनाग्रयणमतिथिवर्जितं चाहुतमवैश्वदेवमाविधिनाहुतमासप्तमात् तस्य लो-

**तेषु, अद्याधीतमागमेषु सरहस्येषु, अद्याराधिता गुरवः, अद्य फलिनो गृहाश्रमाः । किं बहुना । अद्यायमन्वयः प्रतिष्ठितो भृगोः यदनुल्लिखितं मनोरथैरनवाप्यं तपोभिरपि, आशासनीयं गृहमेधिनां,'आसादितमनायासेन मया स्वयमागमनं भगवतोऽधुना' इत्युदाहरति भार्गवे पुनरिदमुवाच वाचस्पतिः ।**

---

कान् हिर्नास्ति' इति श्रुत्या भवादृशातिथिपूजयैव अग्निहोत्रादेर्विधिवदनुष्ठितत्व-संभवादिति भावः । अतिथयः वैश्वदेवात्पूर्वं गृहमागताः । 'स्यादावेशिक आगन्तुरतिथिर्ना गृहागतः' इत्यमरः । तेषु अभ्यागताः वैश्वदेवकाले समागताः तथाचोक्तम् । 'अभ्यागतस्तु विज्ञेयो वैश्वदेवे य आगतः' इति । तेषु च अद्यदानीं दत्तं प्रतिपादितं सदा अतिथ्यभ्यागतपूजाकरणमहिम्नैव कदाचिदद्य भवादृशस्य अप्राकृतस्य लाभात्तदपि सार्थकमभूदिति भावः । सरहस्याः गोप्यार्थसहिताः अथवा रहस्यं नाम सामगानां वेदविभागः तत्सहिता इत्यर्थः । तथाभूतेषु आगमाः शास्त्राणि । 'आगमस्त्वागते शास्त्रे विद्रुमे द्रुप्रवाळयोः' इति नानार्थमाला । तेषु अद्येदानीं अधीतं अध्ययनं कृतम् । 'कृतं कर्तव्यमखिलं वेद्यं तु विदितं तदा । यदा सम्पूजितो ब्रह्मा भगवान् ब्रह्मवित्तमः ॥' इति वचनादिति भावः । गुरवः पित्राद्याः 'गुरू गीष्पतिपित्राद्यौ' इत्यमरः । अद्येदानीं आराधिताः सन्तोषिताः । 'नृत्यन्ति पितरस्सर्वे गायन्ति प्रपितामहाः । पितामहाश्च गायन्ति श्रोत्रिये गृहमागते ॥' इति शास्त्रादिति भावः । अद्येदानीं गृहाश्चाश्रमाश्चेति द्वन्द्वः । तथाच भवत्पादधूळिलाभादस्माकं गृहाः फलिनः फलवन्तः । 'यन्मनीषिपदाम्भोजरजःकणपवित्रितम् । तदेव भवनं नोचेद्धकारस्तत्र लुप्यते ॥' इति शास्त्रादिति भावः । तथा अस्मदाश्रमाः भगवत्पूजालाभात् । 'न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः । ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥' इति शास्त्रादिति भावः । फलिनो बभूवुरिति भावः ॥ **अद्येति** ॥ यद्यतः मनोरथाः इच्छाः । 'इच्छा काङ्क्षा स्पृहेहा तृड्वाञ्छा लिप्सा मनोरथः ।' इत्यमरः । तैरनुल्लिखितं अनुत्प्रेक्षितं अविषयीकृतमिति यावत् । तपोभिः कृच्छ्रचान्द्रायणादिभिरप्यनवाप्यमवाप्तुमशक्यं गृहान् दारान्मेधन्ते सङ्गच्छन्त इति गृहमेधिनः । मेधृ सङ्गम इति धातोरच्प्रत्ययस्तत इनिप्रत्ययः । अधुना तेषां गृहस्थानामिति यावत् । आशासनीयं अपेक्षणीयम् । आङ्पूर्वाच्छासेरिच्छार्थकात्तव्यत्तव्यानीयर इत्यनीयर्प्रत्ययः । सोऽप्यर्थः एवंविधमपि भगवतः स्वयमागमनं मया अनायासेन • प्रयत्नेन । यसु प्रयत्न इति धातोर्घञ्प्रत्ययः । आसादितं सम्पादितं तत्कारणात् भृगोर्महर्षेः अयमन्वयः कुलम् । 'सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ' इत्यमरः । अद्य इदानीं प्रतिष्ठा बहुमानोऽस्य सञ्जाता प्रतिष्ठितः । तस्य सञ्जातं

'पुत्रावुभौ प्रथमजौ भृगुरङ्गिराश्च
ख्यातौ कुले शमवतां ननु पद्मयोनेः।
तद्भार्गवस्य कुलमाङ्गिरसः प्रपन्नः
चित्रीयते किमिह सोदरसंप्रयोगे ॥ ११ ॥

अपि च।

निष्ठामाश्रमधर्मपालनविधौ नित्याभियोगं शिवे
शक्तिं कर्तुमकर्तुमन्यथयितुं तन्त्रेषु राज्ञामपि।
श्रावंश्रावमनुक्षणोपचितया प्रीत्याहमस्म्यागतो
यत्सत्यं भवदीक्षणाय हृदये तत्रावयोस्साक्षिणी ॥ १२ ॥'

इत्यभिदधानो गुरुरलमतिवात्सल्यादतिलालनेनेत्यभिधाय, वि·

---

तारकादिभ्य इतजितीतच्प्रत्ययः। अथवा प्रतिष्ठितः। कर्मणि क्तः। इतीत्थं भार्गवे शुक्रे उदाहरति अभिवदति सति वाचस्पतिः गुरुः पुनरिदं वचनं उवाच उक्तवानित्यर्थः। अथ वचनप्रकारमाह ॥ **पुत्रेति** ॥ यस्मिन् पद्मयोनेः ब्रह्मणः कुले अन्वये गृहे वा प्रथमजौ प्रथमोत्पन्नौ भृगुरङ्गिराश्चेत्युभौ पुत्रौ शमवतां शमशालिनां मुनीनां मध्य इत्यर्थः। ख्यातौ प्रसिद्धौ भार्गवस्य तत्कुलं तमन्वयं तद्गृहमिति आपन्नः गतः आङ्गिरसः जीवः उभयोरेकवंश्यत्वमिति भावः। इहेदानीं सोदरस्य भ्रातुर्मम संप्रयोगे तद्गृहमिति संप्राप्तिविषये किं चित्रीयते किमर्थं विस्मयः क्रियते भ्रात्रोः परस्परागमनं नाश्चर्यायेति भावः। भवद्गुणान् श्रुत्वा द्रष्टुमागत इत्याह ॥ **अपि चेति** ॥ आश्रमः गार्हस्थ्यं तस्य उचिता ये धर्माः अग्निहोत्रादयः तेषां पालनं परिरक्षणं तदेव विधिः व्यापारः तस्मिन् निष्ठां पराकाष्ठां अथवा निष्ठां निर्वहणमित्यर्थः। 'निष्ठानिर्वहणे समे। निष्ठानिष्पत्तिनाशान्ताः काष्ठोत्कर्षे स्थितौ दिशि' इति चामरः। शिवे परमेश्वरे विषये नित्यमनवरतमभियोगोऽभिध्यानम्। 'योगस्सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः। राज्ञां भूपानां तन्त्रेषु इतिकर्तव्यतास्वपि विषये। 'तन्त्रं कुटुम्बकार्ये स्यात्सिद्धान्ते चोत्तमौषधे। प्रधाने तन्तुवाये च शास्त्रभेदे परिच्छदे। श्रुतिशाखान्तरे हेतौ उभयार्थप्रयोजने। इतिकर्तव्यतायां च' इति हेमचन्द्रः। कर्तुं निर्वोढुं अकर्तुं ताटस्थ्येन तूष्णीं वर्तितुं अन्यथयितुं स्वेच्छया प्रकारान्तरमनुसर्तुं च शक्तिं सामर्थ्यम्। 'कासूसामर्थ्ययोश्शक्तिः' इत्यमरः। श्रावंश्रावं। आभीक्ष्ण्ये णमुल्। श्रुत्वा श्रुत्वेत्यर्थः। अनुक्षणं प्रतिक्षणं उपचितया अभिवृद्धया प्रीत्या प्रेम्णा भवत ईक्षणाय दर्शनाय आगतः आयातः अस्मि। यद्यदंशः सत्यं प्रामाणिकः तत्र तदंशे आवयोः मम तव चेत्युभयोर्हृदये मनसी साक्षिणी द्रष्ट्री।

सृज्य सामाजिकान्, विविक्ते पृष्टः कविना समागमनकारण-मुदाजहारैनमुपपत्तिगर्भया गिरा । 'आवेदनीयं किमखिलवेदिषु भवादृशेषु । तथा हि ।

जानीषे जगदेव तावदखिलं स्वप्नेन्द्रजालोपमं
जानीषे ह्यधिकारदुर्विलसितं संसारमप्यावयोः ।
जानीषे भगवत्परिग्रहपरीणाहं सुपर्वस्वपि
व्याहर्तव्यमितोऽस्ति यत्तदपि ते नापेक्षते मादृरम् ॥ १३ ॥

अपि च ।

---

साक्षाद्दृष्टार संज्ञायामितीनिः ॥ इतीति ॥ इतीत्थं अभिदधानः आभाषमाणः गुरुः बृहस्पतिः ।'गुरू गीष्पतिपित्राद्यौ' इत्यमरः । अतिवात्सल्यात् अतिप्रेमवशात् अतिलालनेन अतिश्लाघनेन प्रोत्साहनेनेति वार्थः । अलं इतीत्थमभिधाय उक्त्वा सामाजिकान् सभास्तारान् । 'सभासदस्सभास्तारास्सभ्यास्सामाजिकाश्च ते' इत्यमरः । विसृज्य बहिः प्रेषयित्वेत्यर्थः । यद्वा विसृज्य विहायेत्यर्थः । तेन सह स्वयमन्यत्र गत्वेति भावः । विविक्ते विजनदेशे । 'विविक्तौ पूतविजनौ' इत्यमरः । कविना शुक्रेण । 'उशना भार्गवः कविः' इत्यमरः । पृष्टः अनुयुक्तस्सन् उपपत्तिः युक्तिः गर्भे कुक्षौ यस्यां सा तया युक्तिसहितयेति यावत् । गिरा वाचा इदं बुद्धिस्थं आगमनकारणं समागमननिमित्तं उदाजहार प्रोवाचेत्यर्थः । यद्वा ज्ञापयामासेत्यर्थः । उदाङित्युपसर्गद्वयपूर्वस्य हृधातुरुपोद्घातार्थतायाः 'उपोद्घात उदाहार' इत्यमरेणाभिधानात् ॥ आवेदनीयमिति ॥ भवादृशेषु युष्मदस्मदृशेषु अखिलं वेत्तुं शीलं येषां तेऽखिलवेदिनः तेषु । आवेदनीयं बोधनीयं किं न किमपीत्यर्थः । भवादृशामाकारेण परेङ्गितज्ञानादिति भावः । ममाखिलवेदित्वं कथमिति चेदत आह ॥ जानीष इति ॥ अखिलं समस्त जगद्भुवनमेव स्वप्नश्च इन्द्रजालञ्च ते उभे उपमे उपमाने यस्य तत्तथाभूतं जानीषे तावद्वेत्सि खल्वित्यर्थः । जगतो मिथ्यात्वात्तत्साम्यमिति भावः । अत एव यथा स्वप्नप्रपञ्चोऽयं मयि मायाविनिर्मितः तथा जाग्रत्प्रपञ्चोऽयं मयि मायाविनिर्मितः । 'आलोकयन्तं जगदिन्द्रजालं' इति च श्रुतिः । आवयोः मम तव चेत्युभयोः अधिकारः शत्रुक्षेत्रोच्चस्थाननीचस्थानप्राप्तिवशात् प्राणिनां शुभाशुभान्यतरफलप्रदानसुरासुरमन्त्रालोचनतत्तत्पौरोहित्यकरणरूपोऽधिकारः तस्य दुर्विलसितम् । भावे क्तः । दुर्विलासरूपं संसारं संसृतिमपि स्वप्नेन्द्रजालोपमं जानीषे जानासि खलु । संसारस्य स्वप्नसाम्यं वासिष्ठरामायणेऽप्युक्तम् । 'दीर्घस्वप्नमिमं विद्धि संसारं राघव स्वयं' इति । सुपर्वसु देवेष्वपि भगवतः वासुदेवस्य परिग्रहः स्वीकारस्तस्य परीणाहः बन्धनमा-

येनादिश्यत वेधसा जनिमतामद्रोहतो जीवनं
तेनैव त्वयि दुर्धियां दनुभुवामादिष्टमाचार्यकम्।
अस्मिन् किं करणीयमर्थगहने मीमांसकैर्मादृशैः.
शक्तस्त्वं त्वनुवर्तितुं तदपि खल्वाकाशवद्वर्तितुम् ॥ १४ ॥

धिक्यं वेत्यर्थः। 'परिणाहो विशालाता' इत्यमरः। तमपि जानीषे जानासि। इतः ल्यब्लोपे पञ्चमी। एतद्विहायेत्यर्थः। यद्यदंशः व्याहर्तव्यं वक्तव्यः अस्ति वर्तते तत्तदंशः मादृशं मम वाचं नापेक्षते नाकाङ्क्षत इत्यर्थः। मदभिधानमन्तरैव बुद्धिवैभवेन वक्तव्यं जानामीति भावः। अथ तमेव चातुर्यातिशयवानित्यभिप्रायेण स्तौति ॥ येनेति ॥ येन वेधसा विधिना अद्रोहतः न द्रोहः अद्रोह इति समासे नञः प्रागभावोऽर्थः। 'रक्षोहागमलघ्वसन्देहाः प्रयोजनं' इति महाभाष्ये असन्देहपदस्य सन्देहप्रागभावार्थताया निर्णीतत्वात् तत्समासोत्तरपञ्चमीस्थानिकतसिप्रत्ययस्य च लुप्तल्यबन्तनिरूपितकर्मत्वमर्थः। एवं च द्रोहप्रागभावं परिपाल्येति समुदितार्थः। जनिमतां प्राणिनां जीवं प्राणधारणं आदिश्यत निरदिश्यतेत्यर्थः। यथाऽद्रोहेणोत्पद्यते तथैव प्राणिनां जीवनं ब्रह्मणा निर्दिष्टमिति भावः। तेन विधिना त्वयि त्वाद्गृशय दुर्धियां दुर्बुद्धीनां परद्रोहलोलुपत्वादिति भावः। दनुभुवां दानवानां आचार्यकमाचार्यत्वं आदिष्टं निर्दिष्टम्। द्रोहधुरन्धरासुरगुरुत्वमेव भवतः। अमीमांसकैः मादृशैः मद्विधैः अर्थगहने भावगर्भिते अस्मिन् किं करणीयं किं वा कर्तव्यमित्यर्थः। प्राणिमात्रस्याहिंसया जीवनं निर्दिष्टं अस्माकं तु हिंसाप्रचुरदानवाचार्यत्वं कुतो निर्दिष्टमिति ब्रह्माणं प्रति विचारयितुमशक्यमिति भावः। त्वं तु अनुवर्तितुं अनुसर्तुं उभयविधमाज्ञामिति शेषः। तदपि अनुवृत्तोऽपि आकाशवद्वर्तितु स्थातुं शक्तः। यथाकाशः तत्र तत्र विद्यमानोऽपि तत्तत्कृतलेपरहितः तथा त्वमपि तेषां आचार्यतया विद्यमानोऽपि तत्तत्कृतद्रोहादिसम्बन्धरहित इति भावः। यद्वा येन जनिमतां उत्पत्तिशालिनां अद्रोहतः। पञ्चम्यास्तसिल्। द्रोहमन्तरेणेति भावः। जीवनं आयुः परिमितकालवर्तनमित्यर्थः। अथवा अद्रोहतः इतराभ्योऽपि दृश्यत इति प्रथमायास्तसिः। क्रियाविशेषणमेतत्। तथाच अद्रोहं यथः तथा वर्तनमित्यर्थः। एवं चेतरेषां द्रोहो यथा न भवति तथा शरीरभरण कर्तव्यमिति भावः। तेन दुर्धियां दनुभुवामाचार्यकं पुरोहितत्वं द्रोहप्रचुरासुराचार्यत्वेन जीवनं भवतो निर्दिष्टमिति भावः। मीमांसकैरिति छेदः। विचारयितृभिरित्यर्थः। मादृशैः मद्विधैः अर्थः निवृत्तिः। 'अर्थोऽभिधेये रैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः। तेन गहने दुष्प्रवेशे निवर्तितुमस्मिन्नशक्यमिति भावः। अस्मिन् सन्दिग्धविषये किं करणीयं वेधसं प्रति त्वया सर्वेषां किमर्थं तथा निर्दिष्टं मम तु

तत्कथञ्चिदेकीकृत्य देवासुरानेकान्तशीलाभ्यामावाभ्यामासितव्यमिति वक्तुकामोऽहमागतोऽस्मि ।' इत्यभिहितो गुरुणा यथार्थमेव तदालोचयन् कविरिदमावभाषे । 'भगवन्नेवमेवैतत् । तथा हि ।

जानाम्येव यदाह पद्मनिलयो यच्चाह विश्वम्भरो
यच्चास्ते हृदि ते यथा किल तदप्यग्रे विवर्तिष्यते ।
कस्त्वं सङ्घटनेऽसि को विघटनेऽस्म्याकृष्य विश्वात्मना
योक्ष्यन्ते न चिरेण चेह तृणवद्वातेन देवासुराः ॥ १५ ॥

किमर्थमेवं निर्दिष्टमिति प्रष्टुमप्यस्माभिर्न शक्यमिति भावः । तदपीत्यत्र पदद्वयं तत्पूर्वोक्तभगवदादेशद्वयमनुवर्तितुमाकाशवद्वर्तितुमपि त्वं तु शक्तः खलु । शिष्टं पूर्ववत् ज्ञेयम् । अत्र केचित् ॥ **येनेति** ॥ येन वेधसा विधिना जनिमतां जीवनं न विद्यते द्रोहोऽपकारो येभ्यः । सार्वविभक्तिकस्तसिः । ततः साधुभ्य इत्यर्थः । आदिश्यत तेनैव त्वयि दुर्धियां दुर्बुद्धीनां घातुकानामित्यर्थः । दनुभुवां दानवानां आचार्यकं आचार्यत्वं आदेष्टृत्वमित्यर्थः । आदिष्टं निर्दिष्टं दानवादेष्टृत्वस्यानितरसाध्यत्वात्त्वदायत्तीकृतमिति भावः । अर्थेन याच्ञया गहने असाध्ये दानवानां दण्डैकसाध्यत्वादिति भावः । अस्मिन् दूत्ये विषये मीमांसकैः विचिकित्सापरैर्मादृशैः किं कर्तव्यं अस्मदुचितानुनयानवकाश इत्याशयः । त्वं तु तद्देवदानवसम्बन्धि दौत्यं अनुवर्तितुं स्वीकर्तुं आकाशवद्वर्तितुमपि असुराचार्यत्वाद्दौत्यप्रयुक्तन्यूनताराहित्येन गौरवेण स्थातुमपीत्यर्थः । शक्तस्समर्थः । अनितरसाध्यदुष्टदानवशिक्षकस्य तव किमसाध्यमिति भाव इति वदन्ति ॥ **तदिति** ॥ तत्तस्माद्दानवाचार्यत्वादित्यर्थः । कथञ्चित् केनापि प्रकारेण देवासुरान्निर्जरदानवान् एकीकृत्य आवाभ्यामेकान्तशीलाभ्यामासितव्यं स्थातव्यं इत्येवंप्रकारेणाहं वक्तुं काम इच्छा यस्य स तथाभूतस्सन् आगतोऽस्मि । देवासुरयोरैकमत्यमन्तरा तदाचार्ययोरावयोरेकान्ते स्थितिरेव न भविष्यतीति भावः ॥ **इतीति** ॥ गुरुणा बृहस्पतिना इतीत्थमभिहित उक्तः कविश्शुक्रस्तद्गुरुवचनं यथार्थमालोचयन्विभावयन् सन्निदं बुद्धिस्थमाबभाषे जगाद ॥ **भगवन्निति** ॥ हे भगवन् एतद्बुद्धिस्थं एवमेव वक्ष्यमाणमेव । तदेवाह ॥ **जानामीति** ॥ वेदानां ऋगादीनां निलयः स्थानं ब्रह्मा यद्वचनं आह युष्मान् प्रतीति शेषः उवाच । विश्वम्भरः नारायणश्च यदाह ब्रह्माणं प्रतीति शेषः । ते तव हृदि मनसि च यत् आस्ते वर्तते अग्रे कालान्तरेऽपि यथ किल येन वा प्रकारेणेत्यर्थः । विवर्तिष्यते भविष्यति तत्सर्वं जानामि वेद्म्येवेत्यर्थः । सङ्घटने सन्धानविषये त्वं कः विघटने सन्ध्यघटनविषयं

तदस्तु यथातथा वा संमुखीकरिष्यामि दानवान्, संभावयिष्यामि च भवन्तं ततो यथामनोरथमभिधीयतां' इत्युपच्छन्द्य, समानीय बलेस्सभां, सभाजयन् विविधैरुपचारैः, सँल्लापयामास वासवगुरुम्। 'भगवन् दिष्ट्यासि दृष्टश्चिराय। किमागमनकारणं, किं कुशली मे भ्राता पुरन्दरः, स किं करोति, किमावसति, नामापि तस्य न शृणुमहे तदाप्रभृति' इत्यनुयुञ्जाने बलौ सोत्प्रासमाददे गिरमाङ्गिरसः।

'देयं यस्य सदेवमर्त्यभुजगं विध्यण्डमेवाखिलं
पात्रं यस्य जगन्निधिः स भगवान् देवस्सरोजेक्षणः।

---

अहमपि कः पदार्थोऽस्मि भवामि। कार्यसामान्यस्यापि दैवायत्तत्वादावयोरत्र किं स्वातन्त्र्यमिति भावः। इहेदानीं वातेन पवनेन तृणैस्तुल्यं तृणवत्। तेन तुल्यमिति वतिः। परस्परं तृणानीवेति यावत्। विश्वात्मना विश्वस्वरूपेण परमेश्वरेण। 'पुरुष एवेदं सर्वं' इति श्रुतेः। आकृष्य आकर्षणं कृत्वा हठादिति शेषः। देवासुराः न चिरेण झटिति योक्ष्यन्ते सङ्घटिता भविष्यन्ति ॥ **तदिति** ॥ तदस्तु सङ्घटनाचिन्तनं तिष्ठतु। अहमित्यस्य गम्यमानत्वादप्रयोगः। यथा वा यथातथा वा यथाकथञ्चिदित्यर्थः। दानवानसुरान् संमुखीकरिष्यामि ततः दानवेभ्यः भवन्तं सम्भावयिष्यामि बहुमानं प्रापयिष्यामि ततः अनन्तरं यथामनोरथं यथाकाममभिधीयतामुच्यतामित्युपच्छाद्य सन्तोष्य बलेरसुरराजस्य सभामास्थानं समानीय प्रापयित्वा विविधैरनेकप्रकारैरुपचारैः अर्हणैर्वासवगुरुं सभाजयन् पूजां कारयिष्यन् सन् सँल्लापयामास मिथः वासवगुरुदानवयोः भाषणं कारयामासेत्यर्थः। 'सँल्लापो भाषणं मिथः' इत्यमरः। अथ सँल्लापनप्रकारमेवाह वाक्यद्वयेन ॥ **भगवन्निति** ॥ हे भगवन् हे बृहस्पते चिराद्बहुकालस्य दृष्टः अवलोकितः मयेति शेषः। दिष्ट्येत्यव्ययं सन्तोषो जात इत्यभिप्रायः। 'दिष्ट्या समुपजोषञ्चेत्यानन्देऽथान्तरेऽन्तरा' इत्यमरः ॥ **किमिति** ॥ आगमनस्य मन्निकटप्राप्तेः कारणं निमित्तं किमिति प्रश्ने। मे भ्राता सहोदरः पुरन्दर इन्द्रः कुशली क्षेमवान् किं स किं करोति कं वा व्यापारमाचरतीत्यर्थः। किमावसति कस्मिन् देशे वसतीत्यर्थः। उपान्वध्याङ्वस इति वसतेराधारस्य कर्मत्वं। तस्य इन्द्रस्य नामापि तदाप्रभृति तदारभ्येत्यर्थः। न शृणुमहे न शृणुमः। इतीत्थं बलावसुरराजे अनुयुञ्जाने पृच्छति सति आङ्गिरसो बृहस्पतिः सोत्प्रासं सोपहासं यथा तथा गिरं वाचमाददे स्वीचकार। 'स्यादाच्छुरितकं हासस्सोत्प्रासस्सुमनाक्स्मितं। सोल्लुण्ठन तु सोत्प्रासं' इत्यमरः ॥ **देयमिति** ॥ हे दानवराज बले यस्य पुंसः सदेवमर्त्यभुजगं

शिष्यो भूतपतेरसौ कुलगुरुर्यस्योशना भार्गवः
कीर्तिर्दानवराज तस्य भवतः कासां न पारे गिराम् ॥ १६ ॥

तदभिगम्यापि सुदूरमवलोकयितव्यः पुण्यश्लोको जन इत्यागतोऽस्मि । भ्रातुरपि ते वृत्तान्तमावेदयामि ।

यस्यैवं भूर्भुवस्स्वर्भुवनपरिबृढो वर्तसे पूर्वजस्त्वं
दुर्दान्तध्वान्तभानुस्स भवति भगवानेव यस्यानुजन्मा ।
संप्राप्तो यश्शरण्यं त्रिभिरपि करणैर्देवदेवं त्रिणेत्रं
प्रष्टव्यं तस्य कस्मिन् कुशलमकुशलं तस्य जिष्णोः कुतः स्यात् ।

स्वर्गमर्त्यपाताळलोकसहितं अखिलं समस्तं विष्यण्डं ब्रह्माण्डमेव देयं यस्य प्रदेयद्रव्यं जगतां निधिः आधारभूतो भगवान् षड्गुणसम्पन्नः देवः प्रकाशमानः सः सरोजेक्षणः पुण्डरीकाक्षः पात्रं दानपात्रम् । यस्य भार्गवः भृगुगोत्रोत्पन्नः भूतपतेरीश्वरस्य शिष्यः असावुशना शुक्रः कुलस्य गुरुर्विद्योपदेष्टा तस्य तथाविधस्य भवतः तव कीर्तिर्यशः कासां गिरां वाचां पारे परभागे नास्त्येवेत्यर्थः । यस्मिन् कस्मिन् श्रोत्रियब्राह्मणे विष्णुमावाह्य कस्मैचित्तस्मै यस्मिन् कस्मिन् काले येनकेनचित् प्रकारेण यत्किञ्चिद्दत्तवतोऽपि महापुण्यं तादृशयज्ञकाले साक्षाद्विष्णवे पात्रभूताय विधिं निखिलं ब्रह्माण्डं दत्तवतः तव पुण्यं कियत् तव कीर्तिश्च कियतीति वक्तव्यमिति भावः ॥ **तदिति** ॥ तत्तस्मात्सुदूरं बहुदूरं अभिगम्य गत्वापि पुण्यः पुण्यसम्पादकः श्लोकः यशः यस्य स तथाभूतः । 'पद्ये यशसि च श्लोके' इत्यमरः । अवलोकयितव्यः द्रष्टव्यः । 'सन्तस्सदाभिगन्तव्याः' इति शास्त्रादिति भावः । इतीत्थमालोच्यागतः आयातोऽस्मि ॥ **भ्रातुरिति** ॥ ते तव भ्रातुरिन्द्रस्य वृत्तान्तमावेदयामि विनिवेदयामि ॥ **यस्येति** ॥ यस्य इन्द्रस्य भूश्च भुवश्च स्वश्च भूर्भुवस्स्वः अव्ययमेतत् भूर्भुवस्स्वर्भूम्यन्तरिक्षस्वर्गा इति यानि भुवनानि तेषां परिबृढः प्रभुः प्रभौ परिबृढ इति निपातनात्साधुः । पूर्वजः अग्रजः त्वमेव महोन्नत इत्यर्थः । वर्तसे तिष्ठसि । दुर्दान्ता दुष्टाः त एव ध्वान्तं तमः तस्य भानुः सूर्यसदृशः स भगवान् विष्णुरेव यस्य इन्द्रस्यानुजन्मा-वरजः कश्यपपुत्रत्वात्त्रयाणामिति भावः । य इन्द्रः त्रिभिः करणैः वाङ्मनःकायलक्षणैरुपकरणैः देवानां ब्रह्मादीनामपि देवं स्वामिनं त्रीणि नेत्राणि यस्य स तथाभूतं परमेश्वरं शरण्यं संरक्षणनिपुणं सम्प्राप्तः अभिगतः तस्येन्द्रस्य कस्मिन् विषये कुशलं क्षेमं प्रष्टव्यं अनुयोक्तव्यम् । सदा तस्य कुशलमेवेति भावः जिष्णोः स्वतः जयशीलस्य एतस्येन्द्रस्य अकुशलं कुतः कस्मात्स्याद्भवेत् । कदाचिदपि तस्याकुशलं न भवेदेवेति भावः । अत्र त्रिणेत्र इति विशेष्यस्य लोचनत्रयवत्त्वप्रतिपादनेन संरक्षकाभिप्रायगर्भत्वात्परिकराङ्कुरालङ्कारः । 'साभि-

स यदैव सङ्गररङ्गमारूढो योद्धुकामोऽवतस्थे तदैव तमशरीरिण्या गिरा निवर्तयिष्यन्नाहवान्निर्मार्ष्टुं मुनिशापमालिन्यमभ्युदयेन च योक्तुमधिकेन परमे तपसि परमेश्वरो नियुयुजे ।

यश्शक्यो न दृशापि गोचरयितुं सत्त्वैस्तमोगन्धिभिः
यत्र ब्रह्म सनातनं गिरिजया स्वैरं परिक्रीडते ।
अध्यारुह्य तमेव मन्दरमभिध्यायन्य आस्ते शिवं
कस्तं द्रक्ष्यति कः प्रवक्ष्यति कथां देवोऽपि वा दानवः ॥

प्रह्लादः प्रथमो गुरुर्भगवतस्तन्त्रेषु लक्ष्मीपतेः
व्यातेने च विरोचनं कमलभूरध्यात्मविद्यानिधिम् ।

---

प्राये विशेष्ये तु भवेत्परिकराङ्कुरः। चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः ।' इति लक्षणात् ॥ **स इति** ॥ स इन्द्रः यदा यत्काले सङ्गरं युद्धं तदेव रङ्गः रङ्गस्थानं तमारूढः अधिरूढस्सन् योद्धुं कामः इच्छा यस्य स तथाभूतः अवतस्थे आसीत् ॥ **तदेति** ॥ तदा तत्काल एव परमेश्वरः तमिन्द्रं अशरीरिण्या शरीरसम्बन्धरहितयेत्यर्थः । शरीरावच्छेदेन अनुत्पन्नयेति यावत् । गिरा अन्तर्बहिरणादस्मादित्येवंविधया वाचा आहवनं निवर्तयिष्यन् रणं हापयित्वा निवर्तनं कारयिष्यन्नित्यर्थः । मुनिर्दूर्वासाः तत्सम्बन्धी यः शापः अनिष्टाशंसनं तत्प्रयुक्तं मालिन्यं कालुष्यं निर्मार्ष्टुं शोधयितुं अधिकेन अभ्युदयेन योक्तुं योजयितुं परमे उत्कृष्टे तपसि ध्यानादौ नियुयुजे नियोगं कृतवान् ॥ **य इति** ॥ यः मन्दरः तमः तमोगुणः। 'तमो राहौ गुणे ध्वान्ते शूके व्योम नभोऽम्बुनोः' इति नानार्थमाला । तस्य गन्धस्सुगन्धः लेशो वा । 'गन्धो गन्धकसम्बन्धामोदलेशास्मयेषु च' इति नानार्थमाला । तमोगन्धो एषामस्तीति तमोगन्धिनः । अत इनिठनाविती निप्रत्ययः । तथाभूतैः सत्त्वैः जन्तुभिः । 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः । दृशा दृङ्मात्रेणापि गोचरयितुं गोचरं कर्तुं विषयीकर्तुमिति यावत् । न शक्यः शक्यो न भवतीत्यर्थः । यत्राद्रौ सनातनं पुरातनं ब्रह्म शिवाख्यं परं ब्रह्म गिरिजया पार्वत्या साकं स्वैरं स्वच्छन्दं यथा तथा परिक्रीडते विहरति तं तथाभूतं मन्दरमेव अध्यारुह्य अधिष्ठाय य इन्द्रः शिवं उमासहायं अनुध्यायन् अनुचिन्तयन् सन्नास्ते तमिन्द्रं कः द्रक्ष्यति आलोकयिष्यति न कोऽपीत्यर्थः । देवः सुरः दानवः असुरोऽपि वा कः कथां इन्द्रप्रस्तावं प्रवक्ष्यति कथयिष्यति अज्ञानिप्राणिदुर्गमे मन्दराद्रौ शिवं ध्यायत इन्द्रस्य कापि बाधा न भवतीति भावः । बलेः कुलं उदितोदितकुलमित्यभिप्रायेण स्तौति ॥ **प्रह्लाद इति** ॥ भगवतः षड्गुणसम्पन्नस्य लक्ष्मीपतेः नारायणस्य तन्त्राणि सिद्धान्ताः

बाणः पारिषदाग्रणीः पशुपतेस्त्वं तु प्रवेकस्सतां
सिद्धानामपि योगिनामशृणवं नैवं कुलं निर्मलम् ॥ १८-१९ ॥

तदत्र महाकुलप्रसूतस्य भवतो महदनुशिष्टस्य किमावेदनीयमन्यैस्स्वयमेव महाभाग स्वरूपं पर्यालोचयतु कार्यस्य ।

ददति च वरं दत्वा सद्यस्तमन्यथयन्ति च
द्रुहिणहरगोविन्दाद्या दैत्येष्विति स्फुटमेव वः ।
न च नियमतो देवानेवानुकम्पितुमीशते
यदसुरवरान् मध्ये मध्ये समुद्भमयन्ति च ॥ २० ॥

---

पाञ्चरात्रादयः तेषु विषये । 'तन्त्रं प्रधाने सिद्धान्ते' इत्यमरः । प्रह्लादः परमगुरुराचार्यः महानिति वार्थः । 'गुरुस्त्रिलिङ्गयां महति दुर्जरालघुनोरपि' इति हेमचन्द्रः । कमलभूः ब्रह्मा विरोचनं अध्यात्मविद्यायाः ब्रह्मविद्यायाः निधिं शेवधिं व्यातेने चकारेत्यर्थः । तथोक्तं छान्दोग्यस्याष्टमाध्याये 'स हि शान्तहृदय एव विरोचनोऽसुरान् जगाम तेभ्यो ह्येतामुपनिषदं प्रोवाच' इति । बाणः बाणासुरः पशुपतेः परमेश्वरस्य परिषदि साधवः पारिषदाः । परिषदो ण्य इत्यत्र परिषद इति योगविभागाण्णोऽपि । तेषामग्रणीः श्रेष्ठः । 'बाणरावणचण्डीशनन्दिभृङ्गिरिटादयः' इत्यादिषु शिवभक्तगणनायां तस्य प्रथमगणितत्वादिति भावः । त्वं तु सतां साधूनां मध्ये प्रवेकः उत्तमः । 'क्लीबे प्रधानं प्रमुखप्रवेकानुत्तमोत्तमाः' इत्यमरः । सिद्धानामणिमादिसम्पन्नानां कुलं योगिनां यमनियमवतां कुलमपि एवं भवत्कुलमिव निर्मलं निष्कलङ्कं यथा तथा नाश्रृणवं न शुश्रुवे । ब्रह्माण्डे भवत्कुलमेव सर्वोत्तममिति भावः ॥ **तदिति** ॥ महान् भग एव भागः समज्ञा यस्य सः तस्य सम्बुद्धिः हे महाभाग । 'भगश्श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु' इत्यमरः । तत्तस्मादत्रेदानीं महाकुलप्रसूतस्य सद्वंशोत्पन्नस्य महता शुक्रेण अनुशिष्टस्य शिक्षितस्य भवतः अन्यैरितरैरावेदनीयं किं न किमपीत्यर्थः । उचितज्ञत्वादिङ्गितज्ञत्वाच्च तवेति भावः । भवान् स्वयमेव कार्यस्य प्रकृते कर्तुं योग्यस्य स्वरूपं पर्यालोचयतु परिभावनं कुर्वित्यर्थः ॥ **ददतीति** ॥ द्रुहिणः ब्रह्मा स च हरः शिवः स च गोविन्दो विष्णुः स च ते एतदाद्याः एतत्प्रभृतयः दैत्येषुदितिपुत्रविषये वरं प्रार्थितार्थम् । 'दैवाद्वृते वरश्श्रेष्ठे त्रिषु क्लीबे मनाक् प्रिये' इत्यमरः । ददति वितरन्तीत्यर्थः । दत्वा दानं कृत्वा च तं वरं सद्यस्तत्क्षण एव अन्यथयन्ति अन्यथा कुर्वन्तीत्यर्थः । इति वः युष्माकं स्फुटं प्रव्यक्तमेव । 'स्फुटं प्रव्यक्तमुल्बणं' इत्यमरः । कुम्भकर्णभस्मासुरादिषु तथा प्रसिद्धत्वादिति भावः । नियमतः नियमेन । सार्वविभक्तिकस्तसिः । आवश्यकतयेति तात्पर्यार्थः । देवानिन्द्रादीनेव अनुकम्पितुं अनुग्रहीतुं

अतो ब्रह्मेशविष्णूनामपि शुद्धचिदात्मनाम् ।
आचूडादानखाग्रेभ्यो मन्ये मायामयं वपुः ॥ २१ ॥
तदप्रदाय परेभ्योऽवकाशमन्योन्यसमवेतेषु युष्मासु ।
यन्नैश्चिन्त्यं यदौर्जित्यं यद्बलं या सुखासिका ।
यद्यशो यः प्रतापश्च सर्वं तदनुचिन्त्यताम् ॥ २२ ॥

आस्तामिदं अवश्यं हि विग्रहवत्सु युष्मासु भवितव्यं अप्रकाशेन मया वा भार्गवेण वा । तथा च ।

---

न चेशते समर्था न भवन्तीत्यर्थः । यद्यस्मात्कारणात् मध्ये मध्ये कचित् कचित्समय इत्यर्थः । असुरवरान् दानवश्रेष्ठान् समुद्रमयन्ति समुन्नतान् कुर्वन्तीत्यर्थः । कदाचित्तेषां उपचयः भवतामपचयः कदाचिद्भवतामुपचयस्तेषामपचय इति सर्वैर्विदितमेवेति भावः ॥ **अत इति** ॥ अतः कालभेदेन उभयत्र पक्षपातापक्षपातप्रदर्शनादित्यर्थः । शुद्धा निर्मला चित् बुद्धिः येषां ते शुद्धचितः एवंभूताः आत्मानः स्वभावाः येषां ते निर्मलबुद्धिस्वभावा इति यावत् । एवंभूतानामपि ब्रह्मेशविष्णूनां वपुः शरीरं आचूडात् शिर आरभ्येत्यर्थः । आनखाग्रेभ्यः नखाग्रमभिव्याप्येत्यर्थः । आङ्मर्यादाभिविध्योरित्युभयत्र समासः । मायया इन्द्रजालेन प्रचुरं मायामयमिति । 'स्यान्माया शाम्बरी मायाकारस्तु प्रातिहारिकः' इत्यमरः । इति मन्ये जाने । कदाचित् स्वीया इव भासन्ते कदाचित्परकीया इव भासन्ते अतस्तेषां कृत्यमित्थमिति प्रत्येतुमशक्यमिति भावः । परमार्थस्तु शुद्धचिन्निर्विकारचैतन्यमात्मा विग्रहो येषां ते शुद्धचिदात्मानः । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इत्यमरः । तेषां ब्रह्मेशविष्णूनां वपुः आचूडादानखाग्रेभ्यः मायामयं मन्ये मिथ्याभूतं जाने सच्चिदानन्दैकरूपत्वात्तेषां विग्रहस्य तुच्छत्वादिति भावः ॥ **तदिति** ॥ तत्तस्मात्परेभ्यः इतरेभ्यः अवकाशं छिद्रमप्रदायादत्वा युष्मासु तेषु भवत्सु चेत्यर्थः । अन्योन्यं परस्परं समवेतेषु मैत्र्या मिळितेषु सत्सु ॥ **यदिति** ॥ यन्निष्क्रान्ता चिन्ता येभ्यस्ते निश्चिन्ताः तेषां भावः नैश्चिन्त्यं चिन्ताराहित्यमिति यावत् । 'स्याच्चिन्ता स्मृतिराध्यानमुत्कण्ठोत्कलिके समे' इत्यमरः । यदौद्धत्यं य उत्साहः यद्बलं यत्परनिग्रहसामर्थ्यं वर्तते या सुखासिका या वा सुखस्थितिर्वर्तेत यद्यशः कीर्तिः भवेत् यः प्रतापः कोशदण्डजं तेजः । 'स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजं' इत्यमरः । तत्सर्वमनुचिन्त्यतामनुसन्धीयतामित्यर्थः । मिळितानां भवतामसाध्याभावादवश्यं मेळनं भवितव्यमिति भावः । आस्तामिदं एतत्तिष्ठतु । सन्धौ साधकमुक्त्वा विग्रहे बाधकमाह ॥ **अवश्यमिति** ॥ युष्मासु तेषु भवत्सु चेत्यर्थः । विगृह्णत्सु युद्धं कुर्वत्सु सत्सु गुरुणा मया भार्गवेण वा अप्रकाशेन प्रकाशरहिते-

निर्वर्त्यमाना यत्नेन निर्जरैरसुरैश्च वा ।
काः क्रियाः फलवत्यः स्युरावयोरप्रकाशयोः ॥ २३ ॥
आखण्डलस्य तु मतिरन्यादृशी ।
स्थीयतामग्रजैस्स्वर्गे जीयतामनुजेन वा ।
सर्वथा भ्रातृभाग्येन संवृत्तं नः प्रयोजनम् ॥ २४ ॥ इति ।

अहं तु भवतः सार्वश्यात् अविशङ्कं अवादिषम् । न खल्वात्मनस्सचिवोक्तमित्येवादरणीयं परसचिवोक्तमिति वा परिहरणीयं धीमतां धीरेव सचिवश्शासिता' इत्यभिधाय विरमति

---

न भवितव्यं स्यातव्यं गुरुशुक्रयोरावयोः केवलसमीपवृत्तित्वे युद्धप्रतिबन्धकमहावृष्टिसम्भवादिति भावः । तथा चोक्तम् । 'गुरुशुक्रौ समीपस्थौ कुर्यादेकार्णवं जगत्' इति । 'दृश्यौ यदाहनि जनैर्व्रजतो यदास्तमन्योन्यतस्सुरगुरौ यदि वार्यशुक्रौ । कर्माणि तत्र समये न शुभानि कुर्यान्नैवारभेत शशिजेऽस्तगते च विद्याम् ॥' **तथा चेति** ॥ तथा च एवं चेत्यर्थः । आवयोः गुरुशुक्रयोरप्रकाशयोः मूढयोस्सतोरिति यावत् । सुरैः देवैः असुरैः दानवैश्च वा यत्नेन महाप्रयत्नेन निर्वर्त्यमानाः क्रियमाणा अपि काः क्रियाः के वा व्यापाराः फलवत्यः सफलास्स्युः भवेयुः । का अपि क्रिया न फलन्तीत्यर्थः । तथा चोक्तम् । 'गुरुभार्गवयोर्मौढ्ये शुभं किञ्चिन्न सिध्यति' इति ॥ **आखण्डलस्येति** ॥ आखण्डलस्य इन्द्रस्य मतिर्बुद्धिरन्यादृशी प्रकारान्तरवतीत्यर्थः ॥ **स्थीयतामिति** ॥ अग्रजैः ज्येष्ठभ्रातृभिः असुरैः स्थीयतां भावे लोट् उषितं स्यादित्यर्थः । सर्वथा सर्वप्रकारैरित्यर्थः । भ्रातुः ज्येष्ठस्य कनिष्ठस्य वा भाग्यं शुभकर्म । 'भाग्यं कर्म शुभाशुभं' इत्यमरः । तेन नः अस्माकं प्रयोजनं संवृत्तं संप्राप्तं इत्याखण्डलस्येत्यन्वयः । असुराणां स्वर्गाधिपत्ये इन्द्राग्रजः स्वर्गमधितिष्ठतीति प्रवादः स्यात् उपेन्द्रस्याधिपत्ये इन्द्रानुजः स्वर्गमधितिष्ठतीति प्रसिद्धिः स्यादुभयथापि मम कीर्तिरस्त्येवेति भावः । संप्रति सामाजिकान् प्रत्याह ॥ **नेति** ॥ आत्मनस्स्वस्य सचिवः तेन उक्तं कथितं इत्येव एतावता हेतुनैव नादरणीयं नादर्तव्यं खलु । तदुक्तमप्ययुक्तं चेद्धेयमेव भवतीति भावः । परः शत्रुः । 'परोऽरिपरमात्मनोः' इति विश्वः । तस्य सचिवः मन्त्री तेनोक्तं गदितमिति वा । एतेनैव हेतुनेत्यर्थः । 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरः । परिहरणीयं परित्यक्तव्यं न भवति । तदुक्तमपि युक्तं चेद्ग्राह्यमेव भवति । 'युक्तियुक्तं वचो ग्राह्यं बालादपि शुकादपि' इति न्यायादिति भावः । धीमतां बुद्धिशालिनां धीरेव सचिवः शासिता शिक्षकः । 'मन्त्री धीसचिवोऽमात्यः' इत्यमरः । विवेकिनं धीरेव अमार्गान्निवर्तयति सन्मार्गे प्रवर्तयति । ततः बुद्धिशालिनः मन्त्र्यन्तरापेक्षा नास्तीति भावः । इती-

देवगुरौ, अवलोकितो बलिना, भार्गवस्सामाजिकाननुमोदयन्नि-दमाचचक्षे। 'भो भो सकलाशयमर्मज्ञाः, समयज्ञाः सन्धिविग्रहयोः, पारीणा नीतिपथे, भवन्त एव प्रमाणमर्थेषु ।

यद्यप्यद्य गतश्रियस्सुमनसो यद्यप्यसौ तद्गुरुः,
यद्यप्यस्ति फलं न किञ्चिदपि नस्सन्धाय साध्यं सुरैः ।
पर्यालोच्यमथापि किञ्चिदुदधिं निर्मथ्य लब्ध्वा सुधां
पास्यामो वयमित्यसौ रहसि मां यत्प्राह दिव्यो मुनिः॥'

इति । तच्छृण्वन्त एव दानवाः संमोहिता मायया वैष्णव्या, सद्य एव संमेनिरे आहुश्च ।

---

त्थं अभिधाय देवगुरौ सुराचार्ये विरमति तूष्णीम्भूते सति ॥ **अवलोकित इति** ॥ बलिना दानवेन्द्रेणालोकितः साभिप्रायं दृष्टः । भार्गवः असुरगुरुः इदं स्वबुद्धिस्थं सामाजिकान् सभासदः । 'सभासदस्सभास्ताराः सभ्यास्सामाजिकाश्च ते' इत्यमरः । अनुमोदयन् अनुमानयन् सन्निदं स्वबुद्धिस्थं आचचक्षे जगाद ॥ **भो भो इति** ॥ भो भो इति निपातः सम्बोधनार्थकः आदराद्द्विरुक्तिः । 'अथ सम्बोधनार्थकाः । स्युः प्याट्पाडङ्गहेहैभो' इत्यमरः । सकलाः समस्ताः याः कलाः विद्याः तासां ये आशयाः अभिप्रायाः यानि मर्माणि गोप्यार्थाः तानि जानन्तीति तज्ज्ञाः सन्धिः मैत्र्या उभयोर्मेळनं विग्रहः द्वेषेण उभयोः कलहः तावेव योगौ जयसाधनोपायौ । 'योगस्सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः । तयोः पारङ्गामिनः पारदृश्वान इति यावत् । तथाविधा भवन्त एव नीतिपथे नीतिमार्गे स्थितानामित्यस्य गम्यनत्वादप्रयोगः । अर्थेषु प्रयोजनविषये प्रमाणं प्रमातारः ज्ञातार इति यावत् । 'प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु' इत्यमरः । सन्धिविग्रहादिस्वरूपविदां भवतां नीतिमार्गस्समीचीन इत्यनुभवगोचर एवेति भावः ॥ **यद्यपीति** ॥ अद्येदानीं सुमनसो देवाः गताः श्रियः सम्पदो येषां ते तथाभूताः दारिद्रा इति यावत् । यद्यपि असौ तेषां दारिद्रसुमनसां गुरुरुपदेष्टा मन्त्री यद्यपि नः अस्माकं सुरैर्देवैः सन्धाय सन्धिं कृत्वा साध्यं सम्पादनीयं न किञ्चित् किञ्चिदपि नास्तीत्यर्थः । अथापि दिव्यः स्वर्गवासी मुनिः मननशीलः गुरुः उदधिं समुद्रं निर्मथ्य सुधाममृतं लब्ध्वा प्राप्य वयं मिळित्वा पास्यामः पानं करिष्यामः इति रहसि एकान्ते यदाह यद्वचनमुवाच तद्वचनं किञ्चित्पर्यालोच्यं परिभावनीयं बहुषूक्तेष्विदमेकं मम सारवद्भातीति भावः ॥ **इतीति** ॥ इतीत्थंप्रकारं तद्वचनं शृण्वन्त एव श्रोतार एव वैष्णव्या मायया । मायायाः विष्णुसम्बन्धित्वे 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' इति गीतावचनं

'सन्धास्यामश्शमधनगिरा निर्व्यळीकं सुरैः प्राक्
क्षोभिष्यामो जलधिममृतं तत्र लप्स्यामहे च।
पास्यामश्चाप्यथ तदुभये यद्यमी साधवः स्युः
नैवं चेत्किं विहतमियता बाहवः क्वागमन्नः ॥ २६ ॥'

इति। ततस्साधु साध्वित्यनुमोद्यमानास्सचिवेन, प्रस्थाप्य वाचस्पतिं, प्रथमतस्सन्धास्यन्तः प्रतस्थिरे दानवाः सद्य एव मन्दरम्। पूर्णमनोरथश्च गुरुः पुनरुपावर्तमानः सन्ददर्श मन्दरमेत्य सन्ततशिवध्याननिर्धूतकल्मषान्, शिवार्चनव्रतिनः,

मानम्। मोहिताः वञ्चितास्सन्तः मुग्धाः कृतास्सन्त इत्यर्थः। सद्यः तत्क्षणादेव संमेनिरे सम्मतिं चक्रुः ॥ **आहुश्चेति** ॥ शमः अन्तरिन्द्रियनिग्रहः धनं यस्य स तथाभूतः गुरुः तस्य गीर्वाक्तया निष्क्रान्तमळीकमप्रियमनृतं वा यस्मा-त्तथाभूतं यथा तथा। 'अळीकं त्वप्रियेऽनृते' इत्यमरः। सुरैः देवैः प्राक् पूर्वं सन्धास्यामः सन्धिं करिष्यामः जलधिं समुद्रं क्षोभिष्यामः मथिष्यामः तत्र जल-धौ अमृतं सुधां लप्स्यामहे प्राप्स्यामहे च। अथ अमृतलाभानन्तरं अमी देवाः साधवः सज्जनाः स्युर्यदि भवेयुर्यदीत्यर्थः। उभये ते वयं चेत्युभये पास्यामः पानं करिष्यामः एवं साधवः न चेत् न भवेयुर्यदीत्यर्थः। इयता एतावता किं विहतं किं विगतं न किमपीत्यर्थः। हन हिंसागत्योः नपुंसके भावे क्तः। नः अस्माकं बाहवः भुजाः क्व कुत्रागमन् गताः। तदानीं ते सहृदया न भवेयुर्यदि अस्मद्भुजबलनिरस्कृतास्सन्तः इदानीमिवाश्रुतनामानो भविष्यन्तीति भावः ॥ **तत इति** ॥ ततोऽनन्तरं सचिवेन अमात्येन गुरुणा सह साधु साधु शोभनं शोभनं आदरात् द्विरुक्तिः। 'सुन्दरं रुचिरं चारु सुषमं साधु शोभनं' इत्यमरः। इतीत्थमनुमोद्यमानास्संमान्यमानास्सन्तः प्रथमतः पूर्वं वाचस्पतिं सुरगुरुं प्रस्थाप्य प्रयाणं कारयित्वेति यावत्। दानवास्सन्धास्यन्तस्सन्धिं करिष्यन्तस्सन्तः। सद्यः तत्क्षणादेव मन्दरमद्रिं प्रति प्रतस्थिरे प्रययुरित्यर्थः ॥ **पूर्णेति** ॥ पूर्णाः सफलाः मनोरथाः कामा यस्य स तथाभूतः गुरुश्च उपावर्तमानः पुनः प्रति-निवृत्तस्सन्नित्यर्थः। मन्दरमद्रिमेत्य प्राप्य शिवः परमेश्वरः तस्य ध्यानं चिन्तनं तेन निर्धूतानि विनाशितानि कल्मषाणि पापानि येषां ते तथाभूतान्। ध्यानप्रकारः कैवल्योपनिषदि। 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्। ध्या-त्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥' इत्यादिना श्रूयते। ध्यानेन पापान्निवृत्तिश्च नारदपरिव्राजकोपनिषदि। 'तस्याभिध्यानाद्योजनात्तत्व-भावाद्भूयश्चान्ते विश्वमायानिवृत्तिः। ज्ञात्वा देवं मुच्यते सर्वपाशैः क्षीणैः क्ले-शैर्जन्ममृत्युप्रहाणिः' इत्यादिना श्रूयते। शिवस्यार्चनं व्रतं चेत्युभे एषां स्त इति

शिवार्चनव्रतिनः । शिवार्चनप्रकारस्तु प्रथमाश्वासे वक्तव्योऽपि प्रसङ्गादत्रोच्यते । आदौ मृत्तिकालक्षणम् । 'श्वेता लक्ष्मीप्रदा चैव गौरी राज्यप्रदा भवेत् । रक्तायाः श्रियमाप्नोति कृष्णा वैरिविनाशिनी' इति । अथ पूजकव्यापारः शिवागमे । 'शुभेऽह्नि प्रातरुत्थाय शिवं ध्यात्वा समाहितः । गत्वोदीचीं दिशं देवीमन्त्रविन्मन्त्रमुत्तमम् ॥ नमो गणेभ्य इत्येनं प्रजपन्निश्चलान्तरः । शुद्धप्रदेशसंभूतां मृदमादाय यत्नतः । येपथामिति चानीय जपन्मन्त्रमुदीरितम् ॥ संशोध्य च जलेनाशु पिण्डीकृत्वा शनैः शनैः । पवित्रदेशे संस्थाप्य ततः स्नायाद्विधानतः ॥ नित्यं नैमित्तिकं कृत्वा विधाय सकलं पुमान् । अङ्गन्यासं ततः कुर्यान्मन्त्रैरेतैस्समाहितः ॥ ललाटे तु शिवः प्रोक्तः कण्ठे रुद्रस्समीरितः । ईशानो नाभिदेशे तु जान्वोश्शङ्कर एव च ॥ सर्वव्यापी गुल्फयोश्च पादयोस्तु सदाशिवः । एवं न्यासं पुरा कृत्वा ध्यायेद्देवं महेश्वरम् ॥ स्थितं कल्पतरोर्मूले ज्ञानमुद्रालसत्करम् । पद्मासनसमासीनं योगपट्टविराजितम् ॥ मङ्गळायतनं देवं मनोहरतराकृतिम् । उमयोपासितं श्रीमच्चन्द्रशेखरमुज्ज्वलम् ॥ ततो ध्यायेत्सहस्राणि सहस्रक इतीरयन् । एवं ध्यात्वा सुधीः कुर्यात्पञ्चाष्टैकादशाथवा ॥ लिङ्गानि मन्त्रमुच्चार्य रुद्रेभ्यो ये दिवीति च । मानस्तोकेति संप्रोक्ष्य वारिणावाहनं चरेत् ॥ ओं नमः प्रथमं ब्रूयाद्भगवत्यै ततो वदेत् । शिवपत्न्यै ततोऽनेन वामे देवीं नियोजयेत् ॥ ये पृथिव्या इति पठन्नासनादि प्रकल्पयेत् । हिरण्यबाहवे वस्त्रं भूषणं शम्भवे ततः ॥ धृष्णवे चोत्तरीयं च किरिकेभ्योपवीतकम् । गन्धं दद्यान्नमश्वभ्यः पुष्पं पार्याय मन्त्रतः ॥ नमः कपर्दिने धूपं प्रदीपं नम आशवे । बल्लुशाय च नैवेद्यं पर्ण्यायापर्णपूगकम् ॥ आरार्तिकं च तेजाऽसि एते रुचप्रदक्षिणम् । नमस्त इति नमस्कारः ॥ अथवान्यप्रकारेण पार्थिवार्चा विधीयते । अथातः संप्रवक्ष्यामि शृणु ब्रह्मन् प्रयत्नतः । पूजाविधिरहस्यन्तु शम्भुना कथितं पुरा । त्रिपुण्ड्रतिलकं कृत्वा भस्ममृच्चन्दनैरपि ॥ व्याघ्रचर्मोत्तरीयस्तु पूजां शैवीं समाचरेत् । हरो महेश्वरः शम्भुः शूलपाणिः पिनाकभृत् ॥ मृदाहरणसङ्घट्टप्रतिष्ठाह्वानमेव च । स्नपनं पूजनञ्चैव क्षमापणविसर्जनम् । ओङ्काराद्यैश्चतुर्थ्यन्तैर्नामभिस्तैरनुक्रमात् । कर्तव्यास्तास्क्रियाः सर्वा भक्त्या परमया सदा ॥ अथ ध्यानं प्रवक्ष्यामि सर्वसिद्धिप्रदायकम् । ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् । पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिणेत्रम् ॥ ध्यात्वा प्राणप्रतिष्ठां तु पूजां कृत्वा समाचरेत् । पूर्वाद्याग्नेयपर्यन्तं वामावर्तेन बुद्धिमान् ॥ अष्टमूर्त्यन्तकैरष्टनामभिस्सायमाचरेत् । पूजामावरणाख्यान्तु प्रणवाद्यैर्नमोऽन्तकैः ॥ शर्वाय क्षितिरूपाय भवाय बलमूर्तये । रुद्राय वह्निरूपाय तथोग्राय समीरयेत् ॥ वायुरूपाय भीमाय तथाकाशस्वरूपिणे । महादेवाय सोमाय ईशानायार्कमूर्तये ।

यजमानस्वरूपाय पशूनां पतये नमः । मध्ये सदाशिवायाथ कथयेत्सर्वमूर्तये ॥ यद्वा प्रासादबीजेन मूलमन्त्रेण वा सुधीः । कुर्यात्तु पार्थिवीं पूजामिति कैश्चिदुदीर्यते । ततस्तु तर्पणं कार्यं नाममन्त्रैः पृथक् पृथक् । शिवं भवं तथा चोग्रं मृडं शम्भुं तथैव च । शशिशेखरसंज्ञं च शङ्करं च विरूपकम् । नवमं विश्वरूपं च दशमं च कपर्दिनं । त्र्यम्बकं तर्पयामीति प्रणवाद्यैश्च तर्पयेत् ॥ एवं सम्पूज्य मतिमान् उपचारैः क्षमापयेत् ।' इति वचनानि शिवरहस्यस्थानि । अथ रुद्राक्षपरीक्षा । 'निकषे हेमलेखाभा यस्य लेखा प्रदृश्यते । तदक्षमुत्तमं विद्यात्तद्धार्यं शिवपूजने ॥' अथ शिवपूजाविधिः सूतसंहितायां । 'स्नात्वा शुद्धे समे देशे गोमयेनोपलेपिते । आसीनस्सर्वदा मौनी निश्चलोदङ्मुखस्सुधीः ॥ विचित्रमासनं तत्र निधाय ब्रह्मवित्तमाः । आगस्त्येन च शास्त्रेण प्रोक्तलक्षणलक्षितम् । आदाय श्रद्धया विप्राः शिवलिङ्गं समाहिताः । तत्र चावाह्य देवेशं प्रणवेन हृदि स्थितम् ॥ अर्घ्यं दत्वा मुनिश्रेष्ठाः ततः पूर्वोक्तमन्त्रतः । पाद्यमाचमनं चैव दत्वा पूर्वोक्तमन्त्रतः ॥ स्नापयित्वा महादेवमापोहिष्ठादिभिस्त्रिभिः । तथा पुरुषसूक्तेन श्रीमत्पञ्चाक्षरेण च । पुनराचमनं दत्वा प्रतिष्ठाप्यासने हरम् । दत्वा वस्त्रं मुनिश्रेष्ठ प्रणवेन समाहितः ॥ उपवीतं पुनर्दत्वा भूषणानि च सादरम् । गन्धं पुष्पं तथा धूपं दीपं चैवादरेण तु ॥ श्रीमत्पञ्चाक्षरेणैव प्रणवेन युतेन च । हविर्निवेद्य देवाय पानीयेन सहादरात् ॥ पुनराचमनं दत्वा ताम्बूलं चोपदंशकम् । माल्यं दत्वानुलेपं च प्रणम्य भुवि दण्डवत् ॥' इति । अथ क्षमापणप्रकारः । 'अपराधान् क्षमस्वेश मम शङ्कर सर्वग । स्वरूपं तव विज्ञातुं शक्यमेव न सर्वदा ॥ क्षन्तव्यं महता सर्वं विषवद्भवता खलु । क्षमाविषयभूतोऽस्मि नातः परनिवेदनम् ॥ अज्ञानाद्वा प्रमादाद्वा वैकल्यात्साधनस्य च । यन्न्यूनमतिरिक्तं वा तत्सर्वं क्षन्तुमर्हसि ॥ बालोऽहं बालबुद्धिश्च बालचन्द्रधर प्रभो । नाहं किमपि जानामि स्वतः प्रीतो भव प्रभो ॥ प्रायश्चित्तं वैदिकानां यागानामपि कर्मणाम् । शिवस्मरणमेवेति श्रुतिरप्यस्ति शङ्कर ॥' इति । प्रकृतमनुसरामः । शिवार्चनस्वरूपं किञ्चिदुक्त्वा किञ्चिच्छिवस्वरूपमुच्यते । 'दश शैवव्रतान्याहुः जाबालश्रुतिपारगाः । प्रत्यष्टम्यां प्रयत्नेन कर्तव्यं नक्तभोजनम् ॥ कालाष्टम्यां तु तस्याज्यं भोजनं यत्नपूर्वकम् ॥ अवश्यं सितभूतायां कर्तव्यं निशि भोजनम् । असितायां तु भूतायां तत्र कार्यं द्विजातिभिः ॥ एकादश्यां सितायां तु त्याज्यं भोजनमास्तिकैः । असितायां तु भोक्तव्यं रात्रावेव प्रयत्नतः ॥ शिवलिङ्गार्चनं कृत्वा स्वशक्त्या यत्नपूर्वकम् । निशि यत्नेन कर्तव्यं भोजनं सोमवासरे ॥ उपोषणादि नान्यस्मिन् दिवसे नियमो ह्ययम् । पर्वण्यपि दिने त्याज्यं भोजनं सोमवासरे ॥ किमुतान्येषु दिवसेष्विति जाबालवादिनः । ससोमा सितभूता या सार्द्रापातसमन्विता ॥ तस्यामुपोषणं कार्यं निशि जागरणं तथा । भोजनीयः प्रयत्नेन शैवो भक्तिपुरस्सरम् ॥'

**शिवार्पितप्राणान्, शिवनामकीर्तनपवित्रितमुखान्, शिवकथापारायणपरायणान्, शिवाहम्भावभावितान्, शिवाद्वैतवादकोविदान्, भस्मादिग्धतनूरुहान्, भसितत्रिपुण्ड्रमण्डितपञ्चाष्टा-**

---

इति रुद्रयामळवचनानि। शिवे परमेश्वरे अर्पिताः समर्पिताः प्राणा यैस्ते तथाभूतान्। तथोक्तं शङ्करसंहितोत्तरभागे। 'लिङ्गे प्राणं समाधाय प्राणे लिङ्गं तु शाम्भवम्। सशरीरे मनः कृत्वा न किञ्चिदपि चिन्तयेत्॥ एतत्प्राणार्पणं प्रोक्तं' इति। शिवेति यन्नाम तस्य कीर्तनमुच्चारणं तेन पवित्रितं पावितं मुखं स्वस्ववदनं येषां ते तथाभूतान्। तथोक्तं केदारखण्डे। 'शिवेति द्यक्षरं नाम त्रायते महतो भयात्। तस्माच्छिवं चिन्तयतां स्मरतां च द्विजोत्तमाः॥ किं पुनर्बहुनोक्तेन शिव इत्यक्षरद्वयम्। उच्चारयन्ति ये नित्यं ते रुद्रा नात्र संशयः॥ शिवेति द्यक्षरं नाम यैरुदीरितमुच्चकैः। ते धन्यास्ते महात्मानः कृतकृत्यास्तथैव च॥' इति। शिवसंहितायाम्। 'उच्चारयन्ति ये मर्त्याः शिवनामामृतोपमम्। ज्ञानतोऽज्ञानतो वापि नास्ति तेषामघं ध्रुवम्॥' इति। लिङ्गपुराणे च। 'हत्वा भित्त्वा च भूतानि न्यायतोऽन्यायतोऽपि वा। शिवमेकं सकृत् स्मृत्वा सर्वपापैः प्रमुच्यते॥' इति। शिवस्य कथाः त्रिपुरहननादिप्रस्तावाः तासां परायणाः मुख्याश्रया इत्यर्थः। 'अयनं निलये वर्त्मनि' इति नानार्थमाला। यद्वा शिवकथानां पारायणेषु परायणा जागरूका इत्यर्थः। शिवोऽहं शिवोऽहमिति मयूरव्यंसकादित्वात्समासः। शिवोऽहमिति भावः अभिप्रायः। 'भावोऽभिप्राय आशयः' इत्यमरः। तेन भाविताः सम्भाविता इत्यर्थः। शोधिता इति वार्थः। अथवा शिवाहम्भावे शिवाहम्भावबुद्धौ भावितान् स्थापितानित्यर्थः। णिजन्ताद्भवतेः कर्तरि क्तः। इतरानुपदिश्य तानपि शिवाहंभावे स्थापयन्तीति भावः। यद्वा शिवाहंभावस्य शिवः केवलोऽहमिति बुद्धेः भाविताः भावयन्त इत्यर्थः। विग्रहे कर्मणि षष्ठी बोध्या। सदा शिवोऽहमिति बुद्धिधारा अस्त्यन्त इति भावः। भस्मभिः दिग्धानि लिप्तानि तनूरुहाणि लोमानि येषां ते तथाभूतान्। भस्मच्छन्नत्वाद्भस्मशायित्वाच्चेति भावः। द्वितैव द्वैतम्। स्वार्थे अण्प्रत्ययः। न द्वैतमद्वैतं नञ्समासः। शिवाद्वैतं शिवस्याद्वितीयमित्यर्थः। तस्य वादः कथनम्। व्यक्तवाग्वाचकाद्वदतेर्भावे घञ्प्रत्ययः। तस्मिन् कोविदाः बुधाः। 'विद्वान् विपश्चिद्दोषज्ञस्सन् सुधीः कोविदो बुधः' इत्यमरः। तथाभूतान् त्र्यवयवाश्च ते पुण्ड्राश्चेति शाकपार्थिवादित्वात्समासः। ततः भसितेन त्रिपुण्ड्रा इति तत्पुरुषः। रेखात्रयसमुदायः पुण्ड्रशब्देन विवक्षितः। 'पुण्ड्रोदकेक्षुतिलकभेदक्रिम्यतिमुक्तयोः' इति नानार्थमाला। तैः मण्डितानि भूषितानि यानि पञ्चाष्टादिस्थानानि तैर्मनोहरान् दर्शनीयाः तथाभूतान्। अत्र त्रिपुण्ड्रशब्दस्य शाकपार्थिवादित्वानाश्रयणे तद्धितार्थेत्यादिना समाहारसमासे अकारान्तोत्तरपदत्वेन द्विगोरितीकारे त्रि-

दिस्थानमनोहरान्, प्रालम्बिजटाजूटवलयावलम्बितशकुनि-कुलनादशकुनावेदितसंनिहितशाम्भवप्रसादान्, शुद्धाध्ववर्तिनो विज्ञानकलमानिव शुनासीरमुखान् बर्हिर्मुखान्।

आख्याय निखिलं वृत्तमाशयं च विरोधिनाम्।
आदितेयान् स दैतेयैः सन्धातुं समनीनहत्॥ २७॥

---

पुण्ड्रीति स्यात्। अत एव द्विगोर्लुगनपत्य इत्यत्र त्र्यवयवा विद्या त्रिविद्या तामधीते त्रैविद्यः न तु तिस्रो विद्या अधीते इत्यणप्रत्ययः। ताद्धितार्थेत्यादिना समासः। अत एव भाष्यकारः अत्र अणप्रत्ययस्य लुगभावे इत्याह। भस्मधारणप्रकारः भस्मधारणस्थानानि च शङ्करसंहितायामुपरिभागे। 'ध्यायेच्छिवं जलाध्यक्षं ओमापस्सर्वमित्यपि। शङ्करं भस्मनि तथा श्रीमत्पञ्चाक्षरेण तु॥ भस्मस्नानं ततः कुर्याज्जन्मकर्मनिवृत्तये। अग्निरित्यादिभिर्मन्त्रैस्सद्योजातादिमन्त्रतः। सर्वाङ्गोद्धूळनं कुर्यादापादतलमस्तकम्। भर्त्सनात्सर्वपापानां भामनात्परमात्मनः। भस्मेति गीयते सद्भिर्वेदान्तेष्वागमेषु च। त्रिपुण्ड्रं धारयेत्पश्चाद्भस्मना सजलेन च॥ श्रीमत्पञ्चाक्षरेणैव मन्त्रैरभिष्षडाननः। ललाटे भगवान् ब्रह्मा हृदये हव्यवाहनः॥ नाभौ स्कन्दो गळे पूषा बाहुमूले तु दक्षिणे। रुद्रादित्यास्तथा मध्ये मणिबन्धे शचीपतिः॥ वामनो वामभागे तु मध्ये चैव प्रभञ्जनः। वासवो मणिबन्धे तु पृष्ठदेशे हरस्स्वयम्॥ शिरस्यात्मा महादेव परमात्मेति विश्रुतः। त्रिपुण्ड्रधारणं कृत्वा' इत्यादिना प्रदर्शितानि। प्रालम्बिभ्यो लम्बमानाः या जटाः मूलापरपर्यायाः न्यग्रोधादिवृक्षेषु शाखाधोभागे डोलारज्जुवल्लम्बमानाः। 'अत्युत्कर्षाश्रयः कोटयो मूले लग्नकचे जटा' इत्यमरः। तासां जूटाः सङ्घाताः तेषां ये वलयाः मण्डलानि तानवलम्बिता आश्रिताः। कर्तरि क्तः। ये शकुनाः पक्षिणः तेषां निनादाः ध्वनय एव शकुनानि भाविशुभसूचकोपश्रुत्यादीनि तैरावेदिताः परिज्ञापिताः शाम्भवाः शम्भुसम्बन्धिनः प्रसादा अनुग्रह येषां ते तथाभूतान्। शुद्धानां सतामध्वानो मार्गास्तेषु वर्तितुं शीलं येषां ते तथाभूतान्। विज्ञानानि शिल्पानि शास्त्राणि आगराः निधयः। 'विज्ञानं शिल्प शास्त्रयोः' इत्यमरः। विज्ञानकलमानिति पाठे विज्ञानस्य ध्यानादिलक्षणस्य कलमाः शालयः ता इव स्थिता इत्यर्थः। तान् शुनासीरमुखान् इन्द्रादीन् बर्हिर्मुखा देवाः। 'बर्हिर्मुखाः क्रतुभुजः' इत्यमरः। तान् सन्ददर्श दृष्टवान्। अथ गुरुर्मन्दं प्राप्य किं कृतवानिति चेदत आह॥ **आख्यायेति**॥ स बृहस्पतिः अखिल समस्तं वृत्तं निष्पन्नार्थं विरोधिनां प्रतिपन्थिनामाशयं अभिप्रायं च आख्याय उक्त्वा आदितेयाः देवाः। कृदिकारादक्तिन इति ङीषन्तादादितिशब्दात् स्त्रीभ्यो ढगिति ढक्प्रत्ययः। तान् दैतेयाः दानवाः। पूर्ववत् ढक्प्रत्ययः। तैस्सह स

ततो महता बलेन महता सन्नाहेन महता चावधानेन सन्धातुमागतास्सर्वेऽपि दानवाः, प्रकृतिकुटिला अपि परिणततपोविशेषेण परिक्षीणकल्मषतया दुर्दर्शान् मध्याह्नभास्करानिव, दुरासदान् युगान्तपावकानिव, विस्रम्भणीयान् विश्वसृज इव, पुनः पुनर्दर्शनीयान् पूर्णसुधाकरानिव, संलक्ष्य गीर्वाणान्, सन्त्यज्य दुर्विशङ्कितानि, प्रतिषिध्यानुयात्रिकान्, परिहृत्य शस्त्रास्त्राणि, निर्मलेन मनसा निरन्तरं परिरेभिरे। संक्रन्दनोऽपि यथान्यायं समागम्य दानवैः, अभिवन्द्य पुरोधसं भार्गवं, अनुमतो वाचस्पतिना, किरन्निव सुधारसं, किञ्चिदिदमाचचक्षे।

---

न्धातुं सन्धिं कर्तुं समनीनहत् सन्नाहयामासेत्यर्थः। बृहस्पतिप्रस्थानानन्तरं दानवाः किं कृतवन्त इति चेदत आह ॥ **तत इति** ॥ ततो बृहस्पतिप्रस्थानानन्तरं महता अधिकेन बलेन मूलभृत्यसुहृच्छ्रेणीविद्वदाटविकाख्यषाड्विधसैन्येनेत्यर्थः। 'स्थौल्यसामर्थ्यसैन्येषु बलं नाकाकसीरिणोः' इत्यमरः। महता सन्नाहेन प्रयत्नेन महतावधानेन ऐकाग्र्येण च सन्धातुं सन्धिं कर्तुं आगता आयाताः सर्वेऽपि दानवाः असुराः प्रकृतिः स्वभावः। 'प्रकृतिः पञ्चभूतेषु स्वभावे सचिवादिषु' इति नानार्थमाला। तया कुटिला वक्रा अपि परिणतानि परिपक्वानि फलाभिमुखानीति यावत्। यानि तपांसि तेषां विशेषेण अभिव्यक्त्या। 'विशेषोऽवयवे व्यक्तौ' इति नानार्थमाला। अथवा विशेषोऽतिशयः तेन परिक्षीणानि विनष्टानि कल्मषाणि कालुष्याणि येषां तेषां भावस्तत्ता तया। दुर्दर्शान् दुःखेन द्रष्टुं शक्यानित्यर्थः। ईषद्दुस्सुषु कृच्छ्राकृच्छार्थेषु खलिति खल्प्रत्ययः। अत एव मध्याह्नः अह्नो मध्यभागः तस्मिन् समये ये भास्कराः तानिव स्थितान्। दुरासदान् दुरधिगमान् युगान्ते येऽग्नयः तानिव स्थितान्। विस्रम्भयितुं विश्वसितुं योग्याः विस्रम्भणीयाः तथाभूतान् विश्वसृजः नवप्रजापतीनिव स्थितान्। 'विधाता विश्वसृड्विधिः' इत्यमरः। पुनः पुनः द्रष्टुं योग्याः दर्शनीयाः तथाभूतान् पूर्णसुधाकरान् पूर्णचन्द्रानिव स्थितान् गीर्वाणान् संलक्ष्य दृष्ट्वा दुर्विशङ्कितानि दुरध्यवसायान् सन्त्यज्य त्यक्त्वा अनुयातृकाननुचरान् प्रतिषिध्य निरुध्य अन्यत्र स्थापयित्वेति भावः। शस्त्राणि परिहृत्य विसृज्य निर्मलेन द्वेषादिलक्षणमलरहितेन मनसा अन्तःकरणेन उपलक्षिताः निरन्तरमनवकाशं यथा तथा परिरेभिरे आलिलिङ्गुरित्यर्थः॥ **संक्रन्दन इति** ॥ सङ्क्रन्दनः इन्द्रः यथान्यायं न्यायः सम्प्रदायः तमनतिक्रम्येत्यर्थः। दानवैस्समागम्य मिळित्वा पुरोधसं पुरोहितं भार्गवं शुक्रं अभिवन्द्य नमस्कृत्य वाचस्पतिना

'साफल्यं तपसामिदं सुमहतां साफल्यमक्ष्णामिदं
साफल्यं पितुराशिषामिदमिदं साफल्यमस्यायुषः ।
श्रीमत्काश्यपतातपादचरणस्थानोचितैर्भ्रातृभिः
ज्यायोभिर्यदहं विरोचनमुखैर्वात्सल्यपात्रीकृतः ॥ २८ ॥

अपि च ।

आराद्धा ननु यूयमेव गुरवस्त्रैलोक्यराज्यार्पणात्
आराद्धा गुरुभार्गवप्रभृतयो ब्रह्मर्षयश्शाक्तितः ।
किं कर्तव्यमितोऽपि केवलमिह श्रान्तोऽस्मि शान्तोऽस्मि च
प्राप्तुं तत्परमामृतं यदि भवत्याज्ञा यतिष्ये सुखम् ॥ २९ ॥'

गुरुणा अनुमतः कृतसम्मतिस्सन्नित्यर्थः । सुधारसं अमृतरसं किरन् आकिरन्निव किञ्चिदिदं वचनं आचचक्षे आचख्यौ । अथासुरान् प्रति इन्द्रः किमाख्यातवानिति चेदत आह ॥ **साफल्यमिति** ॥ श्रीमान्यः काश्यप एव तातपादोऽस्मद्गुरुः तस्य यच्चरणस्थानं तस्योचितैरर्हैः । 'पितृसमो ज्येष्ठ' इति न्यायादिति भावः । ज्यायोभिरग्रजैः । 'वर्षीयान् दशमी ज्यायान् पूर्वजस्त्वग्रजोऽग्रजः' इत्यमरः । विरोचनमुखैः विरोचनादिभिः भ्रातृभिस्सोदरैः अहमिन्द्रः वात्सल्यस्य प्रेम्णः पात्रीकृतः भाजनीकृत इति यत् तदिदं सुमहतामत्यधिकानां तपसां अस्मदनुष्ठितकृच्छ्रचान्द्रायणादीनां साफल्यं सफलत्वं फलमिति यावत् । इदमक्ष्णां सहस्रसङ्ख्यानामपीति शेषः । पितुः काश्यपस्य या आशिषः शुभवाचः अभिलाषा वा । 'आशीरुरगदंष्ट्रायां शुभवागभिलाषयोः' इति नानार्थमाला । 'आशीर्हिताशंसाहिदंष्ट्रयोः' इत्यमरश्च । इदं साफल्यं इदमस्य आयुषः जीवितकालस्य । 'आयुर्जीवितकालो ना जीवातुर्जीवनौषधं' इत्यमरः । साफल्यं सफलत्वमिति यावत् । 'एति जीवन्तमानन्दो नरं वर्षशतादपि' इति न्यायादिति भावः । यद्यप्यत्र सोदरप्रेमभाजनीभवनं तपआदीनां न फलं तथापि तस्य उद्देश्यत्वकृच्छ्रसाध्यत्वादिधर्मसम्बन्धनिमित्त तपआदिफलत्वोत्प्रेक्षणात्फलोत्प्रेक्षालङ्कारः । स च व्यञ्जकाप्रयोगाद्गम्यः ॥ **आराद्धा इति** ॥ ननु भो बलिप्रमुखाः भ्रातर इत्यर्थः । 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यमरः । त्रिलोका एव त्रैलोक्यं तस्य यद्राज्यं राजभावः तस्यार्पणात् भवदधीनकरणाद्गुरवः यूयं ज्येष्ठभ्रातृत्वात्तेषां गुरुत्वमिति भावः । आराद्धाः पूजिता वा । राधतेरनुदात्तत्वादिडागमाभावः । शक्तितः गुरुभार्गवप्रभृतयः गुरुशुक्रादयः ब्रह्मर्षयः आराद्धाः पूजिता एव । यथाशक्ति तानपि पूजितवानस्मि नमस्कारवन्दनादिभिरिति भावः । इहेदानीमितोऽन्यत् केवलं किं कर्तव्यं कोऽपि कर्तव्यांशः नावशिष्ट इति भावः । श्रान्तः श्रमवानस्मि तपआदिकं कृत्वेति भावः । शा-

इति वदन्तं भ्रातरमिन्द्रमिदमाहुरसुरेश्वराः 'मैवमाखण्डल मैवम् ।

त्वमसि शतक्रतुस्त्वमसि नीतिपथे कुशलः
त्वमसि दयास्पदं भगवतः प्रमथाधिपतेः ।
अपि खलु बालकेन भवता भवता मघवन्
निखिलमनाकुलं कुलमिदं प्रतितिष्ठते नः ॥ ३० ॥

व्यापृते त्वयि तपसि राज्यमिदं व्याकुलीभवेदिति संरक्ष्यतेऽस्माभिरनियुक्तैरपि साह्यमेवानुचिन्त्य भवतः ।

एकेन विधृतं राज्यमियन्तो वयमीदृशाः ।
निर्वहन्तोऽद्य जानीमो नैपुण्यं वत्स तावकम् ॥ ३१ ॥

---

न्तोऽस्मि निगृहीतान्तरिन्द्रियश्चास्मि सर्वत्र तुच्छबुद्धयेति भावः। तत्तादृशं परममुत्कृष्टं अमृतं सुखं प्राप्तुं आज्ञा निदेशः यदि भवति स्याच्चेदिति तात्पर्यार्थः। सुखमनायासं यथा तथा यतिष्ये यत्नं करिष्ये ॥ **इतीति** ॥ इतीत्थं वदन्तमाभाषमाणं इन्द्रं प्रति असुरेश्वराः दानवश्रेष्ठाः आहुरूचुरित्यर्थः ॥ **मैवमिति** ॥ हे आखण्डल मैवं मैवं एवं मा वक्तव्यमित्यर्थः ॥ **त्वमिति** ॥ त्वं शतं क्रतवो यागा यस्य स तथाभूतः। 'सप्ततन्तुर्मखः क्रतुः' इत्यमरः। असि भवसीत्यर्थः। त्वं नीतिः नयः। 'नीतिस्स्यात् प्रापणे नये' इति नानार्थमाला। तस्याः पन्थाः मार्गः तस्मिन् कुशलः शिक्षितः। 'पर्याप्तिक्षेमपुण्येषु कुशलं शिक्षिते त्रिषु' इत्यमरः। असि त्वं भगवतः षड्गुणशालिनः प्रमथानामधिपतेः परमेश्वरस्य दयायाः कृपायाः आस्पदं भाजनमसि। आस्पदं प्रतिष्ठायामिति निपातनात्साधुः। तत्र शिवपूजाधुरन्धरत्वादिति भावः। हे मघवन् इन्द्र बाल एव बालकः। अनुकम्पायां कन्प्रत्ययः। 'बालस्तु स्यान्माणवको वयस्स्थस्तरुणो युवा' इत्यमरः। तेन भवता त्वया नोऽस्माकं इदं कुलं अन्वयः अनाकुलमव्याकुलं सत् प्रतितिष्ठति प्रतिष्ठामाप्नोति। एकेन सुपुत्रेण भवतैवास्मदीयं निखिलं कुलं शोभत इति भावः ॥ **व्यापृत इति** ॥ त्वयि तपसि विषये व्यापृते उद्युक्ते सति इदं राज्यं सौवर्गराज्यमित्यर्थः। व्याकुलीभवेत् पर्याकुलं स्यात्। इति मत्वेति शेषः। भवतस्तव साह्यं सहायकमनुचिन्त्य पर्यालोच्य अस्माभिस्संरक्ष्यते पाल्यते। न तु भवतो राज्यापजिहीर्षयेति भावः ॥ **एकेनेति** ॥ हे वत्स इन्द्र एकेन असहायेन त्वयेति शेषः। विधृतं निर्व्यूढं इदं राज्यं राज्ञः कर्म इयन्तः बहव इति भावः। ईदृशाः सहस्रबाहुत्वादिविशिष्टाः। निर्वहन्तः निर्वाहं कुर्वन्तः वयं तावकं त्वदीयं नैपुण्यं

अमृतं यदि भोक्तव्यमनुमन्यामहेतराम् ।
संविभज्यैव तद्भोज्यं न निर्भज्येति नो मतिः ॥ ३२ ॥

तदाख्यातु भवानर्णवमथनोपायमादिष्टं नारायणेन' इत्यनुयुञ्जानेषु दानवेषु, यथाश्रुतमाख्याय पुरन्दरस्तमेव मन्दरमुत्पाट्य सागरे निपातयितुमुत्साहयामास बलिम् । ततः 'कियदेतदुत्पाटनं नाम गिरेः, विधमामो मुखमारुतेन, विक्षिपामोऽङ्गुलिस्फोटेन, समुद्धरामो वामहस्तेन, संक्रमयामस्सायकेनैकेन' इति बलोत्सेकादुच्चावचं गर्जत्सु दानवेषु, बलिरिदमवादीत् । 'हन्त कथमर्भका इव यूयमकृतप्रज्ञा इव निरंकुशं प्रतिजानीध्वे ।

---

चातुर्थं अद्य जानीमः विद्मः ॥ **अमृतमिति** ॥ अमृतं पीयूषं भोक्तव्यं यदि अमृताशनं कार्यं यदीति तात्पर्यार्थः । अनुमन्यामहेतरां अनुमतिं कुर्महे । तदमृतं संविभज्यैव संविभागं कृत्वैवेत्यर्थः । भोज्यं भोजनं कार्यं निर्भज्य भागमकृत्वा । 'निर्निश्चयनिषेधयोः' इत्यमरः । न भोज्यमित्यन्वयः । यदि न विभज्येति पाठः तदेकं पदम् । अर्थः प्राग्वत् । इतीत्थं नोऽस्माकं मतिर्निश्चयः ॥ **तदिति** ॥ तत्तस्मान्नारायणः वासुदेवः तेनादिष्टमुपदिष्टं अर्णवस्य समुद्रस्य यन्मथनं विलोडनं तस्मिन्नुपायं साधनं भवानाख्यातु ब्रूहीत्यर्थः । भवद्योगान्न मध्यमः । इतीत्थं दानवेष्वसुरेषु अनुयुञ्जानेषु पृच्छत्सु सत्सु पुरन्दरः इन्द्रः यथाश्रुतं श्रुतमनतिक्रम्य आख्याय उक्त्वा तं मन्दरमद्रिमेव उत्पाट्य उत्पाटनं कृत्वा सागरे अर्णवे पातयितुं निपातयितुं बलिमसुरराजं उत्साहयामास उत्साहवन्तं चकारेत्यर्थः ॥ **तत इति** ॥ ततः नारायणादेशोपदेशश्रवणानन्तरं दानवेष्वसुरेषु गिरेर्मन्दरस्य उत्पाटनं उत्खननं नामैतदिदं कियत् किं महागुर्विति भावः । मुखमारुतेन विधमामः ध्मानं कुर्मः । यथा हस्तस्थं भस्मसञ्चयं मुखवायुना उत्पतन्तं कुर्मः तथैतमद्रिं मुखमारुताध्मानेन उत्पतन्तं कुर्म इति भावः । अङ्गुल्याः स्फोटेन शब्देन विक्षिपामः । वामहस्तेन सव्यकरेण । 'वामं शरीरे सव्यं स्यादपसव्यं तु दक्षिणं' इत्यमरः । समुद्धरामः उत्पाटयामः एकेन सायकेन बाणेन सङ्क्रमयामः प्रापयामः । सर्वत्र मन्दराद्रेः कर्मतया गम्यमानत्वात्तद्वाचकपदस्याप्रयोगः । इतीत्थं बलोत्सेकात् बलदर्पादित्यर्थः । उच्चावचं अनेकप्रकारम् । 'उच्चावचं नैकभेदं' इत्यमरः । गर्जत्सु नदत्सु सत्सु बलिरसुरेन्द्रः इदं स्वबुद्धिस्थं अवादीदभाणीत् । व्यक्तवाग्वाचकाद्वदतेर्लुङि वदव्रजेत्यादिना वृद्धिः ॥ **हन्तेति** ॥ यूयं अर्भकाः शिशव इव युक्तायुक्तापरिज्ञानादिति भावः । अकृतप्रज्ञा अशिक्षितबुद्धय इव शक्याशक्यापरिज्ञानादिति भावः ।

विंशत्यापि भुजैः पुरा गिरिवरं विक्षोभयन् शूलिनः
पादाङ्गुष्ठनखाग्रयन्त्रणदळद्दोस्सन्धिबन्धाश्चिरम् ।
क्रोशंक्रोशमवाप वार्षिकनिशामण्डूकवद्यः श्रमं
युष्माभिश्श्रुतिगोचरं न गमितश्शङ्के स लङ्केश्वरः ॥ ३३ ॥
अपि द्रष्टुमशक्यो यः सिद्धैरपि महर्षिभिः ।
विना शम्भोः प्रसादेन कथमुत्पाटयेम तम् ॥ ३४ ॥

तदद्य वयं सर्वे प्रपद्य भगवन्तमुमाकान्तं, प्रसाद्य वाङ्मनःकायैः, प्रार्थयेमहि प्रार्थनीयं' इति । ततस्साधु साध्वित्यभिनन्द्यमाना भार्गवाङ्गिरसाभ्यामन्योन्यकृतसंविदो देवा-

कथं प्रतिजानीध्वे प्रतिज्ञां कुरुथेत्यर्थः । हन्तेति विषादादौ । 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः' इत्यमरः ॥ **विंशतीति** ॥ पुरा पूर्वं यः रावणः विंशत्या विंशतिसङ्ख्याकैः भुजैः बाहुभिरपि । 'विंशत्याद्यास्सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः' इत्यभिधानाद्विंशतिशब्दस्य अत्रैकवचनान्ततया निर्देशः । गिरिवरं कैलासाद्रिं विक्षोभयन् अत एव क्षुभधातोर्विपूर्वाच्चलनार्थकाण्णिजन्ताल्लटश्शत्रादेशः शूलिनः परमेश्वरस्य पादाङ्गुष्ठं पादस्थूलाङ्गुलिः तस्य यन्नखाग्रं तस्य यद्यन्त्रणं दृढं स्थापनं तेन दळन्तः त्रुट्यन्तः दोष्णां बाहूनाम् । 'भुजबाहू प्रवेष्टो दोः' इत्यमरः । ये सन्धयः जत्रूणि । 'स्कन्धो भुजशिरोंऽसोऽस्त्री सन्धी तस्यैव जत्रुणी' इत्यमरः । बन्धाः प्रथनानि यस्य स तथाभूतः अत एव चिरं बहुकालं वार्षिक्यो वर्षाकालसम्बन्धिन्यः या निशा रात्रयः । स्त्रियाः पुंवदित्यादिना पुंवद्भावः । तासु यो मण्डूकः भेकः । 'भेके मण्डूकवर्षाभूः' इत्यमरः । तेन तुल्यं तद्वत् । क्रोशंक्रोशं रुदित्वा रुदित्वा रुत्वा रुत्वेति वार्थः । क्रुश आह्वाने रोदने चेति धातोर्णमुल्प्रत्ययः द्विर्भावश्च । श्रममायासमवाप प्राप । स लङ्काया ईश्वरो रावणः युष्माभिः श्रुतिगोचरं श्रवणदेशं न गमितः न प्रापितः किमित्यर्थः ॥ **अपीति** ॥ सिद्धैर्महर्षिभिरपि यः मन्दराद्रिः द्रष्टुमपि दृग्विषयीकर्तुमपीत्यर्थः । अशक्यः अलभ्य इति तात्पर्यार्थः । शम्भोः प्रसादेन अनुग्रहेण विना तमद्रिं कथमुत्पाटयेम उत्खननं कुर्म इत्यर्थः ॥ **तदिति** ॥ तत्तस्मात् सर्वे वयं भगवन्तमुमाकान्तं पार्वतीपतिं प्रपद्य सेवित्वा प्रसाद्य प्रसादयित्वा अनुग्रहं लब्ध्वेति यावत् । वाङ्मनःकायैः मनसा वाचा कायेन चेत्यर्थः । प्रार्थनीयमभ्यर्थनीयं प्रार्थयेम याचामहे इत्यर्थः ॥ **तत इति** ॥ ततः उक्तरीत्या समयबन्धानन्तरं भार्गवाङ्गिरसाभ्यां शुक्रबृहस्पतिभ्यां साधु साधु द्विर्भाव आदरार्थः । 'चारु सुषमं साधु शोभनं' इत्यमरः । इत्यनुमन्यमानास्संमन्यमानाः अन्योन्यं परस्परं कृताः बद्धाः संविदः प्रतिज्ञा येषां ते तथाभूताः । 'संविदागूः प्रतिज्ञानं' इत्यमरः ।

सुराः, प्रतिपद्य मन्दरं शैलं, प्रणिधाय मनांसि, वर्तमानाः कठोरे तपसि, वाग्भिरस्तुवन्नित्थमम्बिकारमणम् ।

'युगविगमोन्मिषद्विषमलोचनकोणपत-
हुतवहविस्फुलिङ्गहुतसर्वजगद्धविषे ।
अचलधनुर्धराय हरिणाङ्कशिखामणये
विजयजयैकहेतुविशिखाय नमो भवते ॥ ३५ ॥
शिवं ध्यायस्यन्तस्सकलजगतां यच्छसि शिवं
शिवोऽसि त्वं नाम्ना ननु शिवतरश्चासि विदितः ।

---

यद्यपि कोशे संविच्छब्दः प्रतिज्ञापरतया निर्दिष्टः तथापि तस्यैव हलन्तस्यात्र वष्टि भागुरिरित्यादिना आबन्ततामाश्रित्य प्रयोगः कृत इति बोध्यम् । मन्दरं प्रतिपद्य आश्रित्य मनांसि प्रणिधाय निगृह्य कठोरे दुष्करे तपसि अनशनव्रतादौ वर्तमानाः देवासुराः इत्थं वक्ष्यमाणप्रकारं अम्बिकायाः पार्वत्याः रमणं प्रियं परशिवं अस्तुवन् स्तुतिं चक्रुः । तं प्रकारमेवाह ॥ **युगविगमेति** ॥ युगानां कृतादीनां विगमः अवसानं नैमित्तिकप्रळय इति यावत् । अस्य दैनन्दिनप्रळय इति नामान्तरं । अत्र प्रळये मानं तु । 'एष नैमित्तिकः प्रोक्तः प्रळयो यत्र विश्वसृट् । शेतेऽनन्तासने नित्यमात्मसात्कृत्य चात्मभूः' इति वचनम् । तत्समये उन्मिषद्विकसद्विषमलोचनं तृतीयनयनं उन्मीलितफालनेत्रमिति समुदिततात्पर्यार्थः । तस्य कोणमेकदेशः तस्मात्पतन् निपतन् यः हुतवहः प्रळयाग्निरिति यावत् । तस्य विस्फुलिङ्गाः कणाः । 'त्रिषु स्फुलिङ्गोऽग्निकणः' इत्यमरः । तेषु हुतं हवनं कृतं सर्वं स्थावरजङ्गमात्मकं जगदेव हविः चरुपुरोडाशस्थानीयं यस्य स तथाभूतः तस्मै । अचलो मेरुः स एव धनुः तस्य धराय धर्त्रे । विजयः अर्जुनः । 'विजयो जयपार्थयोः' इति नानार्थमाला । 'बीभत्सुर्विजयः कृष्णः' इति स्मरणाच्च । तस्य जयः शत्रुनिग्रहराज्यलाभादिरूपः तस्य एकहेतुः मुख्यकारणं वासुदेवः । 'मयैव ते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्' इति शास्त्रादिति भावः । स वासुदेवः विशिखो बाणः यस्य स तथाभूतः तस्मै हरिणाङ्कः मृगाङ्कश्चन्द्र इति यावत् । स शिखामणिः शिरोमणिः यस्य स तथाभूताय भवते तुभ्यं नमः अस्तु । मेरुधन्वत्वं हरिशरत्वं च परमेश्वरस्यास्तीत्युक्तं जैमिनिना वेदपादस्तवे । 'रथो भूर्ज्या फणी शौरिः शरश्चापो गिरिर्हयः । त्रयी रथाङ्गे चन्द्रार्कौ ब्रह्मा भवति सारथिः' इति ॥ **शिवमिति** ॥ अन्तः हृदये सकलानि समस्तानि यानि जगन्ति लोकाः । 'लोकोऽयं विष्टपं जगत्' इत्यमरः । तेषां शिवं मङ्गळम् । 'श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गळं शुभं' इत्यमरः । ध्यायसि चिन्तयसि । 'शिवस्तु करुणासिन्धुः ध्यायन्नास्ते

शिवार्थी जन्तुस्तच्छिवमखिलभावेन भगवन्
भवन्तं हित्वान्यं शरणयतु कं न्यायशरणः ॥ ३६ ॥

तदिदानीम् ।

मन्दिरं क्षाळयन्तस्तेऽमन्दरं दुग्धसागरे ।
अमृतं लब्धुमिच्छामस्तद्भवाननुमन्यताम् ॥ ३७ ॥' इति ।

ततस्तथा कुरुतेति घनस्तनितगम्भीरया गिरा गगनसम्भवया सन्तोषितास्सन्तोऽसुराः सुराश्च समनह्यन् ।

विनिघ्नन्तः पादैरथ विचलयन्तः करतलैः
उदस्यन्तो दण्डैरुपरि च किरन्तस्तामिषुभिः ।

---

जगच्छिवं' इत्यादिप्रसिद्धेरिति भावः । शिवं मङ्गळं यच्छसि ददासि भक्तेभ्य इति शेषः । पाघ्राध्मेत्यादिना दाण्धातोर्यच्छादेशः लटि सिप्शपौ इति बोध्यम् । तथा शिवरहस्ये 'सद्यः फलप्रदं पुण्यं मङ्गळं मङ्गळप्रदं । दुष्टग्रहोपशमनं सर्वपातकनाशनं ॥ सर्वदुःखप्रशमनं समस्ताघविनाशनं ।' इत्युक्तम् । त्वं भवान् नाम्ना नामधेयेन शिवः असि भवसि 'नमश्शिवाय च' इति श्रुतेः । तथा शिवतरः अतिशयेन शिवश्च विदितोऽसि प्रसिद्धो भवसि 'शिवतराय च' इति श्रुतेः । तत्तस्मात् हे भगवन् शिवार्थी शुभापेक्षी जन्तुः प्राणी । 'प्राणी तु चेतनो जन्मी जन्तुः' इत्यमरः । अखिलभावेन सर्वात्मना । 'भावस्सत्ता स्वभावाभिप्रायचेष्टात्मजन्मसु' इत्यमरः । शिवं महादेवं । 'शिवो मोक्षे महादेवे कीलके ग्रहयोगयोः । बालके गुग्गुले वेदे पुण्डरीकद्रुमेषु च ॥ सुखे क्षेमेऽचले क्लीबं' इति धनञ्जयः । भवन्तं त्वां हित्वा त्यक्त्वा न्यायः युक्तायुक्तविचारः स एव शरणं रक्षकं यस्य स तथाभूतः पुमान् । 'शरणं गृहरक्षित्रोः' इत्यमरः । अन्यं शिवातिरिक्तं कं देवं शरणयतु रक्षितारं कुर्यादित्यर्थः । रक्षकवाचकाच्छरणशब्दात्तत्करोतीति णिचि लोटि रूपम् । यस्य शिवनामापि अस्ति तं प्राप्य कः शिवं न प्राप्नुयादिति भावः । अथ मुख्यमीप्सितार्थं प्रार्थयन्ति ॥ **मन्दिरमिति** ॥ हे भगवन्निति शेषः । ते मन्दिरं सदनीभूतं मन्दरमद्रिं दुग्धार्णवे क्षाळयन्तः क्षाळनं कुर्वन्तस्सन्तः तमद्रिं मन्थदण्डं कृत्वा तेन मन्थने कृते तत्र सोऽद्रिः क्षाळित एव भवतीति भावः । अमृतं सुधाम् । 'पीयूषममृतं सुधा' इत्यमरः । लब्धुं प्राप्तुमिच्छामः प्रार्थयामः इति यत् तत् प्रार्थनं अनुमन्यतां संमन्यतां इत्येवमस्त्विति पूर्वेणान्वयः । **यथेति** ॥ घनस्तनितं मेघध्वनिः तद्वद्गम्भीरया त्वरानुत्पन्नयेति प्राकरणिकार्थः । गगनादाकाशात् संभवया संभूतया यथातथा यथारुचीति तात्पर्यार्थः । कुरुत कुरुध्वमिति गिरा वाचा सन्तोषिताः हर्षं प्रापितास्सन्तः असुरास्सुराः देवासुराः समनह्यन् सन्नाहं चक्रुरित्यर्थः ॥ **विनिघ्नन्निति** ॥ अथाकाशवाणीश्रवणानन्तरं ते

निषेदुश्श्रान्तास्ते यदपि च विषेदुर्दनुभुवो
निमित्तं दुष्टं तन्निखिलमुशना तेषु जगृहे ॥ ३८ ॥

अथ प्रतीक्षमाणश्चरलग्नमाचार्यो दिवौकसां 'संवर्तोचितं रूपमालम्ब्य सर्वतो वाहि' इति सन्दिदेश गन्धवाहम् ।

अथ दिवसावसान इव पद्मभुवः पवनः
स्वयमकृत क्षणादिव विदिक्षु च दिक्षु चरन् ।
अलघुविघूर्णितार्णवसमुक्षितकुक्षितल-
क्षितिवलयार्द्रताशिथिलमूलमहार्यकुलम् ॥ ३९ ॥

दनुभुवः असुराः तं मन्दराद्रिं पादैश्चरणैः विनिघ्नन्तः आभिमुख्येनागत्य प्रहरन्त इत्यर्थः । करतलैः विचलयन्तः आमूलं आशृङ्गं लोलं कुर्वन्तः । चलशब्दात्तत्करोतीति णिजन्ताल्लटश्शत्रादेशः । दण्डैः उदस्यन्तः उत्क्षिपन्तः उपरि इषुभिः बाणैः किरन्तः प्रहरन्त इति तात्पर्यार्थः । वर्षन्त इति वा । अत एव श्रान्ताः श्रान्तिमन्तः । अर्श आदिभ्योऽजित्यच्प्रत्ययः । तथाभूतास्सन्तः निषेदुः तस्थुरिति यत् । अपि च विषेदुः विषण्णा बभूवुरिति यत् तदुभयं उशना शुक्रः । 'उशना भार्गवः कविः' इत्यमरः । तेषु दानवेषु विषये दुष्टं निमित्तमिति भाव्यमृतालाभसूचकदुश्शकुनमिति जगृहे जज्ञे ॥ **अथेति** ॥ अथ दानवश्रान्त्युपवेशानन्तरं चरसंज्ञकं लग्नं चरलग्नं 'राशीनामुदयो लग्नं ते तु मेषवृषादयः' इत्यमरः । चरस्थिरद्विस्वभावभेदेन लग्नत्रैविध्यं ज्योतिश्शास्त्रसिद्धम् । प्रतीक्षमाणः प्रतीक्षां कुर्वन्नित्यर्थः । दिवौकसां देवानामाचार्यो गुरुः । 'बृहस्पतिः सुराचार्यः' इत्यमरः । संवर्तः प्रळयकालः तस्योचितमर्हं । 'संवर्तः प्रलयः कल्पः क्षयः । कल्पान्त इत्यपि' इत्यमरः । रूपं स्वभावं । 'रूपं स्वभावे शुक्लादौ' इति नानार्थमाला । आलम्ब्याश्रित्य सर्वतः परितः वाहि संचरेत्यर्थः । वा गतिगन्धनयोरिति धातुः । इति इत्थं गन्धवाहं वायुं । 'गन्धवाहानिलाशुगाः' इत्यमरः । सन्दिदेश आदिदेशेत्यर्थः ॥ **अथेति** ॥ अथ गुर्वाज्ञानन्तरं पवनो वायुः पद्मभुवो ब्रह्मणः दिवसावसाने दिनविरमे प्रळयकाल इवेति यावत् । ब्रह्मदिनस्वरूपमुक्तं पराशरपुराणे । 'कल्पसङ्ख्या दिनश्चैकं ब्रह्मणः कथ्यते शिवे । चतुर्युगसहस्राणां परिवर्तो हि कल्पकः ॥ ब्रह्मणो द्व्यायुषान्ते च महाप्रळय उच्यते । विष्णोरेकादिनं प्रोक्तं तस्यान्ते रौद्रकं दिनं ॥ तस्यान्ते चेश्वरश्चाहुस्तस्यान्ते च सदाशिवः ॥' इति । क्षणादिव क्षणमात्रं विहायैवेत्यर्थः । दिक्षु प्राच्यादिचतसृषु विदिक्षु आग्नेयादिचतसृषु कोणेष्वित्यर्थः । चरन् वहन्नित्यर्थः । अहार्याः पर्वताः । 'अहार्यधरपर्वताः' इत्यमरः । तेषां वरं श्रेष्ठं मन्दराद्रिं । 'दैवाद्वृते वरः श्रेष्ठे त्रिषु' इत्यमरः । अलघ्वधिकं यथा

स्तोकस्तोकप्रचलदनिलग्रासदुर्भिक्षखेदैः
कालंकालं कथमपि चिरं यापयाञ्चक्रिरे ये।
आकण्ठं ते पपुरिममविच्छिन्नधारं समीरं
प्राभाङ्शम्भोरुपकरणतां पन्नगास्तन्नगाग्रे ॥ ४० ॥

अथ नमदृष्टचरं वेगमनलसारथेरभिनन्दत इव मन्दरस्य गिरेरलक्ष्यत मनागिव शिरःकम्पः।

चकम्पे हन्तायं गिरिरनुचकम्पे पुरहरो
जहीतेदं क्लैब्यं जहित च वृथावस्थितमिदम्।

---

तथा विघूर्णितः भ्रामितो योऽर्णवस्समुद्रः तेन समुक्षितं संसिक्तं कुक्षितलं जठरदेशो यस्य स तथाभूतः यः क्षितिवलयः भूमण्डलं तस्याद्रता क्लिन्नता। 'आर्द्रं सार्द्रं क्लिन्नं' इत्यमरः। तथा शिथिलं विभजद्विश्लिष्यद्वा मूलं मूलदेशः यस्य स तथाभूतं अकृत चकारेत्यर्थः। कृञातोर्लुङि ह्रस्वादङ्गादिति सिज्लोपः। यद्भ्यासीनिरीक्षितलग्नप्रवृत्तस्य कस्य वा कार्यं न सिध्येदिति भावः॥ स्तोकेति॥ तस्य नगस्य मन्दराद्रः अग्रे अग्रदेशे ये पन्नगाः सर्पाः। 'उरगः पन्नगो भोगी' इत्यमरः। चिरं स्तोकं स्तोकं अत्यल्पं यथा तथा। 'स्तोकाल्पक्षुल्लकास्सूक्ष्मं' इत्यमरः। मान्यकादाचित्कत्वद्योतनाय द्विर्भावः। प्रचलन् प्रसरन् यः अनिलः वायुः तस्य ग्रास ओदनं तस्य दुर्भिक्षमलाभः तेन ये खेदाः व्यसनानि तैः। कालं कालं वीप्सायां द्विर्भावः। निखिलं कालमित्यर्थः। यापयांचक्रिरे क्षपयामासुरित्यर्थः। ते सर्पाः अविच्छिन्ना अविनष्टा धारा परम्परा यस्य स तथाभूतं समीरं मारुतं आकण्ठं कण्ठमभिव्याप्य पपुः पानं चक्रुः। शम्भोरीशस्य उपकरणतां कङ्कणत्वग्रैवेयकत्वनूपुरत्वादिरूपोपकरणभावं प्राप्ताः गताः शेषवासुकिवत् स्थौल्यगुणयोगादिति भावः इति केचिद्वदन्ति। अन्ये तु शम्भोरुपकरणतां प्राप्ता ये पन्नगाः शेषवासुकिप्रभृतयः स्तोकस्तोकः ईषदल्प.। आबाधे चेति पीडायां द्योत्यायां द्विर्भावः। प्रचलन् योऽनिलः तस्य ग्रासः। ग्रसु अदन इति धातोर्भावे घञीदं रूपं भवति। तस्य दुर्भिक्षमन्नाभावः। तत्खेदैः कालं कालं यापयांचक्रिरे ते नागाः अविच्छिन्नधारं समीरं कण्ठावधि पपुरिति प्रकारान्तरेण योजयित्वावशिष्टार्थं तु प्राग्वदित्याहुः॥ अथेति॥ अथ सर्वतो वायुवहनानन्तरं अनलसारथेः वायोः अदृष्टचरः पूर्वं न दृष्ट इत्यर्थः। भूतपूर्वे चरडिति चरट्। यो वेगः गतिशैघ्र्यं तं अभिनन्दतः श्लाघमानस्येव मन्दरस्य गिरेः मनाक् शिरःकम्पः शिखरभागचाञ्चल्यं अलक्ष्यत अदृश्यत॥ चकम्प इति॥ अयं गिरिः मन्दरः चकम्पे चचाल। कपि चलन इति धातोर्लिट्। हन्तेत्यनुकम्पायाम्। 'हन्त हर्षेऽनुकम्पायां' इत्यमरः। पुरहरः त्रिपुरान्तकः अनुचकम्पे अनुजग्राह। इदं

इति स्वेन स्वेन व्यवसितधियः काश्यपसुताः
समेता गर्जन्तस्सपदि चलयामासुरचलम् ॥ ४१ ॥

तदानीं च

निष्पतद्द्रुममुत्पतत्खगमद्भुतस्खलदश्मभू·
जर्झरस्रुतनिर्झराम्बुझळझळारवभैरवम् ।
गर्भगह्वरनिर्भरभ्रमदुद्भटानिलपूरित-
क्रन्ददन्तरकन्दरं किल मन्दरं ददृशुर्जनाः ॥ ४२ ॥

गर्जन्तश्च ते तदनु पर्जन्या इव गणयन्तश्च करगतमिव

---

विद्यमानं क्लीबाः षण्डाः तेषां भावः क्लैब्यं जहीत त्यजत । ओहाक् त्यागे इति धातोर्लोट् । इदं परिदृश्यमानं वृथावस्थितं मुधावस्थानं च जहित उत्सृजत । तस्मादेव धातोर्लोट् । इतीत्थं स्वेन स्वेन स्वयं स्वयं व्यवसिता निःकृष्टा धियो बुद्धयो येषां ते तथा समेता मिळिताः काश्यपसुताः उभयेऽपि देवासुराः गर्जन्तः हर हरेति वक्ष्यमाणप्रकारेण नदन्तस्सन्तः सपदि तत्क्षणं मन्दरं चलयामासुः चञ्चलयाञ्चक्रुः । चलशब्दात्तत्करोतीति णिजन्तात्कास्प्रत्ययेत्यादिनाम्यामन्तादस्तेरनुप्रयोगः ॥ **निष्पतदिति** ॥ तदानीं चलीकरणसमये जनाः मन्दराद्रिं निष्पतन्तः निपतन्तः द्रुमाः वृक्षाः यस्मात्स तथाभूतं उत्पतन्तः उपर्युद्गच्छन्तः खगाः पक्षिणः यस्मात्स तथाभूतम् । अद्भुतमाश्चर्यं यथा तथा स्खलन्तः निपतन्तः ये अश्मानः पाषाणाः तेभ्यो भवन्तीत्यश्मभुवः ये जर्झराः ध्वनयः । 'जर्झरो निनदे शक्रध्वजे शीर्णे च वाच्यवत्' इति नानार्थमाला । तैस्सह स्रुताः। कर्तरि क्तः। प्रसरन्त इत्यर्थः । ये निर्झराः प्रवाहाः 'प्रवाहो निर्झरो झरः' इत्यमरः । तेषां यान्यम्बूनि तेषां झळझळेति ये आरवाः ध्वनयः तैः भैरवः भीषणः । 'भैरवो ना क्षेत्रपालभर्गयोर्भीषणे त्रिषु' इति नानार्थमाला । गर्भः कुक्षिदेशः । 'कुक्षिभ्रूणार्भका गर्भा' इत्यमरः । तस्मिन् यानि गह्वराणि देवखातबिलानि । 'देवखातबिले गुहा गह्वरं' इत्यमरः । तेषु निर्भरमत्यन्तम् । 'अतिमात्रोद्गाढनिर्भरं' इत्यमरः । भ्रमन् घूर्णमानः उद्भटः बलवान्मद्वानिति वार्थः । 'स्यादुद्भटस्तु महति बलवत्यपि सङ्करे' इति धनञ्जयः । योऽनिलो वायुः तेन पूरितः अत एव क्रन्दन् अन्तरकन्दरः अन्तरस्थदरी यस्मिन् स तथाभूतम् । 'दरी तु कन्दरो वास्त्री' इत्यमरः । एवंविधं च ददृशुः किलेति वाक्यालङ्कारे । अथ मन्दरोद्धारक्रमं वर्णयितुमारभते ॥ **गर्जन्त इति** ॥ पर्जन्याः गर्जन्मेघा इव गर्जन्तः ध्वनिं कुर्वन्तः । 'पर्जन्यौ रसदब्देन्द्रौ' इत्यमरः । अशेषं कृत्स्नम् । 'विश्वमशेषं कृत्स्नं' इत्यमरः । कार्यं साध्यप्रयोजनं करगतं हस्ततलप्राप्तमिव गणयन्तः गणनं कुर्वन्तः पूर्वतः पूर्वभागे । इतराभ्योऽपि दृश्यत इति सप्तम्यास्तसिः । दिशां पतयः इन्द्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशाना-

कार्यमशेषं, पूर्वतो दिक्पतीन्, दक्षिणतो देवानपरान्, पश्चिमतो बाणं सहस्रबाहुं, उत्तरतो महासुरानितरानपि विभज्य विनियुञ्जानाः, खाते परितः परिघावलय इव मूलगर्ते कराञ्जलानि निदधानाः, परित्यजन्तः प्रहरणानि, परिहरन्तोऽङ्गुळीयकानि, आवध्नन्तः कटितटेषूत्तरासङ्गं, आरोपयन्तः कङ्कणान्यङ्गदस्थानं, उपवीतयन्तो निवीतलम्बीनि हारमण्डलानि, उद्घोषयन्तः परस्परमसकृदपि 'समं निधत्त कराञ्जलानि, सममुत्तम्भयत, समं विस्रंसयत, सममुच्छ्वसित,

स्तान् दक्षिणतः दक्षिणभागे परानन्यान् देवान् वसुसप्तमरुदादित्यान् पश्चिमतः पश्चिमदिशि सहस्रं बाहवो भुजाः यस्य स तथाभूतं बाणं बाणासुरं उत्तरतः उत्तरस्यां दिशि इतरानन्यानपि महासुरान् बलिविरोचनान्धकासुरप्रभृतीन् विभज्य विभागं कृत्वा विनियुञ्जानाः नियोगं कृत्वा स्थापयन्त इत्यर्थः। परितः मन्दरमभित इत्यर्थः। खाते अवदारिते। खनु अवदारण इति धातोर्भावे क्तप्रत्ययः। अत एव परिखावलये परिघामण्डल इव स्थिते। 'परिघा मुद्गरेऽर्गळे इति घट्टके परिघातेऽस्त्रो योगे प्राकारगोपुरे' इति नानार्थमाला। मूलगर्ते मूलदेशस्थश्वभ्रे मन्दराद्रेः मूलदेशस्थरेखाकाराच्छिद्र इति समुदितार्थः। कराञ्चलानि हस्ताग्राणि निदधानाः न्यस्यन्तः उद्धर्तुमिति भावः। प्रहरणानि आयुधानि। 'आयुधं तु प्रहरणं' इत्यमरः। परित्यजन्तो विसृजन्तः अङ्गुळीयकानि ऊर्मिकाः। 'अङ्गुळीयकमूर्मिका' इत्यमरः। परिहरन्तः उत्सृजन्तः। कटितटेषु श्रोणिदेशेषु अवलम्बेष्विति यावत्। 'कटिः श्रोणिः ककुद्मती' इत्यमरः। उत्तरासङ्गं उत्तरीयवस्त्रम्। 'द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा। संव्यानमुत्तरीयं च' इत्यमरः। आबध्नन्तः आवेष्टनं कुर्वन्तः कङ्कणानि करभूषणानि। 'कङ्कणं करभूषणं' इत्यमरः। अङ्गदानि केयूराणि। 'केयूरमङ्गदं तुल्ये' इत्यमरः। तेषां स्थानं अंसदेशः तदारोपयन्तः गमयन्तः आरोहयन्त इति वार्थः। निवीतं कण्ठलम्बितब्रह्मसूत्रं तद्वल्लम्बीनि लम्बमानानि हाराणां वलयानि मण्डलानि। 'हारो मुक्तावळी देवच्छन्दोऽसौ शतयष्टिकः' इत्यमरः। उपवीतं सव्यभुजधृतं कुर्वन्तः। उपवीतशब्दात्तत्करोतीति णिजन्ताल्लटश्शत्रादेशः। 'उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे। प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितं' इत्युभयत्राप्यमरः। असकृत् मुहुरित्यर्थः। 'मुहुः पुनःपुनश्शश्वदभीक्ष्णमसकृत्समौ' इत्यमरः। कराञ्चलानि हस्ताग्राणि सममेकदा निधत्त न्यस्यतेत्यर्थः। सममेकदा उत्तम्भयत उद्धरत उत्पाटयतेति वार्थः। सममेकदा विस्रंसयत प्रक्षिपत पातयतेति वार्थः। सममेकदा उच्छ्वसित उच्छ्वासं कुरुत। सममेकदा निश्वसित निश्वासं कुरुतेत्य-

समं निश्वसित, समं कुरुत बलानि, परथा विशीर्येयुश्शिखराणि, विनमेदयमेव मन्दरः, क्वापि चलेदपि ततो भद्रपीठं चन्द्रापीडस्य, समुद्विजेत दुहिता शैलराजस्य, क्षुभ्येयुः प्रमथाः, कुप्येदपि शैलादिः, चतुरन्तयानगत इव भगवानम्बिकारमणश्चतुरतरमस्माभिर्वाहनीयः' इति, वादयत्सु वादित्राणि गन्धर्वेषु, गायन्तीषु गाथाः किन्नरीषु, नृत्यन्तीषु निर्जरवारकान्तासु, श्लाघमानेषु चारणेषु, प्रयुञ्जानेष्वाशिषः परमर्षिषु, वर्षत्सु दिव्यवलाहकेषु पुष्पवर्षाणि, हर हरेति तार-

---

र्थः । सममेकदा बलानि सामर्थ्यानि कुरुत प्रयतेति तात्पर्यार्थः । परथा तथा न चेदित्यर्थः । शिखराणि शृङ्गाणि विशीर्येयुः विशीर्णानि भवेयुः । अयं मन्दर एव विनमेत् नम्रो भवेत् । ततस्मात् चन्द्रापीडस्य चन्द्रावतंसस्य शिवस्य भद्रपीठं सिंहासनं : 'नृपासन तु यद्भद्रासनं सिंहासनं तु तत्' इत्यमरः । क्वापि कुत्रचिदपि चलेत् स्खलेत् शिवस्य राजाधिराजत्वात्तदासनं सिंहासनमिति भावः । तदुक्तं शिवरहस्ये । 'राजाधिराजस्सर्वेषां त्र्यम्बकस्त्रिपुरान्तकः' इति । शैलराजस्य हिमवतः दुहिता पुत्री उमादेवी समुद्विजेत भयं प्राप्नुयात् । प्रमथाः शिवपारिषदाः क्षुभ्येयुः चाञ्चल्यं प्राप्नुयुः । क्षुभ सञ्चलन इति धातुः ततः लिङ् सम्भावनायाम् । शिलादस्यापत्यं शैलादिः नन्दीश्वरः अपि कुप्येत् अपि कोपं कुर्यात् अत्र सर्वत्रापिशब्दः सम्भावनायाम् । 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि' इत्यमर इति बोध्यम् । भगवान् षड्गुणैश्वर्यशाली अम्बिकारमणः उमाकान्तः चतुरन्तयानं धीवरैर्वोढव्यो राजवाहनविशेषः तस्यान्दोलिकेत्यपि नामान्तरम् । 'सर्वं स्याद्वाहनं यानं' इत्यमरोऽप्याह । तद्गतः यानं प्राप्त इव वाहनीयः वोढव्य इतीत्थं परस्परमन्योन्यं उद्बोधयन्तः उपदिशन्तः देवासुराः गन्धर्वेषु देवयोनिविशेषेषु वादित्राणि वीणामुरजकांस्यवंशलक्षणचतुर्विधवाद्यानि । 'चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकं' इत्यमरः । वादयत्सु नादयत्सु सत्सु । किन्नरीषु किन्नरस्त्रीषु गाथाः षट्पादोपलक्षितपद्यविशेषान् । गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे चेति धातोः पचाद्यचि अजाद्यतष्टाप् । गायन्तीषु गानं कुर्वन्तीषु । निर्जरवनितासु देववेश्यासु नृत्यन्तीषु नर्तनं कुर्वन्तीषु । चारणेषु देवयोनिविशेषेषु श्लाघमानेषु परमेश्वरस्तुतिं कुर्वाणेषु । परमर्षिषु । ऋत्यक इति पाक्षिकप्रकृतिभावाभावः । वसिष्ठवामदेवादिषु आशिषः हिताशंसनानि स्वस्तिवाचनानीति यावत् । 'स्त्री त्वाशीर्हिताशंसाहिदंष्ट्रयोः' इत्यमरः । प्रयुञ्जानेषु प्रपठत्सु सत्सु । दिव्या ये वलाहकाः मेघाः । 'वारिवाहः स्तनयित्नुर्वलाहकः' इत्यमरः । पुष्पाणां वर्षाणि वर्षणानि वर्षत्सु कुर्वत्स्वित्यर्थः । धातूनामनेकार्थत्वात् । हरहरेत्येवंविधैः तारध्वनिभिः अत्युच्चध्वनिभिः विध्यण्डमण्डलं ब्रह्मा-

ध्वनिभिरापूरयन्तः विश्वाण्डमण्डलमुन्नमयामासुरुर्वीधरं मन्दरम् ।

आपातालनिमग्नमूर्तिनि बलान्मूले समुन्मूलिते
शैलस्यास्य भुजङ्गराजनगरप्रासादशृङ्गायिते ।
खेलन्त्यश्शनकैः फणीन्द्रसुदृशः स्वच्छन्दमन्तास्पदे
दृष्यद्भिः प्रतिलेभिरे दिविचरैरक्लेशमप्रार्थितम् ॥ ४३ ॥

अपि च ।

अभ्यर्णस्थलभाजि तत्र शिखरिण्यामूलमुन्मूलिते
तत्क्षोभक्षुभिते च काञ्चनगिरौ किञ्चित्समाकुञ्चिते ।
विभ्रश्यद्गृहभित्ति विश्लथपुरद्वारं विशीर्णाट्ट-
स्तोमोत्तोरणविटङ्कसङ्कुमजनि स्थानं सुराणां तदा ॥ ४४ ॥

---

ण्डगोळकं आपूरयन्तः सम्यक्पूर्णं कुर्वन्तः मन्दरमुर्वीधरं मन्दरपर्वतं उन्नमयामासुः उत्कूलयामासुः ॥ **आपातालेति** ॥ आपातालं पाताललोकमभिव्याप्य निमग्ना निमज्य स्थिता मूर्तिस्तनुर्यस्य तत्तथाभूते अत एव भुजङ्गराजश्शेषः तस्य नगरं भोगवतीपुरं तस्मिन् यः प्रासादः देवसदनं देवस्थानमिति यावत् । राजसदनमिति चार्थः । 'प्रासादो देवभूभुजां' इत्यमरः । देवाश्च भूभुजश्चेति द्वन्द्वाश्रयणात्तस्य शृङ्गायिते शिखरवदाचरिते अस्य शैलस्य मन्दराद्रेः मूल बलात् सामर्थ्यमाश्रित्य । ल्यब्लोपे पञ्चमी । उन्मूलिते उत्पाटिते सति देवासुरैरिति शेषः । अत्रैतन्मन्दरमूलसंबन्धिनि अन्तरे छिद्रे । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च' इत्यमरः । स्वच्छन्दं निरवग्रहं यथा तथा प्रतिबन्धरहितं यथा तथेति यावत् । 'स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः' इत्यमरः । खेलन्त्यः क्रीडन्त्यः फणीन्द्रसुदृशः नागकन्यकाः अविद्यमानः क्लेशः यस्मिन् कर्मणि यथा भवति तथा । अविद्यमानं प्रार्थितं भावे क्तः । प्रार्थनं यस्मिन् कर्मणि तद्यथा तथा दृष्यद्भिस्सन्तुष्यद्भिः दिविचरैः देवासुरैरित्यर्थः । अक्लेशमनायासं यथा तथा प्रतिलेभिरे ददृशिरे ॥ **अभ्यर्णेति** ॥ अभ्यर्णस्थलं अन्तिकप्रदेशं भाजिनि प्राप्ते । 'उपकण्ठान्तिकाभ्यर्ण' इत्यमरः । तत्र शिखरिणि तस्मिन् मन्दराद्रौ । 'महीध्रशिखरिक्ष्माभृत्' इत्यमरः । आमूलं मूलमभिव्याप्य समुन्मूलिते उत्पाटिते तत्क्षोभेण तस्याद्रेः उत्पाटनचालनादिलक्षणक्षोभेण क्षुभिते अस्वास्थ्यं प्रापिते काञ्चनगिरौ सुवर्णाद्रौ किञ्चिदीषत्समाकुञ्चिते आनते सति तदा तत्काले सुराणां स्थानं स्वर्गः विभ्रश्यन्त्यः विपतन्त्यः गृहभित्तयः सदनकुड्यानि यस्मिन् तत्तथाभूतम् । स्त्रियाः पुंवदित्यादिना पुंवद्भावः । 'भि-

समुद्धृत्य तमारसातलप्रतिष्ठमपि सद्यस्समारोपितं कलममिव लीलया प्रस्थिताः दुग्धार्णवं प्रति देवासुराः । अशिथिलशिखरं अप्रकम्पनितम्बं अखण्डितगण्डोपलं अनुज्झितनिर्झरप्रवाहं अस्फुटितपर्यन्तदर्यन्तरं अभञ्जिततरुपुञ्जं अनुत्खातलतावितानं अस्पन्दमृगबृन्दं अनुद्भ्रान्तशकुन्तं अव्यापन्न-

---

त्तिः स्त्री कुडयमेडूकं' इत्यमरः विश्लथानि विगलितानि पुरद्वाराणि अमरावतीप्रतीहाराः यस्मिन् तत्तथाभूतं । सौधाः राजसदनानि । 'सौधोऽस्त्री राजसदनं' इत्यमरः । तेषामुत्सेधः औन्नत्यं । 'उत्सेधः काय उन्नतिः' इत्यमरः । विटङ्काः परिपालितकपोतपक्षिस्थानानि । 'कपोतपालिकायां तु विटङ्कं पुन्नपुंसकं' इत्यमरः । तेषां सङ्घः समूहः स च तौ विशीर्णत्रुटन्तः भिन्नाच्छिन्नाः सौधोत्सेधविटङ्कसङ्घा यस्मिन् तत्तथाभूतमजनि आसीदित्यर्थः ॥ **समुद्धृत्येति** ॥ आरसायास्तलं पाताळावधि प्रविष्टं व्याप्य संस्थितमपीत्यर्थः । तं मन्दराद्रिं सद्यः तत्क्षणे समारोपितं निखातं कलमं व्रीह्योषधिसस्यमिव । 'कलमश्शालले-खिन्ये शारे लाक्षारसेऽङ्कुरे' इत्यमरः । लीलया भगवदनुग्रहप्रयुक्तानायासविलासेन समुद्धृत्य उत्पाट्य धृत्वेत्यर्थः । देवासुराः दुग्धार्णवं क्षीरसमुद्रं प्रति प्रस्थिताः प्रययुः । अथ तद्वहनचातुर्यं वर्णयति ॥ **अशिथिलेति** ॥ देवासुराः मन्दराद्रिं इतोऽतिरिक्तं सर्वं द्वितीयान्तं क्रियाविशेषणामिति बोध्यम् । अशिथिलान्यविगळनानि शिखराणि शृङ्गाणि यस्मिन् कर्मणि तत्तथा । 'कूटोऽस्त्री शिखरं शृङ्गं' इत्यमरः । अप्रकम्पः अलोलः नितम्बः कटकदेशः यस्मिन् कर्मणि तत्तथा । 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः । अखण्डिताः अशकलीकृताः गण्डोपलाः यस्मिन् कर्मणि तत्तथा । 'गह्वरं गण्डशैलास्तु च्युतास्स्थूलोपला गिरेः' इत्यमरः । अनुज्झिताः अत्याजिताः निर्झराणां गिरिनदीनां प्रवाहः प्रवहनं यस्मिन् कर्मणि तत्तथा । 'प्रवाहो निर्झरो झरः' इत्यमरः । यथापूर्वं प्रवहन्तः प्रवहन्त्येवेति भावः । अस्फुटिताः अविदळिताः पर्यन्तदर्यन्तराः समीपवर्तिकन्दरमध्यदेशा यस्मिन् कर्मणि तत्तथा । 'पर्यन्तभूः परिसरः' 'दरी तु कन्दरो वास्त्री' इति चामरः । अभञ्जिताः अभ्रंशिताः तरूणां वृक्षाणां पुञ्जा राशयो यस्मिन् कर्मणि तत्तथा । 'स्यान्निकायः पुञ्जराशी' इत्यमरः । अनुत्खातमनुत्पाटितं लतानां वल्लीनां वितानं पूगो यस्मिन् कर्मणि तत्तथा । 'वल्ली तु व्रततिर्लता' 'पूगो वितानं प्रकरः' इति चामरः । अस्पन्दं निश्चलं मृगाणां बृन्दं समुदायो यस्मिन् कर्मणि तत्तथा । अनुद्भ्रान्ताः अभ्रामिता अनुत्थापिता वा शकुन्ताः पक्षिणो यस्मिन् कर्मणि तत्तथा । 'शकुन्तपक्षिशकुनि' इत्यमरः । अव्यापन्नाः विपदमप्राप्ताः पन्नगाः उरगाः यस्मिन् कर्मणि तत्तथा । 'आपन्न आपत्प्राप्तः स्यात्' 'उरगः पन्नगो भोगी' इति चामरः । अस्तब्धः अनिरुद्धः सिद्धानां चारणानां

**पन्नगं अनवसन्नकिन्नरीगानं अस्तब्धसिद्धचारणकोलाहलं अविश्रान्तगान्धर्ववादित्रं अनुपरुद्धतपोधनध्यानं आनन्दयन्तो भगवन्तमुमाकान्तमवहन्त मन्दरम् । स च नीयमानस्सर्वैरपि सुरासुरैरखिलभुवनाधारस्य पशुपतेरप्याधारतावलेपादिव पादैराचक्राम शिरांसि पर्वतानाम् । परितः स्फुरदच्छनिर्झरापदेशेन प्रत्यक्षमिव विचकार दिङ्मुखेषु यशांसि निर्मलानि । आकाश एव नीयमाने तस्मिन्, अधस्तनीषु दिव्यभूमिषु तासु तासु तपस्यन्तस्तपोधनाः कतिचिदतिचकिताः प्रायुञ्जत परमाशिषः,**

---

कोलाहलः कलकलध्वनिर्यस्मिन् कर्मणि तत्तथा । 'कोलाहलः कलकलः' इत्यमरः । अनवसन्नमशान्तं किन्नरीणां गानं यस्मिन् कर्मणि तत्तथा । अविश्रान्तमशान्तं गन्धर्वाणां वादित्रं यस्मिन् कर्मणि तत्तथा ॥ 'चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकं' इत्यमरः । अनुपरुद्धमनिवारितं तपोधनानां ऋषीणां ध्यानं परमेश्वरानुसन्धानलक्षणं यस्मिन् कर्मणि तत्तथा । भगवन्तमुमाकान्तं पार्वतीजानिमानन्दयन्तस्सन्तोषयन्तः अवहन्त अनयन्तेत्यर्थः ॥ **स चेति** ॥ सुरासुरैः देवासुरैः नीयमानः याप्यमानः स च मन्दरः सकलभुवनानि समस्तलोकाः तेषामाधारस्य आश्रयस्य । 'समस्तजगदाधारश्शम्भुरेव न चेतरः' इति शास्त्रादिति भावः । पशुपतेः शिवस्य । 'शम्भुरीशः पशुपतिः' इत्यमरः । आधारता अधिकरणता तया अवलेपाद्गर्वादिव । 'गर्वोऽवलेपोऽवष्टम्भः' इत्यमरः । पादाः प्रत्यन्तपर्वताः एत एव पादाः चरणाः तैः श्लिष्टरूपकमेतत् । पर्वतानां स्वातिरिक्ताद्रीणां शिरांसि शिखराण्येव शिरांसीति पूर्ववद्रूपकम् । आचक्राम अतिजगामेत्यर्थः । उपर्येव तैः तस्य वहनादिति भावः ॥ **परित इति** ॥ स गिरिः परितः सर्वतः स्फुरन्तः प्रकाशमानाः अच्छाः निर्मलाः ये निर्झराः गिरिनद्यः तेषामपदेशेन व्याजेन । 'व्याजोऽपदेशो लक्ष्यं च' इत्यमरः । दिशां मुखेषु मुखभागेषु यशांसि कीर्तीः । 'यशः कीर्तिस्समाज्ञा च' इत्यमरः । प्रत्यक्षमैन्द्रियकमिव । 'प्रत्यक्षं स्यादैन्द्रियकं' इत्यमरः । चकार चक्रे । मन्दरोद्धारयशः प्रत्यक्षं कारयामासेवेति भावः । **आकाश एवेति** ॥ तस्मिन् मन्दराद्रौ आकाशे आकाशमार्ग एव नीयमाने सति याप्यमाने सति अधस्तनीषु अधोदेशवर्तमानासु तासु तासु दिव्यभूमिषु दिव्यस्थानेषु काश्यवन्तीकाञ्च्यादिषु तपस्यन्तः तपांसि कुर्वाणाः कतिचित्तपोधनाः तपस्विनः अत्यधिकं चकिता भीतास्सन्तः स्वेषामुपर्ययं पर्वतः पतेदिति सम्भावनयेति भावः । परमाः उत्कृष्टाः या आशिषः सर्वे जनास्सुखिनो भवन्त्वित्यादिरूपाः हिताशंसाः ताः प्रायुञ्जत प्रयुयुजिरे । सर्वेषां शुभाशंसायां सर्वान्तःपातित्वात्स्वेषामपि शुभं भवेदेवेति भावः । 'स्त्री त्वाशीर्हिताशंसाहिदंष्ट्रयोः'

**परिपेठुस्स्वस्त्ययनानि, अजपन्नभयङ्करं, आवर्तयन्नमृतमृत्युञ्जयं, अनुदध्युः आपदुद्धरणमम्बिकारमणं, आशशंसिरे च बलातिबलाभ्यामश्रमं दिविचराणाम्। महाप्रकाशमणिगणाकीर्णस्य तस्य चलतः पथिवशादागत्य पार्श्वतलं अध्वप्रतिरोधादत्रैव निलीयमानः पतिरपि त्विषां प्रदीप इव दिवा प्रवर्तितो भग्नतेजा ददृशे। अपि च। पुनरक्लेशमानीयमाना पत्या सह कात्यायनी रुचिरान् प्रदेशान् पश्यन्ती विविधानि वस्तूनि परिपृच्छन्ती प्रणयिनमभीक्ष्णं प्रसन्नेन चेतसा स्थापयिष्यन्ती**

---

इत्यमरः। स्वस्त्ययनानि नवग्रहमन्त्रान् परिपेठुः पर्यपाठिषुः। ग्रहमखनवग्रहमखनवग्रहजपादिकं चक्रुरिति भावः। अभयङ्करं नः पन्था अभयङ्करोत्वित्यादिकं मन्त्रं प्राजपन् जपं चक्रुः। जप मानसे चेति धातोर्लङ्। अमृतमृत्युञ्जयं तारामालिनिमन्त्रसम्पुटीकृतत्र्यम्बकमन्त्रमित्यर्थः। आवर्तयन् पुनः पुनः पारायणमकुर्वन्नित्यर्थः। आपद्भ्यः विपद्भ्यः उद्धरतीत्यापदुद्धरणः। नन्द्यादित्वाल्ल्युः। युवोरनाकावित्यनादेशः। तथाभूतमम्बिकारमणं उमाकान्तं अनुदध्युः ध्यानं चक्रुः। आपत्काले परमेश्वरमन्तरा कस्त्रातुमीष्ट इति भावः। बला च अतिबला च बलातिबले ताभ्यां तत्संज्ञिकाभ्यां विद्याभ्यामित्यर्थः। दिविचराणां देवासुराणां अश्रमं श्रमाभावं आशशंसिरे आचकाङ्क्षिरे। बलातिबलाविद्याभ्यां प्रसन्नात् परमेश्वराद्दिविचरान् श्रमं प्रापयितुं प्रार्थयामासुरिति भावः। आङ्शासु इच्छायामिति धातोर्लिट्। बलातिबलाविद्यासद्भावे प्रमाणं तु 'बलेत्यतिबलेति च विद्येते मयि काकुत्स्थ' इति चम्पूरामायणवचनमिति बोध्यम्॥ **महाप्रकाशेति**॥ महानधिकः प्रकाशः दीप्तिर्येषां ते तथाभूताः ये मणयो रत्नानि तेषां गणः समूहः तेन कीर्णः सर्वतो व्याप्तः तथाभूतस्य चलतः चञ्चलस्य तस्य मन्दराद्रेः पार्श्वतलमेकपक्षभागं पथिवशान्मार्गवशात् आगत्य अध्वा मार्गः तस्य प्रतिरोधो निरोधः तस्मात्। अत्र पार्श्वभाग एव निलीयमानस्तत्राविदितस्सन् वर्तमानोऽत एवं भग्नं कुण्ठीभूतं तेजः दीप्तिर्यस्य स तथाभूतस्त्विषाम्पतिस्सूर्योऽपि दिवाह्नि प्रवर्तितः प्रदीप इव रजकादिधृतस्थूलदीप इव ददृशे दृष्टः। तेजस्व्यपि कः व्यापकमहातेजस्विसन्निधौ भासेत प्रबलेन दुर्बलस्य बाध इति न्यायादिति भावः॥ **अपि चेति**॥ पत्या धवेन शिवेन सह। 'धवः प्रियः पतिर्भर्ता' इत्यमरः। अक्लेशमनायासं यथा तथा आनीयमानाः याप्यमानाः रुचिरान् मनोहरान् देशान् जनपदान् पश्यन्ती वीक्षमाणा अत एव विविधानि बहुविधानि वस्तूनि प्रणयिनं परशिवं अभीक्ष्णं शश्वत्। 'युक्ते द्वे सांप्रतं स्थानेऽभीक्ष्णं शश्वदनारत' इत्यमरः। परिपृच्छन्ती पृच्छां कुर्वन्ती दयामयी कृपाप्रचुरेत्यर्थः। कात्यायनी महादेवी उमादेवी

पि गिरिमनुजगृहे देवासुराननुजगृहे।

उड्डीय स्वयमुत्पतन् गिरिरसौ वाचैव नेतुं क्षमो
भग्नस्कन्धशिरोधरैर्दिविचरैरित्थं यदद्योह्यते।
एतत्पर्वतपक्षतिक्षतिकृतो मूर्खस्य दौष्कर्म्यमि-
त्यायस्ताः पथि पर्यभाषिषत ते सर्वे सुपर्वेश्वरम्॥

अपि च।

अपि च पुनः पुनश्चापीत्यर्थः। प्रसन्नेन प्रसादविशिष्टेन चेतसान्तःकरणेन अनुजः हिमवत्सुतः मैनाकः तस्य गृहे सदनीभूतसमुद्रे गिरिं मन्दरपर्वतं पक्षच्छेदिनो महेन्द्रादिभ्यतो हिमवत्तनूजमैनाकस्य समुद्र एव स्थितत्वादिति भावः। स्थापयिष्यतो निधास्यतः। णिजन्तात्तिष्ठतेर्लृटः सद्वेति लृटश्शत्रादेशः। देवासुरान् विरोधस्य असार्वदिकत्वाद्येषां च विरोधश्शाश्वतिक इत्येकवद्भावाभावः। अनुजगृहे अनुग्रहं चकारेत्यर्थः। केचित्तु अक्लेशं यथा तथा रुचिरान् स्वावासयोग्यानित्यर्थः। देशान् पत्या सह नीयमाना दयामयी। अपि च पुनः विविधानि भविष्यन्तीति शेषः। वस्तूनि परिपृच्छन्ती कात्यायनी प्रणयिनमतिप्रीतिपात्रमपि गिरिं पश्यन्ती अनुजगृहे स्थापयिष्यतो देवासुरान् प्रसन्नेन चेतसा अभीक्ष्णमसकृत्पत्या सहानुजगृहे शेषं पूर्ववदित्यन्वयं कथयन्ति॥ **उड्डीयेति**॥ ततः अनुग्रहानन्तरं प्राक् प्रथमं उड्डीय उड्डीनं कृत्वा। 'प्रडीनोड्डीनसण्डीनान्येताः खगगतिक्रियाः' इत्यमरः। उत्पतन् उत्पतनं कुर्वन् अत एव असौ गिरिर्मन्दरः वाचैव गच्छेति वाङ्मात्रेण नेतुमुद्दिष्टदेशं गमयितुं क्षमोऽर्हः पूर्वमेतस्य पक्षसत्वादिति भावः। स्कन्धाः अंसाश्च शिरांसि शीर्षाणि च स्कन्धशिरः। द्वन्द्वश्च प्राणितूर्यसेनाङ्गानामित्येकवद्भावः। 'स्कन्धो भुजशिरोऽसोऽस्त्री' 'उत्तमाङ्गं शिरश्शीर्षं' इति चामरः। भग्नं नष्टप्रायं यत् स्कन्धशिरः तस्य धराः तथाभूतैः पयोधरादिशब्दवदत्रापि धृधातोः पचाद्यच्। दिविचरैः देवैः असुरैः अस्माभिः अद्येदानीं इत्थमेवं उह्यते धृतो भवतीति यत् तदेतद्वहनमित्यर्थः। पर्वतानां मन्दरप्रभृतिनगानां पक्षतयः पक्षमूलानि। 'स्त्री पक्षतिः पक्षमूलं' इत्यमरः। तासां क्षतिकृतः नाशं कृतवतः मूर्खस्य बालिशस्य। 'मूर्खवैधेयबालिशाः' इत्यमरः। दुष्कर्मैव दौष्कर्म्यं दुश्चेष्टितमित्यर्थः। स्वार्थे ष्यञ्। पूर्वमनेनेन्द्रेण अनभिज्ञेन पर्वतपक्षाणां छेदनादिति भावः। इतीत्थमायस्ताः आयासविशिष्टाः ते देवासुराः पथि मार्गे सुपर्वणां देवानामीश्वरं पतिमिन्द्रम्। 'ईश्वरः पतिरीशिता' इत्यमरः। पर्यभाषिषत निनिन्दुः उपालम्भयांचक्रुरित्यर्थः। परिपूर्वाद्भाषतेः निन्दार्थत्वमाहामरः। 'यस्सनिन्द उपालम्भस्तत्र स्यात्परिभाषणं' इति॥ **अपि चेति**॥ साधवः सज्जनाः। 'सभ्यसज्जनसाधवः' इत्यमरः। पुरा

भग्नो यस्य दशाननः प्रचलने किञ्चित्प्रवृत्तः पुरा
शक्यं तस्य गिरेः कथं नयनमित्यस्ताविषुस्साधवः ।
अन्ये चक्षमिरे न तद्भवति का श्लाघात्र शाखामृगैः
आनीताश्च निपातिता हि जलधौ शैलास्समूला इति ॥

इत्थमतिभारभङ्गुरास्सुरासुरा यावदासेदुरन्तिकं दुग्धनिधेस्तावदुद्वेगः श्वेतद्वीपसदामुदजृम्भत । 'पश्यत पश्यत पर्यन्ते नीयमानं महागिरिं, पातयिष्यते नूनमत्रायमर्णवे, प-

---

पूर्वकल्पे दशाननो रावणः यस्य अद्रेः प्रचलने प्रकम्पने । 'चलनं कम्पनं कम्प्रं' इत्यमरः । किञ्चिदीषत् प्रवृत्त उद्युक्तस्सन् भग्नः भङ्गं प्राप्तः तस्य तथाविधस्येति तात्पर्यार्थः । गिरेः पर्वतस्य नयनं उत्पाट्य उत्तरदेशप्रापणमित्यर्थः । णीञ् प्रापण इति धातोर्भावे ल्युट्प्रत्ययः । कथं अशक्यमित्यर्थः । रावणापेक्षयैते महाशूरा इत्यर्थः । अस्ताविषुः स्तुतिं चक्रुः । अन्ये च । चकारस्त्वर्थे । असज्जनास्तु भगवता भगवत्सहायेनेत्यर्थः । पुरा शाखामृगैर्वानरैस्समूलाश्शैला आनीता आहृताः जलधौ अम्बुधौ निपातिता हि निपतिताः कृताः खलु । अत्र गिरिनयने श्लाघा स्तुतिः का कियतीत्यर्थः । इत्येतत् श्लाघनं न चक्षमिरे न सेहिरे । क्षमूष् सहन इति धातोर्लिट् । तदानीमप्यसज्जनाः अवर्तन्तेवेति भावः ॥ **इत्थमिति** ॥ इत्थमेवंप्रकारेणातिभारोऽत्यन्तभारः । 'भारो भरे वीवधे च बलानां द्विसहस्रके' इति नानार्थमाला । तेन भङ्गुराः आनताः । भञ्जभासमिदो घुरच् इति भञ्जधातोः घुरच्प्रत्ययः । सुरासुराः दुग्धनिधेः क्षीरसमुद्रस्य अन्तिकं समीपं यावदासेदुः आजग्मुः तावच्छ्वेतद्वीपे सीदन्तीति श्वेतद्वीपसदः । सत्सूद्विषेत्यादिना षद्लृधातोः क्विप् प्रत्ययः । तेषां सुतरामतितरामित्यर्थः । उद्वेगः भीतिः । 'स्यात्पूगफलमुद्वेग उद्योगो भीतिदुर्गम' इति नानार्थमाला । उदजृम्भत प्रादुरभूत् । यावत्तावच्छब्दावत्र अवध्यर्थकौ । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः । अथ श्वेतद्वीपवासिन उपरि पातयिष्यन्ते मन्दरमिति भीतास्सन्तः तत्र स्थातुमन्यत्र गन्तुं ऊर्ध्वमुत्पतितुमपि न शक्नुवन्तस्सन्तः परस्परं बहुधा विवादयामासुः । तं विवादकोलाहलं श्रुत्वा भगवान्वैष्णवपारिषदशिरोमणिः विष्वक्सेनो बहिरागत्य मन्दरानयनं दृष्ट्वा तत्सर्वं भगवते निवेदयामासेत्याशयेनाह ॥ **पश्यतेति** ॥ पर्यन्ते परिसरदेशे नीयमानमानीयमानं महागिरिं मन्दराद्रिं तत्स्वरूपापरिज्ञानात्तेषां तन्नामनिर्देश इति भावः । पश्यत पश्यत ईक्षध्वमीक्षध्वम् । नित्यवीप्सयोरित्याभीक्ष्ण्ये द्विर्भावः । अत्रार्णवेऽस्मिन्नब्धौ अयमद्रिः निपातयिष्यते निपातनं करिष्यते नूनं निश्चयः । 'नूनं तर्केऽर्थनिश्चये' इत्यमरः । इदमस्मदावासभूतमन्तरीपं वार्यन्तस्तटदेश इत्यर्थः । 'द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटं' इत्यमरः । नि-

रिप्लावयिष्यते च स निश्शेषमिदमन्तरीपं, तदद्यैव सज्जीभवत समुत्तिष्ठत सर्वतोऽपि वेलामुच्छ्रयध्वं' इति, 'हन्त केनेदमुत्प्रेक्षितं बकबन्धकौशलं, किञ्चिदपि चेदुच्छ्वसिति सागरः किं करणीयमुच्छ्रितयापि वेलया, तदारोक्ष्यामो वयमद्यैव वैकुण्ठमर्कमण्डलं वा धाम त्रिधाम्नः' इति, 'अनुचितमेतदालोचितं, अयुक्तं हि सेवकानामपहाय भगवन्तमन्यत्र गन्तुं' इति, 'कि-

---

श्शेषं समग्रं परिप्लावयिष्यते उन्मज्जनं करिष्यते तत्तस्मादद्येदानीमेव सज्जीभवत सन्नद्धा भवतेत्यर्थः । समुत्तिष्ठत समुत्थानं कुरुध्वं सर्वतोऽपि सर्वप्रकारैरपीत्यर्थः । इतराभ्योऽपि दृश्यत इति तृतीयायास्तसिः । अथवा पञ्चम्यास्तसिमाश्रित्य सर्वतोऽपि सज्जीभवतेति भिन्नक्रमेणान्वयो बोध्यः । वेलां समुद्रतीरं उच्छ्रयध्वं उद्धृत्य भजध्वमित्यर्थः । अत्रेत्यादिशब्दषट्कस्यापि प्रकारार्थकस्य विविधान्वादानित्यनेनान्वयः । प्रतिपाद्यमानषट्प्रकारेषु उत्तरोत्तरप्रकारः पूर्वपूर्वप्रकारखण्डनपर इति बोध्यम् । इदं मन्दरानयनसमुद्रमथनादिरूपं बकबन्धनकौशलं कङ्कपक्षिग्रहणचातुर्यम् । 'कुङ्क्रौञ्चोऽथ बकः कङ्कः पुष्कराक्षस्तु सारसः' इत्यमरः । केन वा उत्प्रेक्षितं तर्कितमित्यर्थः । पुरा किल केनचित्पामरेण बकबन्धनोपायश्चैवं चिन्तितः । आतपे स्थितस्य बकपक्षिणश्शिरसि नवनीतं निक्षिप्तं चेत्तद्द्रवीभूय नेत्रयोः पतति ततश्च निमीलिताक्षः पलायितुं न शक्नोति तदा ग्रहीतुं शक्यो भवतीति तद्वदिदं मन्दरानयनसमुद्रमथनं नवनीतप्राप्त्यादिकमिति भावः । हन्तेति खेदे । 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः' इत्यमरः । सागरः समुद्रः किञ्चिदपि उच्छ्वसिति चेदभिवर्धते चेद्यथा स्वल्पमुखबिले जलसम्पूर्णकलशे आकूर्परं हस्तनिक्षेपे कलशस्थजलं यथोच्छ्वसिति बहिरपि प्रवहति तथायमपि सागरः उच्छ्वसिति प्रवहति चेदिति भावः । उच्छ्रितया आश्रितया वेलया समुद्रतीरेणापि किं प्रयोजनं उभयत्र सम्यङ्मज्जनस्य समत्वादिति भावः । तत्तस्मादद्येदानीमेव त्रिधाम्नः केशवस्य । 'त्रिधामा केशवे वह्नौ हरिमामृत्युयोगयोः' इति नानार्थमाला । धाम स्थानं । 'संस्त्यायमुटजं धाम' इत्यमरः । वैकुण्ठं वैकुण्ठलोकं अर्कमण्डलं वा आरोक्ष्यामः आरोहणं करिष्यामः इतीत्थं केषाञ्चिद्विवादप्रकारः अपरे तं प्रकारमसहमानाः प्राहुः किमिति चेदत आह । एतत्पूर्वोक्तमन्यत्र गन्तव्यमित्याकारकमित्यर्थः । आलोचितं आलोचनम् । नपुंसके भावे क्तः । अनुचितमयोग्यमित्यर्थः । असमञ्जसमिति वा । 'उचितं स्यान्मिते योग्ये ज्ञातेऽभ्यस्ते समञ्जसं' इति नानार्थमाला । हि यस्मात्कारणात् सेवकानां अस्माकं भगवन्तं स्वामिनमपहाय त्यक्त्वा अन्यत्र गन्तुं गमनं कर्तुं अयुक्तमसमञ्जसमित्येकोऽभिप्रायः । भगवान्वासुदेव एव मन्दरस्य अद्रेः पा-

मुच्यते भगवन्तमपहायेति, किं न विचारितं भवता, भगवानेव मन्दरपातदर्शनकुतूहलव्याजेन प्रस्थातुकामो वर्तत इति कतिवारानेष पपात मन्दरः, कतिवारान्नोदजृम्भत सागरः, कस्यापि ब्रह्मणः कल्पे न जानीमो वयं विप्रवासं अहो खल्वमीभिराधुनिकैर्बाध्यामहे भागवतैः' इति 'भवतु भवतु कथयन्तोऽपि दृढमितोऽपि कबलितास्सरिद्भिस्सागरैश्च महत्स्वायतनेषु महीगतेषु शार्ङ्गपाणेः कति न भवद्विधाः परमभागवताः, तदास्यतामिहैव भवद्भिः, आधुनिकास्तु वयमज्ञातपारा-

---

तः पतनं तस्य दर्शनं निरीक्षणं तस्मिन् कौतूहलं कौतुकम्। 'कौतूहलं कौतुकं च' इत्यमरः। तदेव व्याजः अपदेशः। 'व्याजोऽपदेशो लक्ष्यं च' इत्यमरः। तेन प्रस्थातुं प्रयातुं कामोऽभिलाषो यस्य सः तथाभूतो वर्तत इति भवद्भिर्न विचारितं किमित्येवमाकारक एकः। अत्रापि किंशब्दः पूर्ववत्प्रश्नार्थकः। तदसहमानानामपरेषां विवादक्रमः कथमिति चेदत आह। एष आनीयमानो मन्दरः कति वारान् कतिषु समयेष्वित्यर्थः। 'निवहावसरौ वारौ' इत्यमरः। 'वारस्सूर्यादिदिवसे बृन्दावसरयोरपि' इति नानार्थमाला च। न पपात पतनं न चकारेत्यर्थः। सागरस्समुद्रः कतिवारान् कतिषु अवसरेष्वित्यर्थः। नोदजृम्भत नावर्धतेत्यर्थः। प्रतिपूर्णिमं प्रतिकल्पं वर्धते तस्य तत्स्वभावत्वादिति भावः। कस्य ब्रह्मणः कल्पे अत्रेदं बोध्यम्। एकं दैवयुगसहस्रं मानवानामेकः कल्पः दैवे द्वे चेद्युगसहस्रे तदा मानवानां द्वौ कल्पौ भवतः। तच्च कल्पद्वयं ब्रह्मणः अहोरात्रमात्रमेव। तत्रैकः कल्पः तस्य दिवसः एकः कल्पस्तस्य रात्रिरिति। अत्रार्थे प्रमाणम्। 'दिव्यैर्वर्षसहस्रैर्द्वादशभिर्दैवतं युगम्। दैवे युगसहस्रे द्वे ब्राह्मः कल्पौ तु तौ नृणां' इत्यमरादिकमिति बोध्यम्। वयं विप्रवासं परस्थलवासं न विजानीमः न विद्मः तत्र तत्र कालेऽस्माकमत्रैवावस्थानादिति भावः। अमीभिरेतैः आधुनिकैः अद्यतनैः भागवतैः भगवद्भक्तैः बाध्यामहे बाधिताः क्रियामहे। अहो खल्वाश्चर्यं खल्वित्यर्थः। 'वद्वा यथा तथैवैवं साम्येऽहो हि च विस्मये' इत्यमरः। इत्येवंविधः एकः पक्षः। अपरेषां तदसहमानानां पक्षस्तु भवतु भवतु तिष्ठतु तिष्ठत्वित्यर्थः। पूर्ववद्द्विर्भावः। दृढमत्यन्तं गाढं। 'गाढबाढदृढानि च' इत्यमरः। कथयन्तो वदन्तः भवद्विधाः भवत्सदृशाः मही भूमिः तां गतानि प्राप्तानि तथाभूतेषु महत्सु उत्कृष्टेषु शार्ङ्गपाणेः नारायणस्यायतनेषु जगन्नाथप्रभृतिस्थानेषु कति कियन्तः परमभागवताः सागरैः समुद्रैस्सरिद्भिः नदीभिश्च न कबळिताः न ग्रसिता इत्यर्थः। तत्तस्माद्भवद्भिः युष्माभिरेव इहात्र देशे आस्यतां भूयतामित्यर्थः। भावे लोट्। अज्ञातः अविदितः पारावारः समुद्रः यैस्ते तथाभूतान्। 'अकूपारः

वारा गोपायन्तः क्वचिदात्मानं गोविन्दमेव निरन्तरमनुसन्दध्मीमहि' इति च विप्रवदतां विविधान् वादान्, पश्यतामसकृदुन्नम्योन्नम्य, परिपृच्छतामागच्छतो वैमानिकान्, परिभ्रमतामभितोऽपि कोलाहलेन महता, पारिषदानामग्रणीः कुपितो विष्वक्सेनो बहिर्निर्गत्य परितोऽपि चक्षुः प्रसारयन्नवलोकयन्नानीयमानमभ्यर्णं एव मन्दरं, अवधारयन्ननुपदमेव तस्य सिन्धौ निपातनं, विज्ञापयामास विनयेन विदितवेदितव्यमपि स्वधर्म इति विश्वम्भरम् ।

व्यत्यस्तकौस्तुभमवप्लुतवैजयन्ति
विस्रंसमानकनकाम्बरलोभनीयम् ।
सद्यः फणीन्द्रशयनादुदतिष्ठदीशः
कैलासशैलशिखरादिव कालमेघः ॥ ४६-४७ ॥

---

पारावारस्सरित्पतिः' इत्यमरः। क्वचं क्वचित्कुत्रचित् यत्रकुत्र चेति भावः। आत्मानं शरीरं। 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इत्यमरः। गोपायन्तस्संरक्षमाणास्सन्तः। निरन्तरं सर्वदेत्यर्थः। गोविन्दं वासुदेवमेवानुसन्दध्मीमहि ध्यायेम इत्येवं बहु विविधान् बहुप्रकारान् वादान् वचांसि प्रवदतां वक्तृणामित्यर्थः। असकृन्मुहुर्मुहुः उन्नम्योन्नम्य उत्थायोत्थायेत्यर्थः । पश्यतां द्रष्टॄणां आगच्छतः आगतान् वैमानिकान् विमानसञ्चारिणः एतान् परिपृच्छतां प्रश्नं कुर्वतां अभितः सर्वतः परिभ्रमतां विघूर्णमानानामित्यर्थः । श्वेतद्वीपवासिनामिति शेषः। महता अधिकेन कोलाहलेन कलकलध्वनिना पारिषदानां विष्णुपारिषदानां अग्रणीः श्रेष्ठः विष्वक्सेनः विष्वक्सेनो नाम कश्चन पारिषदः अयं एष कोलाहलः कुतः कस्मात्कारणाद्भवेदिति शेषः । इति मत्वा आलोच्य बहिर्बाह्यदेशं प्रति निर्गत्य गत्वा परितः सर्वतोऽपि चक्षुः प्रसारयन् दृष्टिं प्रचालयन्निति प्रपातयन्निति वार्थः । अभ्यर्णं एव समीपदेश एव आनीयमानं मन्दरं अवलोकयन्। अनुपदमुत्तराद्वितीयतृतीयक्षण एव तस्याद्रेः सिन्धौ समुद्रे पतनमप्यवधारयन्निश्चिन्वन्नित्यर्थः। विदितं विज्ञातं वेदितव्यं ज्ञेयांशः येन स तथाभूतं सर्वज्ञत्वात्तस्येति भावः । विश्वम्भरं नारायणं। 'विश्वम्भरः कैटभजित्' इत्यमरः। स्वस्य धर्मः कर्तव्यांश इत्यर्थः । इति हेतोर्विज्ञापयामास निवेदयामासेत्यर्थः । स्वस्य तत्सेवकत्वाद्विज्ञाप्यं विज्ञापनीयमेवेति भावः । अथ भगवान् सुप्तोत्थित इति कथयन् तदुत्थानचातुरीमपि वर्णयन्नाह ॥ व्यत्यस्तेति ॥ ईशः स्वामी हरिः कैलासशैलो रजताद्रिः तस्य शिखरात् । 'कूटोऽस्त्री शिखरं शृङ्गं' इत्यमरः।

दिव्यैः पञ्चभिरायुधैस्सविनयैराबद्धसेवाक्रमः
तत्कालोपनतैस्तपोधनगणैर्धन्यैर्वृतः कैरपि ।
अभ्यर्णे वसतस्तदा खगपतेरालम्ब्य हस्तं शनैः
विष्वक्सेननिवेद्यमानसरणिर्विश्वम्भरो निर्ययौ ॥ ४८ ॥

---

कालः नीलः । 'कालश्यामलमेचकाः' इत्यमरः । स चासौ यो मेघः अम्बुदः स इव फणिनामुरगाणां इन्द्रः अधिपतिश्शेषः स एव शयनं तल्पं तस्मादित्यर्थः । सद्यः विष्वक्सेनविज्ञापनासमकालमेव व्यत्यस्तः विपर्यासं प्राप्तः कौस्तुभः तन्नाममणिः यस्मिन् कर्मणि तत्तथा । द्वितीयान्तत्वयं क्रियाविशेषणं । दक्षिणपार्श्वमधःकृत्य सुप्तस्य उत्तानशयनं प्राप्तस्य वा भगवतः वामपार्श्वमधःकृत्य उत्थानदशायां अधरोत्तरीभवनलक्षणः स्थिरतरळीभावलक्षणो वा कौस्तुभमणेर्विपर्यास इति भावः । अवप्लुता अवगळिता वैजयन्ती वनमाला यस्मिन् कर्मणि तत्तथा । 'आपादपद्मं या माला वनमालेति सा मता । वैजयन्तीति च प्रोक्ता' इति कळिङ्गः । सुप्तस्य झडिति हठात् उत्थाने धृतहाराणामवप्लुतिच्छेदादेस्संभवादिति भावः । विस्रंसमानं प्रभ्रश्यत् यत्कनकाम्बरं सुवर्णमयचेलं तेन लोभनीयं स्पृहणीयं यथा तथा तदानीं यत्किञ्चिदपि उत्तरीयस्रंसे उरःस्थितसौन्दर्यलक्ष्म्यादिदर्शनसंभवात् स्पृहणीयत्वमिति भावः । उदतिष्ठत् उत्तस्थौ । अत्रोपमेयोपमानसादृश्यवाचकानामीशकालमेघेवशब्दानां त्रयाणां उपादानेऽपि साधारणधर्मवाचकपदानुपादानाल्लुप्तोपमालङ्कारः । 'वर्ण्योपमानधर्माणामुपमावाचकस्य च । एकद्वित्र्यनुपादानात् भिन्ना लुप्तोपमाष्टधा ॥' इति लक्षणात् । अथ ययाविति पदन्यासक्रमं वर्णयति ॥ **दिव्यैरिति** ॥ विनयः नतिः शिक्षा वा तेन सहिताः सविनयाः तैः । 'विनयो नतिशिक्षादिधर्माचारप्रशान्तिषु' इति नानार्थमाला । अत एव दिव्यैः श्लाघ्यैः । 'दिव्यो दिविचरे श्लाघ्ये' इति विश्वः । पञ्चभिः पञ्चसङ्ख्याकैः आयुधैः गदाशार्ङ्गसुदर्शनादिप्रहरणैः । 'आयुधं तु प्रहरणं' इत्यमरः । आबद्धः आसन्दानितः विरचित इति यावत् । सेवाक्रमः शुश्रूषापारिपाटी यस्मै सः । 'शक्तौ चरणविक्षेपे परिपाट्यामपि क्रमः' इति नानार्थमाला । मूर्तिमद्भिः शङ्खादिभिस्सेवित इति भावः । तत्कालः तत्क्षणः तस्मिन्नुपनताः प्राप्ताः तैः अत एव कैरपि न ज्ञातैः धन्यैः सुकृतिभिः । 'सुकृती पुण्यवान् धन्यः' इत्यमरः । तपोधनानां मुनीनां गणाः समुदायाः । 'समुदायस्समुदयस्समवायश्च यो गणः' इत्यमरः । तैः परिवृतः आवृतः विश्वम्भरः श्रीहरिः । 'विश्वम्भरः कैटभजित्' इत्यमरः । तदा तत्काले अभ्यर्णे समीपे । 'उपकण्ठान्तिकाभ्यर्ण' इत्यमरः । वसतः वर्तमानस्य खगपतेः खगेश्वरस्य । 'वैनतेयः खगेश्वरः' इत्यमरः । हस्तं करतलमालम्ब्य आश्रित्य विष्वक्सेनः पारिषदोत्तमः । 'विष्वक्सेनमुखा यस्य पारिषद्याः परश्शतं' इत्यादिस्मृतेः । तेन निवेद्यमाना विनिवेदिता सरणिः पद्धतिर्यस्य स तथा-

अथ तमतर्कितोपनिष्क्रान्तमरविन्दनाभमवसरज्ञो विधिरर्धपथे समेत्य सह महर्षिभिर्विविक्तसेवावसरलाभविस्मयानन्दमन्थरः पश्यन्तमचलनिपातकौतुकं परिवार्य केवलमवतस्थे ।

नवकुवलयदामश्यामलस्निग्धमुग्धं
नलिननयनमाद्यं तत्त्वमालोकयन्तः ।
परिजहुरमरौघाश्चेतसा कार्यभारं
परिजहुरुभये ते पाणिभिश्शैलभारम् ॥ ४९ ॥

भूतस्सन् । 'सरणिः पद्धतिः पद्या' इत्यमरः । निर्ययौ निर्जगामेत्यर्थः । यथा लौकिको राजा स्वसमीपवर्तिप्रेमपात्रपरिजनस्य हस्ते स्वस्यान्यतरहस्तं निक्षिप्य निर्गच्छति तथैव भगवान्निर्जगामेति भावः । अथ समागतं श्रीहरिं दृष्ट्वा ब्रह्मा विद्यमानं पर्वतपातनक्रमदर्शनकौतूहलमपि त्यक्त्वा तमेव पश्यन्नासेत्याह ॥ **अथेति** ॥ अथानन्तरं अर्ध पन्थाः अर्धपथः । ऋक्पूरब्धूः पथामानक्षे इति समासान्तोऽप्रत्ययः । तस्मिन्नर्धमार्ग इत्यर्थः । अतर्कितः अनुत्प्रेक्षितः उपनतः प्राप्तः तथाभूतः तमरविन्दनाभं पद्मनाभं अवसरस्समयस्तं जानातीत्यवसरज्ञः विधिः ब्रह्मा । 'विधाता विश्वसृड्विधिः' इत्यमरः । महर्षिभिः वसिष्ठादिभिस्सह समेत्य समीपं गत्वेत्यर्थः । विविक्तो विजनप्रदेशः । 'विविक्तौ विजनच्छन्नौ' इत्यमरः । तस्मिन् सेवा परिचरणं तस्य क्रमः परिपाटी तस्य अवसरः समयः तस्य लाभः प्राप्तिः तेन यो विस्मयः आश्चर्यं अत्यन्तदुर्लभलाभादिति भावः । स च आनन्दश्चेति ताभ्यां मन्थरः मेदुरः विस्मयानन्दभरित इति भावः । तं भगवन्तं पश्यन् सन् अचलः मन्दराद्रिः तस्य पातः पतनं तस्मिन् कौतूहलं कुतुकं परिवार्य परिहृत्य तं केवलं श्रीहरिमेवेत्यर्थः । पश्यन् दर्शनं कुर्वन्नवतस्थे आसामासेत्यर्थः । समवप्रविभ्यः स्थ इति तिष्ठतेरात्मनेपदं लिट् । एतद्दर्शनादेव तस्य अमृतलाभात्तद्दर्शनादस्य तदभावादत्रैव तस्थाविति भावः ॥ **नवेति** ॥ नवानि सद्योविकसितानि यानि कुवलयानि नीलोत्पलानि । 'स्यादुत्पलं कुवलयं' इत्यमरः । तेषां दामानीव श्यामलो नीलः । 'कालश्यामलमेचकाः' इत्यमरः । तथाभूतः स्निग्धो मनोहरः मुग्धः सुन्दरश्च तथाभूतम् । 'मुग्धस्सुन्दरमूढयोः' इति विश्वः । नलिने पद्मे इव नयने नेत्रे यस्य स तथाभूतम् । 'वा पुंसि पद्मं नलिनं' इत्यमरः । तथाभूतं श्रीहरिं आद्यं जगत्कारणमित्यर्थः । तत्त्वं परमात्मानमित्यर्थः । 'तत्त्वं विलम्बमाने स्यात्स्वरूपे परमात्मनि' इति नानार्थमाला । विलोकयन्तः पश्यन्तः अमराणां देवानां ओघाः स्तोमाः । 'स्तोमौघनिकरव्रात' इत्यमरः । चेतसा चित्तेन । 'चित्तं तु चेतो हृदयं' इत्यमरः । कार्यममृतप्राप्त्युपायानुचिन्तनादिरूपं कर्म तदेव भारो धूः तं परिजहुः परितत्यजुरित्यर्थः । उभये द्वितये ते देवासुराः

ततश्च ।

सुरासुरकरोदरस्खलितशैलमूलस्थल-
स्थितोपलतलाहतिक्षुभितसिन्धुबन्धूत्थितः ।
भ्रमत्तिमितिमिङ्गिलभ्रमितवालकोलाहलैः
समं निखिलमम्बरं परिववार तारस्वनः ॥ ५० ॥
स्खलदचलसमुद्भवल्लोलकल्लोलकोलाहल-
व्यतिकरबधिरभ्रमत्कूर्मनक्रद्विपक्रन्दितैः ।
स्फुटितकमलजाण्डभाण्डप्रचण्डस्वनोत्प्रेक्षण-
क्षुभितविविधमुक्तहाहारवैश्चाहसीदच्युतः ॥ ५१ ॥

पाणिभिर्हस्तैः समुद्र इति शेषः । शैलस्य अद्रेर्भारं वहनम् । डुभृञ्धारण इति धातोर्भावे घञ्प्रत्ययः । यद्वा शैल एव भारः तमित्यर्थः । परिजह्रुः परिजह्रुः । मन्दरमुदधौ परिपातयामासुरिति भावः । अथ दूराद्दूरदेशादर्णवे मन्दरे पातिते तदा महानारव उदभूदित्याशयेनाह ॥ **सुरासुरेति** ॥ सुरासुराणां देवासुराणां करोदराणि हस्ततलानि तेभ्यः स्खलितः च्युतो यः शैलः मन्दरः तस्य यन्मूलस्थलं अधस्तलप्रदेशस्तस्मिन् ये स्थिता उपलाश्शिलाः तेषां तलानि अधःप्रदेशाः । 'तलं स्वरूपाधरयोः' इति नानार्थमाला । तैराहतिः आघातः तया क्षुभितः क्षोभं तारळ्यं प्रापितः स चासौ यस्सिन्धूनां सरितां बन्धु स्वजनः समुद्र इति तात्पर्यार्थः । 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियां' 'सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनास्समाः' इति चामरः । 'बन्धू बन्धूकबान्धवौ' इति नानार्थमाला च । तस्मादुत्थित उत्पन्नः तारध्वनिः उच्चरवः भ्रमन्तः विघूर्णमाना ये तिमयः मत्स्यविशेषाः तिमिङ्गिलास्तद्भक्षकमत्स्यविशेषाः । 'राजीवश्शकुलस्तिमिः । तिमिङ्गिलादयश्चाथ' इति चामरः । उभयेषां तेषां भ्रमितानि विघूर्णितानि यानि वालानि वालधयः तेषां कोलाहलाः कलकलाः । 'कोलाहलः कलकलः' इत्यमरः । तैस्तैस्समं निखिलं कृत्स्नं अम्बरं परिववार आवृतिं चकार ॥ **स्खलदिति** ॥ स्खलन्मज्जन् योऽचलो मन्दरः तेन करणभूतेन उद्भवन्तः उत्पद्यमाना ये लोलाः तरलाः कल्लोलास्तरङ्गाः तेषां यः कोलाहलः कलकलध्वनिः तस्य व्यतिकरः संपर्कः तेन । अथवा स्खलदचलस्य उद्भवल्लोलकल्लोनां चेति द्वयोर्यौ कोलाहलौ तयोस्सम्पर्कः तेनेति वा बोध्यम् । बधिराः अश्रोत्रेन्द्रियकल्पाः भ्रमन्तो घूर्णमानाः कूर्मनक्रद्विपा कच्छपग्राहगजाः । 'कूर्मे कमठकच्छपौ', 'ग्राहोऽवहारो नक्रस्तु', 'द्विरदोऽनेकपो द्विपः' इति चामरः । तेषां यानि क्रन्दितानि । भावे क्तः । रोदनान्याह्वानानीति वार्थः । 'क्रन्दितं रुदिताह्वाने' इति नानार्थमाला । तैः स्फुटितं कर्तरि क्तः । स्फोटं विदळनं प्राप्तमित्यर्थः । यत्कमलस्य ब्रह्मणः अण्डजं कोशः ।

निर्मग्नमन्दरमणिद्युतिसम्प्रदिग्धा
निष्पेतुरम्बरतले पयसः कणा ये ।
लग्नाश्चिराय लिकुचामलकाम्रमात्रा-
स्तारास्त एव परिणेमुरिति प्रतीमः ॥ ५२ ॥
पथि गिरिवरादस्माद्भाराबसन्नसुरासुर-
प्रतिपदकृतस्कन्धव्यत्याससम्भ्रमकम्पितात् ।
मणिभिरभितो यस्यां यस्यां भुवि स्खलितं क्वचि-
त्समजनि खनिस्सा सा नाम स्थलेषु जलेषु च ॥ ५३ ॥

अपि च । विदूरादम्बरतलादापततोऽस्य महता वेगेन

---

'पेशी कोशो द्विहीनेऽण्डं' इत्यमरः। तदेव भाण्डं कटाहरूपभाजनम्। 'सर्वमावपनं भाण्डं पात्रामत्रे च भाजनं' इत्यमरः । तस्य यः प्रचण्डस्वनः दुस्सहध्वनिः स इत्येवं यदुत्प्रेक्षणं ऊहः तेन क्षुभिताः क्षोभं तारळ्यं प्रापिताः ये विबुधा देवाः तैः मुक्ताः कृता हाहारवाः हाहाध्वनयः तैश्चाच्युतः श्रीहरिः अहसीत् हासं चकारेत्यर्थः । को वा तत्त्वज्ञः पामरानमरान् दृष्ट्वा न हसतीति भावः ॥ **निर्मग्नेति** ॥ निर्मग्नः नितरामापातालं मज्जनमाश्रित इत्यर्थः । यो मन्दरः तस्य ये मणयः वज्रादयः तेषां द्युतयः । 'भाश्छविर्द्युतिर्दीप्तयः' इत्यमरः । ताभिस्सह प्रदिग्धाः व्याप्ताः लिप्ता इति वार्थः । पयसः क्षीरस्य । 'पयः क्षीरं पयोऽम्बु च' इत्यमरः । ये कणाः लेशाः । 'लवलेशकणाणवः' इत्यमरः । अम्बरतले व्योम्नि । 'व्योम पुष्करमम्बरं' इत्यमरः । निष्पेतुरुत्पतनं चक्रुरित्यर्थः । लिकुचामलकाम्राणि लिकुचामलकचूतफलानि प्रमाणं येषां ते तथा । प्रमाणे द्वयसज्दघ्नञ्मात्रच इति मात्रच्प्रत्ययः । 'लकुचो लिकुचो डहुः' 'तिष्यफला त्वामलकी त्रिषु' 'आम्रश्चूतो रसालोऽसौ' इति चामरः । चिराय चिरकालात् । 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः' इत्यमरः । लग्नाः संक्रान्ताः ते कणा एव ताराः । 'भं तारा तारकाप्युडु वा स्त्रियां' इत्यमरः । परिणेमुः परिणतिमापुः । इतीत्थं प्रतीमः जानीमः ॥ **पथीति** ॥ पथि मार्गे क्वचित्कुत्रचिद्भारः धूः तेन अवसन्नाः संपीडिताः ये सुरासुराः तैः । प्रतिपदं वीप्सायामव्ययीभावः । कृतः रचितः स्कन्धानामंसानां व्यत्यासः विपर्यासः तद्भुजं विहाय एतद्भुजे वहनमेतद्भुजं विहाय तद्भुजे वहनमिति भावः । तस्मिन् संभ्रमस्त्वरा तेन कम्पिताच्चालितात् अस्माद्गिरिवरान्मन्दरान्मणिभिः यस्यां भुवि भूमौ स्खलितं । भावे क्तः । स्खलनं जातमित्यर्थः । स्थलेषु प्रदेशविशेषेषु जलेषु च सा सा भूः खनिराकरः समजनि अभवत् । 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः ॥ **अपि चेति** ॥ **दूरेति** ॥ दूराच्चिरकालगन्तव्यादित्यर्थः । गगनतलादन्तरिक्षदेशात् आपततः पतनं कुर्वत

प्रकीर्यमाणे पर्यन्तगते निरवशेषं परिपीयमाने च दरीमुखैरेव परिसरगते पयसि, शून्यमिवार्णवं मन्यमाना नभश्चरा निर्ममज्जुरुभयेऽपि भये। उन्मथितेषु च तन्मूलघट्टनादर्णवचरेषु जन्तुषु, ततः परिभ्रष्टाः करिण एव जलकरिणः, किराता एव जलमानुषाः, निर्झरचराश्शफरा एव तिमयश्च तिमिङ्गिलाश्च सम्पेदिरे। अपि च। पुनरवगाहमाने रसातलं गिरावभ्यर्णगतं दुग्धमादायादाय सुखमभिषिञ्चन्तः पारमेश्वरं लिङ्गमभ्यनन्दन्नन्दिमुखा गणाः। ऊर्ध्वमाद्युलोकादुत्पत-

---

इत्यर्थः। अस्य मन्दराद्रेः महता अधिकेन वेगेन गतिशैघ्र्येण पर्यन्तः आसन्नदेशस्तद्गते तं प्राप्ते पयसि प्रकीर्यमाणे विक्षिप्ते सति दर्यः कन्दराः ता एव मुखानि मुखभागाः तैरेव मुखैः वदनैः। श्लिष्टरूपकमेतत्। परिसरगते केवलसमीपदेशं प्राप्ते पयसि निरवशेषं निश्शेषं परिपीयमाने पीते सतीत्यर्थः। अर्णवमब्धिं शून्यमिव रिक्तमिव। 'असारं फल्गु शून्यं तु वशिकं तुच्छरिक्तके' इत्यमरः। मन्यमाना जानन्तः नभसि चरन्तीति नभश्चराः देवासुराः उभये च भये भीतौ निर्ममज्जुः मग्ना बभूवुरित्यर्थः। एतावानायासः वृथा सञ्जात इत्यभिप्रायेण भीता इति भावः॥ **उन्मथितेष्विति**॥ किञ्च तस्य मन्दरस्य मूलमधोदेशः तेन संघट्टनं घर्षणं तस्मादर्णवचरेषु समुद्रचारिषु जन्तुषु प्राणिषु उन्मथितेषु सत्सु ततो मन्दरात् परिभ्रष्टाः च्युताः करिणो गजा एव जलकरिणः जलगजाः किराताः व्याधा एव जलमानुषाः निर्झराः गिरिनद्यः तेषु चरास्सञ्चारिणः शफराः मीना एव तिमयः तिमिनामकमत्स्याः तिमिङ्गिलाश्च तिमिङ्गिलनामकमत्स्यविशेषाश्च संपेदिरे बभूवुरित्यर्थः॥ **अपि चेति**॥ रसातलं पातालावधीत्यर्थः। गिरौ मन्दरे पुनश्शब्दोऽत्यर्थः अवगाहमाने प्रविशति सति शिखरस्था इति शेषः नन्दिमुखाः नन्दीश्वरप्रभृतयः गणाः प्रमथगणाः अभ्यर्णे अन्तिकं गतं प्राप्तं दुग्धं पयः सुखमनायासतः आदाय गृहीत्वा पारमेश्वरं परमेश्वरसम्बन्धि लिङ्गं स्फटिकमरकतबाणवज्रादिरूपमित्यर्थः। अभिषिञ्चन्तः अभिषेकं कुर्वन्तस्सन्तः अभ्यनन्दन् सन्तोषं प्रापुरित्यर्थः। क्षीराभिषेककरणलाभादिति भावः। शिवलिङ्गाराधनमाहात्म्यमुक्तं दीपिकायां। 'शिवलिङ्गसहस्राणां पूजया यत्फलं भवेत्। ततश्शतगुणं पुण्यं लिङ्गेऽनादिसमुद्भवे॥ तस्माच्छतगुणं प्रोक्तं रत्नलिङ्गस्य पूजने। गोमेधिकादिलिङ्गानि रत्नलिङ्गानि संज्ञिताः॥ रत्नलिङ्गसहस्राणां पूजया यत्फलं भवेत्। ततश्शतगुणं पुण्यं धातुलिङ्गस्य पूजने॥ धातुलिङ्गेष्वपि श्रेष्ठं हेमलिङ्गमिति श्रुतम्। धातुलिङ्गसहस्राणां पूजया यत्फलं भवेत्॥ ततश्शतगुणं पुण्यं मृत्तिकालिङ्गपूजने। मृल्लिङ्गानां

ता च दुग्धपूरेण परिप्लाविता सिद्धनदी बभूव दुग्धनदी। संसिक्ताश्च पयसा मधुरेण सर्वतो नन्दनोद्यानवनपादपास्तदादि सुधामधुराणि सुवते फलानि।

मज्जन्मन्दरशैलकन्दरपुटव्याघूर्णदर्णोभर-
स्वैरोज्जागरघोषभीषणपयःकल्लोलिनीवल्लभाः।
खेदस्तम्भितकिम्पचानविबुधप्रारब्धभूरिस्तवा
गोविन्दस्य कुतूहलं विदधिरे ते केचिदेकक्षणाः॥ ५४॥

---

'सहस्रस्य पूजया यत्फलं भवेत्॥ ततश्शतगुणं प्रोक्तं बाणलिङ्गस्य पूजने। ततोऽनन्तगुणं प्रोक्तं रसलिङ्गस्य पूजने।' इति। सारसङ्ग्रहे तु। 'शिवनाभिमयं लिङ्गं नित्यं पूज्यं मनीषिभिः। यच्छ्रेष्ठं सर्वलिङ्गेभ्यो गौरीसाम्बं न संशयः' इति। तत्रैव। 'कृते रत्नमयं लिङ्गं त्रेतायां हेमसंभवं। द्वापरे पारदं श्रेष्ठं पार्थिवन्तु कलौ युगे॥' इति। बाणलिङ्गपरीक्षाप्रकारः शिवरहस्ये। 'त्रिपञ्चसप्तधा या तु तुलातुलितमादरात्। न याति समतां कर्तुं बाणलिङ्गमिति श्रुतं। सर्पाठमसपीठं वा बाणलिङ्गं शिवात्मकं। पूजनीयं प्रयत्नेन भुक्तिमुक्तिफलेप्सुभिः॥ सालग्रामसहस्रेभ्यो बाणलिङ्गं विशिष्यते।' इति च। 'शिवलिङ्गार्चनेनैव मुक्तिर्भवति नान्यथा' इति। प्रकृतमनुसरामः॥ **ऊर्ध्वमिति**॥ आयुर्लोकात् स्वर्गलोकावधीत्यर्थः। ऊर्ध्वं ऊर्ध्वदेशं प्रति उत्पतता उत्पतनं कुर्वता दुग्धपूरेण क्षीरपूरेण परिप्लाविता सेचिता सिद्धनदी गङ्गा दुग्धनदी क्षीरनदी बभूव सञ्जातेत्यर्थः॥ **संसिक्ता इति**॥ नन्दनोद्यानवनं नन्दनसंज्ञिकारामः। तस्मिन् ये पादपाः वृक्षाः ते सर्वतः स्कन्धशाखादिनिखिलदेशे यदेति शेषः। मधुरेण मधुररसेन पयसा क्षीरेण संसिक्ताः सम्यक्सेचनं प्राप्ताः तदादि क्रियाविशेषणमेतत्। तत्कालमारभ्येति तात्पर्यार्थः। सुधा पीयूषं तद्वन्मधुराणि मधुररसविशिष्टानि फलानि सुवते जनयन्तीत्यर्थः। अथ मन्दरपातसमयो भगवतः हर्षायाजनीत्याशयेनाह॥ **मज्जन्निति**॥ मज्जन् मज्जनं कुर्वन् यो मन्दरः तस्य कन्दराः दर्यः। 'दरी तु कन्दरो वा स्त्री' इत्यमरः। तेषु पुटं यथा तथा वक्रं बुद्बुदं वा यथा तथेत्यर्थः। 'चक्राणि पुटभेदाः स्युः' इत्यमरः। व्याघूर्णन्ति प्रवहन्ति यान्यर्णांसि जलानि। 'अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरं' इत्यमरः। तेषां भरोऽतिशयः। 'भरोऽतिशयभारयोः' इति नानार्थमाला। तस्य स्वैरं स्वच्छन्दं यथा तथा। 'मन्दस्वच्छन्दयोस्स्वैरं' इत्यमरः। यः उज्जागरः जागरूको घोषः नादः। 'स्वाननिर्घोषनिर्ह्रादं' इत्यमरः। तेन भीषणो भयङ्करः। 'दारुणं भीषणं भीष्मं' इत्यमरः। तथाविधः पयःकल्लोलिनीवल्लभः क्षीरसरित्पतिः येषु ते

मज्जति मज्जति शैले पतति च पततीह कुलमिदं द्युसदाम्
शरणं शरणमतस्त्वं शार्ङ्गधरेति प्रचुक्रुशे विबुधैः ॥ ५५ ॥

ततश्चकितसुरासुरस्तोमसंस्तूयमानो भगवानरविन्दलोचनः प्रसादविमलपावनैः परिवहत्करुणासारसान्द्रितैः कटाक्षैरनुगृह्य, कल्पतरुपल्लवोल्लासिना कैवल्यलक्ष्मीनिवासमन्दिरेण करारविन्देन तानाश्वासयामास । तत्क्षणं च भूभारभञ्जुरभुजङ्ग-

तथाभूताः । अत्र कल्लोलिनीशब्दस्तरङ्गिणीशब्दपर्याय इति बोध्यम् । खेदेन सन्तापेन स्तम्भिताः स्तब्धाः कृता ये किंपचानविबुधाः क्षुद्रदेवाः । 'कदर्ये कृपणक्षुद्रकिंपचानमितम्पचाः' इत्यमरः । 'विबुधौ देवविद्वांसौ' इति नानार्थमाला च । तैः प्रारब्धाः उपक्रान्ताः भूरि स्तवाः स्तुतयो येषु ते तथाभूताः । 'स्तवः स्तोत्रं स्तुतिर्नुतिः' इत्यमरः । ते तथाविधाः केचित् एके एकक्षणाः मुख्यकालविशेषाः । 'एकोऽन्यार्थे प्रधाने च' 'निव्यापारस्थितौ कालविशेषोत्सवयोः क्षण' इत्यमरः । गोविन्दस्य कुतूहलं कौतुकं । 'कुतुकं च कुतूहलं' इत्यमरः । विदधिरे चक्रुरित्यर्थः ॥ **मज्जतीति** ॥ यत इत्यादिः । शैले मन्दरपर्वते मज्जति मग्ने सति दिवि सीदन्तीति द्युसदः देवाः । सत्सूद्विषेत्यादिना क्विप् । तेषां कौतुकं कुतूहलं मज्जति मग्नं भवतीत्यर्थः । वर्तमाने लट् । शैले पतति गच्छति सति । पत्लृ गताविति धातोर्लटश्शत्रादेशः । द्युसदां कौतुकं च पतति गच्छति । पूर्ववल्लट् । अतः कारणात् हे शार्ङ्गधर विष्णो त्वं भवानिह शरणं रक्षकः । 'शरणं गृहरक्षित्रोः' इत्यमरः । इतीत्थं विबुधैः देवैः प्रचुक्रुशे रोदनमाह्वानं वा कृतमित्यर्थः । क्रुश आह्वाने रोदने चेति धातोर्भावे लिट् । अत्र शार्ङ्गधरेति विशेष्यं रक्षणसामर्थ्यसत्ताभिप्रायगर्भमिति परिकराङ्कुरालङ्कारः । 'साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः' इति लक्षणात् ॥ **तत इति** ॥ ततो विबुधाक्रोशानन्तरं चकिता भीता ये सुरासुराः तेषां स्तोमेन संस्तूयमानः स्तुतः भगवानरविन्दलोचनः श्रीहरिः प्रसादः अनुग्रहः तेन विमलाः निर्मलाः तथाभूतैः प्रवहन्ती प्रसरन्ती या करुणा कृपा तस्याः आसारः अविच्छेदस्रुतिः तेन सान्द्रितैः मेदुरीकृतैः । 'सान्द्रः स्निग्धस्तु मेदुर' इत्यमरः । कटाक्षैः अपाङ्गदर्शनैः । 'कटाक्षोऽपाङ्गदर्शन' इत्यमरः । अनुगृह्य अनुग्रहं कृत्वा सादरं दृष्ट्वेति भावः । कल्पतरुपल्लवः कल्पवृक्षकिसलयम् । 'मत्स्येऽथ पल्लवः । अस्त्री प्रवाळे ना षिड्ग' इति नानार्थमाला । तद्वदुल्लासिना विकासशीलेनेत्यर्थः । प्रार्थितार्थदातेति भावः । कैवल्यं मुक्तिः । 'मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतं' इत्यमरः । तदेव लक्ष्मीः तस्याः निवासमन्दिरेण आवासस्थानेन करारविन्देन हस्तपद्मेन

१. पततीह कौतुकं द्युसदां इति व्याख्यात्रभिमतः पाठः ।

**पुङ्गवभोगवलयपरिबृंहणादिव कुलिशकर्कशेन शाणनिकृष्टवज्र-फलकस्निग्धेन सर्वतोऽप्यशेषभुवनात्मनाप्ययुतयोजनमात्रवि-स्तारशालिना चरमाङ्गेन, पाराशर्यसंक्षेपपरिमितैरनुश्रवैरेव च-तुर्भिश्चरणैः, सङ्कोचविकासशीलया माययेव कन्धरया, सम-स्तागमस्तोममस्तकेनेव च मस्तकेन परमाद्भुतेन समुद्भवन्नव-**

---

तान् देवासुरान् आश्वासयामास समादधे ॥ **तत्क्षणं चेति** ॥ अथ भगवान् कमठरूपी सन्नवततारेत्याह ॥ **भूभारेति** ॥ कुलिशं वज्रायुधं तद्वत्कर्कशं कठिनं । 'कुलिशं बिदुरं पविः' इत्यमरः । कर्कशं कठिनं क्रूरमिति च । तथाभूतेन शाणः कषोपलः शाणचक्रमिति यावत् । 'शाणस्तु निकषः कषः' इत्यमरः । तेन निघृष्टं समीकृतं यद्वज्रफलकं अखण्डहीरकं तेनेव स्थितेन । 'वज्रोऽस्त्री हीरकेऽपि वा' इति विश्वः । स्निग्धेन मसृणेन मेदुरेणेति वार्थः । 'चिक्कणं मसृणं स्निग्धं' 'सान्द्रः स्निग्धस्तु मेदुर' इति चामरः । अशेषं कृत्स्नं यद्भुवनं लोकः तदेव आत्मा शरीरं यस्य सः । 'विश्वमशेषं कृत्स्नं' इत्यमरः । 'विष्टपं भुवनं जगत्' 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इति सर्वत्रामरः । सर्वतोऽपि सर्वत्रापि अयुतयोजनानि दशसहस्रसङ्ख्याकानि योजनानि प्रमाणं यस्य सः । प्रमाणे द्वयसज्जित्यादिना मात्रच्प्रत्ययः । अयुतयोजनमात्रश्चासौ यो विस्तरः विवृत्तिः । 'विस्तारो विग्रहो व्यासस्स तु शब्दस्य विस्तर' इत्यमरः । तेन शालिना शोभिनेत्यर्थः । परिमितौ क्रियमाणायामाहत्य दशसहस्रयोजनविस्तारोऽस्ति पृष्ठभाग इति भावः । अत्रेदं बोध्यम् । 'धन्वन्तरसहस्रं तु क्रोशः क्रोशद्वयं पुनः । गव्यूतं स्त्री तु गव्यूतिस्तद्द्वयं योजनं मतम् ॥' इति । चरमाङ्गेन पृष्ठभागेन । पराशरस्य अपत्यं पुमान् पाराशर्यः व्यासः तत्सम्बन्धी यस्संक्षेपः स्वल्पीकरणं तेन परिमिताः इयत्तां प्राप्तास्तथाभूताः अनुश्रवा वेदास्तैरेव चरणैः चतुर्भिः पादैः सङ्कोचविकासौ ह्रस्ववृद्धी फलं यस्यास्सा तथाभूतया मायया त्रिगुणात्मकप्रकृत्या प्रळयकाले तस्यास्सङ्कोचः सृष्टिकाले तस्याः विकास इति भावः । तयैव स्थितया कन्धरया ग्रीवया । 'कण्ठो गळोऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि' इत्यमरः । समस्तास्सकलाः ये आगमाः वेदाङ्गशास्त्राणि । 'आगमस्त्वागते शास्त्र' इति नानार्थमालायाम् । तेषां स्तोमः समूहः तस्य मस्तिष्कं घनीभूतस्सारांशः । 'तिलकं क्लोम मस्तिष्कं गोर्दं किट्टं मलोऽस्त्रियां' इत्यमरः । तेनैव स्थितेन परमाद्भुतेन अत्याश्चर्यकरेण कदाप्यदृष्टत्वादिति भावः । मस्तकेन मूर्ध्ना । 'मूर्धा ना मस्तकोऽस्त्रियां' इत्यमरः । भूभारेण भङ्गुरो यो भुजङ्गपुङ्गवः शेषः तस्य यो भोगः कायः तस्य ये वलयाः वेष्टनाः तेषां बृंहणादभिवृद्धेरिवेत्यर्थः । बृहि वृद्धाविति धातोः परिपूर्वाद्भावे ल्युट्प्रत्ययः । आगळं कायं बहुवलयं कृत्वा गळदेशमुत्क्षि-

निगर्भात् चापमुक्त इव सायकस्समग्रेण रंहसा समुत्पपात महान् कमठः ।

प्रत्युद्यत्कमठकठोरपश्चिमाङ्ग-
व्यासङ्गप्रशिथिलमूलसन्निवेशः ।
उत्क्षिप्तः प्रतनुरिवोपलो बलिष्ठैः
अद्रिर्द्रागुदपतदर्णवाद्विदूरे ॥ ५६ ॥

उद्भ्रान्तसागरपयोभररिक्तगर्भ-
पर्यन्तकन्दरगळत्पवनो गिरीन्द्रः ।
मग्नोत्थितस्सलिलतो महता श्रमेण
निस्सीमनिःश्वसितखिन्न इवाबभासे ॥ ५७ ॥

---

प्य च भूमिं धृतवतश्शेषस्य एकत्रैव देवासुरावस्थानप्रयुक्तभारवशाद्भूळदेशस्य नमनात्सोऽप्येको वलयस्सञ्जात इति वलयाभिवृद्धिरिति भावः । अवनी भूमिस्तस्याः गर्भः कुक्षिदेशः । 'कुक्षिभ्रूणार्भका गर्भा' इत्यमरः । तस्माच्चापो धनुस्तस्मान्मुक्तः उत्सृष्टः सायको बाण इव । 'धनुश्चापो धन्वशरासनकोदण्ड कार्मुकं' 'शरे खड्गे च सायका' इति चामरः । समग्रेणाखण्डेन । 'समग्रं सकलं पूर्णमखण्डं स्यात्' इत्यमरः । रंहसा वेगेन । 'रंहस्तरसी तु रयः स्यदः' इत्यमरः । समुद्भवन्नाविर्भवन् महानाधिकः कमठः कूर्मः । 'कूर्मे कमठकच्छपौ' इत्यमरः । समुद्र इति शेषः । समुत्पपात उत्प्लुत्य पतनं चकारेत्यर्थः । उत्पद्यमान एव समुद्रमाविवेशेति भावः ॥ **प्रत्युद्यदिति** ॥ प्रत्युद्यन् प्रत्यागच्छन् यः कमठः कूर्मः तस्य यत्कठोरं कठिनं पाश्चिमाङ्गं पृष्ठभागः । 'कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढं' इत्यमरः । तस्य व्यासङ्गः सम्बन्धः तेन प्रशिथिलः अजीर्णभुग्न इत्यर्थः । तथाविधः मूलसन्निवेशः मूलप्रदेशः यस्य सः । अद्रिर्मन्दराचलः बलिष्ठैः केवलबलशालिभिः उत्क्षिप्तः बलाद्दूरं प्रपातित इत्यर्थः । प्रतनुः सूक्ष्मः उपलः पाषाण इव अर्णवात्समुद्रात् । ल्यब्लोपे पञ्चमी । विदूरे उदपतत् पाताळादुदक्षिपत् अत्र पाताळात् द्राक् मन्दरोद्धारणार्थमेवमूर्ध्वमुद्गच्छतः कूर्मस्य पृष्ठभागेन ऊर्ध्वदेशात् उत्क्षिप्तस्य मज्जतो मन्दरस्य सङ्घर्षणात् श्लक्ष्णीभावः । ततः तत्पृष्ठावधूननपूर्वप्रक्षेपादर्णवं विहाय बलाद्बलिष्ठोत्क्षिप्तलोष्टवद्दूरे पातश्चासीदिति भावः ॥ **अपि चेति** ॥ उद्भ्रान्तान्युद्गीर्णानि यानि सागरपयांसि तेषां भराः धुरः । 'भरोऽतिशयभारयोः' इति नानार्थमाला । तैः रिक्ताः शून्याः गर्भा येषां ते तथाविधा ये पर्यन्तकन्दराः परिसरदर्यः तेभ्यो गळन् निस्सरन् पवनो वायुर्यस्य स तथाभूतः गिरीन्द्रो मन्दरः सलिलतो जलान्मग्नोत्थितः । स्नातानुलिप्तवत्समासः । अत एव महता अधिकेन श्रमेण आयासेन

आलक्ष्य च तदाश्चर्यमानन्दमन्थरेषु बृन्दारकेषु, कृतार्था वयममुनानुग्रहेण किमतः परं करवामेति विज्ञापयत्सु विनयेन गरुडध्वजं, समानयत वासुकिमित्यनुशशास समीपगतश्चतुराननः। ततस्तथेति प्रतिगृह्य शासनं तस्य निर्जिहाना बहिर्निर्जरास्समानग्रामा यूयमेव समानयत वासुकिं सान्त्वनेनेति प्रार्थयामासुरसुरवरान्।

प्रागेव पाताळजुषां प्रवृत्तिं जिज्ञासवो दारकुमारकाणाम्।
ते मन्दरोद्धारबिलाध्वनैव सद्योऽवतेरुर्दनुजाः प्रहृष्टाः॥ ५८॥

प्रविशन्तश्च ते ददृशुरतर्कितोद्धृतमन्दरमूलकन्दरोद्भ्रान्तमू-

---

निस्सीमानि निर्मर्यादानि निःश्वसितानि यस्य स तथाभूतश्चासौ यः खिन्नः खेदयुक्तः तादृशः पुमानिव आबभासे प्रचकाशे अत्र पुमानिति शेषो बोध्यः॥ **आलक्ष्येति**॥ तदाश्चर्यं तं विस्मयमालक्ष्य दृष्ट्वा आनन्देन सुखेन मन्थराः अलसाः तथाभूतेषु बृन्दारकेषु देवेषु विनयः नमनादिः। 'विनयो नतिधर्मादिशिक्षाचारप्रशान्तिषु' इति नानार्थमाला। तेन गरुडध्वजं श्रीहरिं किमितः परं इत उत्तरं किं करवाम किं कर्तव्यमिति विज्ञापयत्सु निवेदयत्सु सत्सु समीपगतः अन्तिकस्थः चतुराननो ब्रह्मा वासुकिं सर्पराजं। 'वासुकिस्तु सर्पराजोऽथ गोनस' इत्यमरः। समानयत समागमयतेत्यर्थः। इतः परं वासुक्यागमनेन भवितव्यमिति भावः। इतीत्थमाशशास आदिदेशेत्यर्थः॥ **तत इति**॥ ततोऽनन्तरं तथेति तथा भवत्वित्यर्थः। तस्य ब्रह्मणश्शासनमादेशं प्रतिगृह्य स्वीकृत्य बहिः बाह्यदेशं प्रतीत्यर्थः। 'सना नित्ये बहिर्बाह्ये स्मातीतेऽस्तमदर्शने' इत्यमरः। निर्जिहाना निर्गच्छन्तः निर्जरा देवाः समानग्रामाः एकग्रामवासिनो यूयमेव वासुकिं सर्पराजं सान्त्वनेन प्रियवचनेन। 'सान्त्वनं प्रियभाषणं' इत्यमरः। समानयत समानयनं कुरुध्वं इतीत्थं असुरवरान् बल्यादीन् प्रार्थयामासुः प्रार्थनं चक्रुरित्यर्थः॥ **प्रागिति**॥ पाताळं पाताळलोकं जुषन्ते सेवन्त इति ते तथा। जुषी प्रीतिसेवन इति धातोः क्विप्। तथाभूतानां दारकुमारकाणां कळत्रपुत्रादीनां प्रवृत्तिं वृत्तान्तम्। 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः। प्रागेव आदेशात्पूर्वमेव जिज्ञासवः ज्ञातुमिच्छवः ते दनुजा असुराः प्रहृष्टास्सन्तुष्टास्सन्तः सद्य एव प्रार्थनासमकालमेव मन्दरस्योद्धारः उद्धरणं तस्य बिलाध्वा रन्ध्रमार्गः तेनैव अवतेरुः अवतीर्णा बभूवुरित्यर्थः॥ **प्रविशन्त इति**॥ प्रविशन्तः प्रवेशं कुर्वन्तः ते दानवाः अतर्कितमसम्भावितं यथा तथा उद्धृतः उत्पाटितः यः मन्दरः तस्य ये मूलकन्दराः तैरुद्भ्रान्ता उद्गीर्णाः मूर्च्छिताः मूर्च्छनं प्राप्ताः ये पन्नगास्सर्पाः तेषामाश्वासनं खेदापनयनं तदर्थं परिभ्रान्ता विघूर्णमाना ये बन्धुजनाः पुत्रमित्रादयः तैर्निरन्तरं निरवकाशं

र्च्छितपन्नगाश्वासनपरिभ्रान्तबन्धुजननिरन्तरं, अर्णवनिमज्जदचलराजसम्मर्दनिर्दळदतलवितलादिलोकनिष्पेषघोषभीषिताश्वसदाश्वस्तविहस्तजानपदजनाकीर्णं, अतितूर्णमुद्गच्छदादिकच्छपनिष्ठुरपृष्ठसङ्घट्टनस्फुटितशैलशिलाभङ्गसमुच्चलदभङ्गुरस्फुलिङ्गपरिष्वङ्गदन्दह्यमाननगरग्रामपल्लीनिवेशं, निरन्तरोत्पातधारानिरीक्षणसाध्वसेन पतिष्यति नाम भूतलं, चलिष्यति नाम सुमेरुः, स्फुटिष्यति नाम विध्यण्डकपालं, प्रवेक्ष्यति नाम सागरः, परित्यक्ष्यति नाम शेषो भुवनभारमित्यसम्भावितमूलमनुक्षणमुच्चलन्तीभिः किंवदन्तीभिस्समाकुलमभितो रसातलम् ।

---

सान्द्रमिति यावत् । अर्णवे निमज्जन् नितरां मज्जनं कुर्वन् योऽचलराजो मन्दरस्तस्य सम्मर्दस्सङ्घर्षणं तेन निर्दळन्तः विस्फुटन्तः येऽतलवितलादयो लोकाः तेषु ये लोकाः जनाः । 'लोकस्तु भुवने जन' इत्यमरः । तेषां निष्पेषो नितरां पेषणं तेन यो घोषो नादः तेन भीषिताः भीताः आश्वसन्तः इतरखेदानपनयन्तः आश्वस्ता इतरैः आश्वासं प्रापिताश्च ये विहस्ताः व्याकुलाः । 'विहस्तव्याकुलौ समौ' इत्यमरः । जानपदजनाः देशीयजनाः तैराकीर्णं व्याप्तमित्यर्थः । अतितूर्णं अतिशीघ्रं । 'सत्वरं चपलं तूर्णं' इत्यमरः । उद्गच्छन् उत्पतन् उद्भवन्निति वा । यः आदिकच्छपो महाकूर्मः तस्य निष्ठुरं शिलाः सत्पृष्ठं चरमाङ्गं तस्य सङ्घट्टनमाघातः तेन स्फुटिता दळिताः याः शैलमन्दरोपलाः तासां भङ्गो नाशः तेन समुच्चलन्तः उत्पतन्तः ये अभङ्गुराः अनश्वराः स्फुलिङ्गाः अग्निकणाः तेषां यः परिष्वङ्गः सम्बन्धः तेन दन्दह्यमाना अतिशयेन भस्मीभूताः ये नगरग्रामपल्लीनिवेशाः यस्मिन् तत् पुरसंवसथकुटीगृहा यस्मिन् तादित्यर्थः । 'नगरं नगवत्पुर' इति हेमचन्द्रः । 'समौ संवसथग्रामौ' इत्यमरः । 'कुटीग्रामकयोः पल्ली' इति शाश्वतः । 'निवेशश्शरणं क्षय' इत्यमरश्च । निरन्तरं सन्ततं यदुत्पातधाराणां उल्कापातधूमकेतुरक्तपरिवेषादिभाव्यशुभसूचकपरम्पराणां निरीक्षणं दर्शनं तस्माद्यत्साध्वसं भयं तेन भूतलं भूलोकः पतिष्यति पतनं करिष्यति नाम स्वोपरीति भावः । सुमेरुः हेमाद्रिः चलिष्यति नाम गमिष्यति किलेत्यर्थः । विध्यण्डकपालं ब्रह्माण्डकटाहः स्फुटिष्यति नाम दळिष्यति किमित्यर्थः । सागरः अर्णवः प्रवेक्ष्यति नाम प्रवेशं करिष्यति किं रसातलं प्रतीति शेषः । आदिशेषः भुवनभारं लोकधुरं परित्यक्ष्यति नाम परित्यागं करिष्यति किं असम्भावितमतार्कितं मूलं मन्दरोद्धरणादिलक्षणं यस्मिन् कर्मणि तत्तथा अनुक्षणं प्रतिक्षणं उच्चलन्तीभिः उद्भवन्तीभिः

समागम्य ते वासुकिं संभाजिता यथोचितं, समावेद्य सागरमथनसंरम्भमनुपदमेव कथान्ते कथयामासुश्शनैरेव भवितव्यं भवता मन्दरवेष्टनदाम्नेति। अनुमोदमानो वचनममीषां आह च स्मेदमुरगपतिः। 'अहो चिराय मया श्रुतोऽयमभ्युदयो भ्रातृजनस्य। यत्किल समागम्य दैतेयैरादितेयास्साधयन्ति मनीषितं तत्र स्वयमनियुक्तैरपि काद्रवेयैर्भ्रातृभिः तत्साहायकमाचरितव्यमिति न्याय एव चोदयति, अत्र किमावेदनेन भवताम्। परं तु।

मूले वालधिमग्रतस्सुरगिरेर्मौळिं च मे बध्नता
कल्पे प्राचि पिनाकिना भगवताकृष्टोऽस्मि यल्लीलया।

---

किंवदन्तीभिः जनश्रुतिभिः तादात्विकप्रवादैरिति यावत्। 'किंवदन्ती जनश्रुतिः' इत्यमरः। अभितः समाकुलं व्याकुलं रसातलं पाताळं ददृशुः दर्शनं चक्रुरित्यर्थः॥ **समागम्येति**॥ ते दानवाः वासुकिं सर्पराजं समागम्य संप्राप्य यथोचितं यथायोग्यं। 'उचितं स्यान्मितं योग्य' इति नानार्थरत्नमाला। सभाजिताः सत्कृतास्सन्तः। तेनेति शेषः सागरमथने संरम्भः उपक्रमः तं समावेद्य निवेद्य अनुपदं अव्यवहितोत्तरक्षण एव। कथा नाम प्रकृते आगमनक्षणोचितप्रस्तावः तस्यान्तेऽवसाने शनैः मन्दमित्यर्थः। भवता त्वया मन्दरः वेष्टयतेऽनेनेति करणे ल्युट्प्रत्ययः। मन्दरवेष्टनं यद्दाम रज्जुः तत्स्थानीभवितव्यं वर्तितव्यं इतीत्थं कथयामासुः ऊचुरित्यर्थः॥ **अन्विति**॥ अमीषां दानवानां वचनमनुमोदमानस्सन्तुष्यन्नित्यर्थः। उरगपतिः वासुकिः सस्मेरं सस्मितं यथा तथा आह च अवदच्चेत्यर्थः॥ **अहो इति**॥ भ्रातृजनस्य देवासुराणामिति तात्पर्यार्थः। अयमभ्युदयः समुद्रमथनादमृतप्राप्तिलक्षणश्श्रेय इत्यर्थः। चिराय चिरकालस्य। 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थका' इत्यमरः। श्रुतः कर्णगोचरीकृतः अहो इति हर्षे॥ **यदिति**॥ आदितेया देवाः दैतेयैरसुरैस्समागम्य मिळित्वा यन्मनीषितं यत् प्रयोजनं किल साधयन्ति सम्पादयन्ति तत्र तस्मिन् प्रयोजनविषये अनियुक्तैरननुज्ञातैः अप्रार्थितैरपीति वार्थः। भ्रातृभिः काद्रवेयैस्सहोदरैः नागैः। 'विष्वक्सन्तमसं नागाः काद्रवेयास्तदीश्वरा' इत्यमरः। साहायकं सहायस्य कर्म अनुवर्तनं तन्नियोगानुरूपमाचरितव्यं कर्तव्यमित्येवं न्यायस्सदसद्विवेक एव मां चोदयति प्रेरयति अत्रास्मिन्नर्थे भवतां युष्माकं आवेदनेन विज्ञापनेन किं फलमिति शेषः॥ **परं त्विति**॥ परन्तु किंत्विर्थः। प्राचि प्राक्तने कल्पे पद्मादिसंज्ञ-

तत्कालश्लथसन्धिबन्धपरिवृत्तास्थीनि मर्माणि ता-
न्यद्यापि स्मितजृम्भितक्षवथुषु स्वाच्छन्द्यमुच्छिन्दते ॥

अपि च ।

यस्तल्पेष्वपि कोमलेषु शयितुं शक्नोमि नाश्मस्विव
त्यक्त्वा कुण्डलतां स्वपन्नपि च यो नायन्तुमद्योत्सहे ।
पाषाणद्रुमगुल्मकण्टकदरीकूटप्रपातोद्भटं
सोऽहं वेष्टयितुं क्षमः किमचलं गात्रैर्जराजर्जरैः ॥ ६० ॥

कब्राह्मदिवसे । कल्पलक्षणमुक्तममरेण । 'दिव्यैर्वर्षसहस्रैर्द्वादशभिर्दैवतं युगं । दैवे युगसहस्रे द्वे ब्राह्मः कल्पौ तु तौ नृणां ।' इति । यदित्यव्ययं वेत्यर्थकं तात्पर्यप्रकरणाभ्याम् । अथवा हेत्वर्थः । 'यत्तद्यतस्ततो हेतौ' इत्यमरः । सुरगिरेर्मेरुपर्वतस्य मूले मूलदेशे मे वालधिं लाङ्गूलं अग्रतः शिखरदेशे मौळिमुत्तमाङ्गं बध्नता बन्धं कुर्वता भगवता पिनाकिना परमेश्वरेण लीलया विलासेन आकृष्टः समाकर्षणं गमित इत्यर्थः । त्रिपुरसंहारकाले धनुष्टंकारार्थमिति भावः । स चासौ कालश्चेति तत्कालः तस्मिन् श्लथानि भग्नानि सन्धीनां वङ्क्षणानां बन्धाः कीलाः परिवृत्तानि व्यत्यस्तानि अस्थीनि च येषां तानि । तथाभूतानि मर्माणि मर्मस्थानानि अद्यदानीमपि स्मितजृम्भितक्षवथुषु स्मितं ईषद्धसनं । 'सोत्प्रासस्स मनाक् स्मितं' इत्यमरः । जृम्भितं जृम्भणं । 'जृम्भस्तु त्रिषु जृम्भणं' इत्यमरः । क्षवथुः कासः । 'स्त्री क्षुत्क्षुतं क्षवः पुंसि कासस्तु क्षवथुः पुमान्' इत्यमरः । स्वच्छन्दः स्वतन्त्रः । स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः' इत्यमरः । तस्य भावः स्वाच्छन्द्यं उच्छिन्दते । रौधादिकादुत्पूर्वाच्छिदि द्वैधीकरण इति धातोर्लटि झसन्तादेशः ॥ अपि चेति ॥ योऽहं कोमलानि मृदूनि । 'कोमलं मृदुलं मृदु' इत्यमरः । तथाभूतेषु तल्पेषु शय्यास्वपि । 'तल्पं शय्याट्टदारेषु' इत्यमरः । अश्मसु पाषाणेष्विव शयितुं शयनं कर्तुं न शक्नोमि शक्तो न भवामीत्यर्थः । कुण्डलितां वलयवत्तां त्यक्त्वोत्सृज्य स्वपन्नपि स्वापं कुर्वन्नपि यश्चाहं अद्येदानीमायन्तुं आक्रष्टुं भोगमिति शेषः । नोत्सहे न मृष्यामीत्यर्थः । उत्पूर्वात्षह मर्षण इति धातोर्लट् । सोऽहं वासुकिः जरा विस्रसा । 'पलितं जरसा शौक्ल्यं केशादौ विस्रसा जरा' इत्यमरः । तया जर्जराणि जीर्णानि तथाभूतैर्गात्रैरवयवैः । 'गात्रं प्रतीके दन्त्यग्रजङ्घाभागे वपुष्यपि' इति भास्करः । पाषाणैः शिलाभिः द्रुमैः वृक्षैः गुल्मैः स्तम्बैः । 'अप्रकाण्डे स्तम्बगुल्मौ' इत्यमरः । कण्टकैः वेण्वादिभिः द्रुमाङ्गैर्वा । 'सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टक' इत्यमरः । 'कण्टकः पुलके वेणौ द्रुमाङ्गे क्षुद्रवैरिणि' इति भास्करः । दरीभिः कन्दरैः कूटैः शिखरैः । 'अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रि-

तदद्य किञ्चिदनुगृह्य मां, नयन्तु भवन्तः तक्षककार्कोटकशङ्खचूडगुळिकैरावतपद्मप्रमुखान् महात्मनस्तरुणान् फणाधरान्, अन्ततो नयत जितश्रमं वा शेषं' इत्यभिदधानो वासुकिः पुनरित्थमभिदधे दानवैः।

'क्षुद्रैः किं करणीयमेभिरुरगैः क्षीणायुषामन्तकैः
या शेषं नयतेति वागजनि ते सैवास्तु सत्याधुना।
भूभारे ह्युपयुक्त एष विदितस्सर्वैस्ततोऽन्यः पुनः
त्वं शेषो भवसीति निश्चितधियस्त्वामेव याचामहे॥

अपि श्लक्ष्णीकुर्मो मणिवदचलं पाणिकषणैः
अपि त्वां वोढास्मस्सुखशयितमादुग्धजलधेः।

---

यां' इत्यमरः। प्रपातैः भृगुभिः। 'प्रपातस्तु तटो भृगुः' इत्यमरः। एतैरुद्भटं दुःस्पर्शं दुर्निरीक्ष्यमित्यर्थः। अचलं मन्दराद्रिं वेष्टयितुं परिवरीतुं क्षमः समर्थः किं नेत्यर्थः। शय्यास्पर्शमपि कर्तुं समर्थो न। मया कण्टकगुल्मादिसङ्कुलमन्दरवेष्टनं कर्तुमशक्यमिति भावः॥ **तदिति**॥ तत्तस्मात्किञ्चिन्मामनुगृह्य भवन्तो यूयं महतस्तरुणान् यूनः तक्षककार्कोटकशङ्खचूडगुळिकैरावतप्रमुखाः प्रभृतयो येषां ते तथाभूतान् फणाधरान् सर्पान् नयन्तु प्रापयन्तु॥ **अन्तत इति**॥ अन्ततः अन्ते चरमकल्पे इत्यर्थः। जितः निर्जितः श्रमो ग्लानिरायासो वा येन स तथाभूतं सर्वदा भूभारवहनादिति भावः। शेषं वा नयत इत्येवमभिदधानः भाषमाणो वासुकिः पुनः भूयोऽपि दानवैरसुरैः इत्थमभिदधे अभिहितः॥ **क्षुद्रैरिति**॥ क्षीणं नष्टं आयुर्जीवितकालो येषां ते तथाभूतानाम्। 'आयुर्जीवितकालो ना' इत्यमरः। अन्तकैर्मारकैः अत एव क्षुद्रैः कदर्यैः। 'कदर्ये कृपणक्षुद्रकिम्पचानमितम्पचा' इत्यमरः। एभिरुरगैः पन्नगैः करणीयं कर्तव्यं किं एतैः साध्यं न भवतीति भावः। शेषं नयतेत्येवं ते तथा वागजनि अजायतासीदिति वार्थः। सा वागेव अधुना सत्या अवितथास्तु भवतु सर्वैः विदितः ज्ञातः एषोऽपि शेषोऽपीत्यर्थः। भूभारे भूमिधारणविषये उपयुक्तः ततः तस्माद्भूमिभारकादन्यः शेषः पुनः अत्राशिष्टस्त्वित्यर्थः। त्वं भवानेवासि भवसीत्यर्थः। इतीत्थं निश्चितधियः निर्णीतबुद्धयः वयं त्वामेव याचामहे प्रार्थयामहे॥ **अपीति**॥ अचलं मन्दरमपि पाणिभिः हस्तैः कषणानि घर्षणानि तैर्मणिना तुल्यं मणिवच्छ्लक्ष्णीकुर्मः कृशीकुर्मः। 'श्लक्ष्णं दभ्रं कृशं तनु' इत्यमरः। आदुग्धजलधेः क्षीरसमुद्रमभिव्याप्य त्वां भवन्तमपि सुखेन अनायासेन शायितम्। भावे क्तः स्वापो यस्मिन् कर्मणि तत्तथा। वोढास्मः भुजेषु वक्ष्याम इत्यर्थः॥

सुखं चाकर्षामस्तदुपरि यथा तुष्यति भवान्
प्रसीदायच्छस्व प्रचल शनकैः प्राप्नुहि यशः ॥ ६१-६२ ॥

किं बहुना । प्रातिवेशिका वयं भवतः परिचितहृदयाश्च चिरसंवासेन ततस्तत्त्वमेतदवधार्यताम् ।

महद्भिर्ग्रश्नीमः स्रजमजगरैर्मन्दरचरैः
मरुद्भिर्वा पाशैर्भ्रमयितुमलं स्तब्धमचलम् ।
कराग्रैर्मथ्नीमो जलधिमथवा किं क्षरति नो
यशस्तूद्गातुं ते पुनरपि वदामः पुनरपि ॥ ६३ ॥'

इति प्रार्थितो दानवैरनुत्तरो भुजगपतिः प्रस्थातुकामो वलयमेकमुत्सृजन्यावदुत्तस्थौ, तावदर्णवमथनक्षोभशङ्कितपतनामवनीं धारयितुमवस्थापितः स्वयम्भुवा वज्रस्तम्भ इव स-

---

वह प्रापण इति धातोर्लुट् । सहिवहोरोदवर्णस्येत्योत्वम् । यथा भवान् तुष्यति हर्षं प्राप्नोषि तदुपरि मन्दरोपरि आवेष्टयेति शेषः । सुखमनायासं यथा तथा आकर्षामः आकर्षणं कुर्मः प्रसीद आयच्छस्वागच्छेत्यर्थः । शनकैः प्रचल प्रयाहीत्यर्थः । यशः कीर्तिं प्राप्नुहि ॥ **प्रातिवेशिका इति** ॥ यतः कारणाद्वयं भवतः प्रतिवेशः प्रतिसदनं तत्र भवाः प्रातिवेशिकाः अभिमुखसदनवर्तिन इति यावत् । चिरतरं बहुकालं सहवासः एकत्रावस्थितिः तेन त्वयेति शेषः । परिचितहृदयाः परीक्षितमनसः ततः कारणात्तद्भवितव्यं त्वयैवावधार्यतां पर्यालोच्यतां भवतो यशश्चिन्तका वयं किमपि न मृषा वदाम इति भावः ॥ **महद्भिरिति** ॥ मन्दरे चरन्ति गच्छन्तीति मन्दरचराः तथाभूतैः महद्भिः स्थूलदीर्घैरित्यर्थः । अजगरैः नागविशेषैः शयुभिः । 'अजगरे शयुर्वाहस इत्युभौ' इत्यमरः । स्रजं मालां ग्रथ्नीमः ग्रन्थनं कुर्मः महद्भिः पाशैः दामभिर्वा तमचलं भ्रमयितुं विघूर्णयितुं अलं शक्ताः । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकं' इत्यमरः । स्मः भवामः । अथवा कराग्रैः हस्ताग्रैर्जलधिं क्षीरार्णवं मथ्नीमः मन्थनं कुर्मः । नः अस्माकं किं क्षरति अस्माकं किमपि न गच्छतीति हृदयम् । ते जना इति शेषः । ते तव यशः उद्गातुं गानं कर्तुं पुनः पुनरपि वदामः ब्रूमः ॥ **इतीति** ॥ इतीत्थं दानवैः प्रार्थितः अनुत्तरः प्रतिवचनरहितः । 'श्रेष्ठेऽनुदीचि प्रतिवाग्घीने च त्रिष्वनुत्तर' इति भास्करः । भुजगपतिः वासुकिः यावत्सकलं । 'यावत्तावच्च साकल्य' इत्यमरः । एकं वलयं कुण्डलं उत्सृजन् विसृजन् उत्तस्थौ उत्थित इत्यर्थः । तावत्सकलं तद्दीर्घभूतं अर्णवमथनेन यः क्षोभः चाञ्चल्यं तस्मात् शङ्कितं संभावितमूहितामिति यावत् । तथाभूतं पतनं पातः यस्याः तथा-

न्ददृशे । ततः प्रतिष्ठध्वमित्यनुज्ञाय दानवान्, प्रसारयन् मन्दरोद्धाररन्ध्राभिमुखं मुखं, अनुवृतस्तक्षकादिभिः, अनुमतो भूभारवहननिश्चलेन भगवता शेषेण, शनैश्शनैश्शिथिलीचकार भोगवलयान् ।

अथ तेन बिलाध्वना विशन्तं पवनं पार्थिवगन्धसारसान्द्रम् ।
प्रथमे पथि विश्रमे फणीन्द्राः पपुराकण्ठमयाचितोपपन्नम् ॥

ततः प्रपात इव परिहृतनिम्नोन्नते तस्मिन् बिलद्वारे, महता यत्नेन मन्दंमन्दमुत्सर्पन्तो दशयोजनं, अधःपतन्तः शतयोजनं, आरुरुक्षन्तः पुनः, अवेक्षमाणा निम्नोन्नतानि, फूत्कुर्वन्तो भूयसा यावदश्राम्यन्ननिलाशनाः, तावत्करावलम्ब-

---

भूतां अवनिं भूमिं धारयितुं वोढुं स्वयम्भुवा ब्रह्मणावस्थापितः निखातः वज्रस्तम्भः हीरकस्थूण इव सन्ददृशे दृष्टम् । यद्वा यावदुत्तस्थौ तावत्सन्ददृशे दृष्ट इति वा योजना ॥ **तत इति** ॥ ततोऽनन्तरं दानवान् प्रति प्रतिष्ठध्वं प्रयाणं कुरुध्वमित्येवमनुज्ञाय आदिश्येत्यर्थः । मन्दरोद्धाररन्ध्रं मन्दरपर्वतोत्पाटनबिलं तस्य अभिमुखं यथा तथा मुखं स्ववदनं प्रसारयन् प्रचालयन् तक्षको नागः । 'तक्षको नागवर्धक्योः' इत्यमरः । आदिर्येषां ते तक्षकादयः तैरनुवृतः अनुसृतः भुवो भारो भूस्तस्य वहनं धारणं तस्मिन् निश्चलेन अचञ्चलेन भगवता पूज्येन शेषेण अनुमतः संमतिमान् सः शनैश्शनैः मन्दंमन्दं भोगस्य कायस्य ये वलयाः कुण्डलनानि तान् शिथिलीचकार श्लथयाञ्चकारेत्यर्थः ॥ **अथेति** ॥ अथ प्रस्थानानन्तरं फणीन्द्रास्सर्पश्रेष्ठाः पथि मार्गे प्रथमे प्राथमिके । 'प्रथमौ प्रवरादिमौ' इति भास्करः । विश्रमे विश्रान्तिस्थाने बिलाध्वना मन्दरोत्पाटनरन्ध्रमार्गेण विशन्तं प्रविशन्तं अत एव पार्थिवः पृथिवीसम्बन्धः यो गन्ध आमोदः तस्य सारेण स्थिरांशेन सान्द्रं मेदुरम् । 'सान्द्रः स्निग्धस्तु मेदुर' इत्यमरः । अयाचितोऽप्रार्थितस्सन् उपपन्नः प्राप्तः तथाभूतं पवनं वायुं आकण्ठं गळपर्यन्तं पपुः पानञ्चक्रुः ॥ **तत इति** ॥ ततोऽनन्तरं प्रपात इव पर्वतभृगुरिव । 'प्रपातस्तु तटो भृगुः' इत्यमरः । परिहृते परित्यक्ते निम्नोन्नते निम्नोन्नतप्रदेशौ येन तत्तथाभूते तस्मिन् बिलद्वारे मन्दरोत्पाटनच्छिद्रद्वारि । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । महता अधिकेन प्रयत्नेन मन्दं मन्दं दशयोजनमुत्सर्पन्तः उद्गच्छन्तोऽपि शतसङ्ख्याकानि योजनानि यस्य स तथाभूतं अधः अधोदेशे पतन्तः पतनं कुर्वन्तः सन्तः आरुरुक्षन्तः पुनः आरोढुमिच्छन्तस्त्वित्यर्थः । निम्नोन्नतानि समीकुर्वन्तस्सन्तः पुनः अपेक्षमाणाः काङ्क्षन्तः अत एव भूयसा अधिकं फूत्कुर्वन्तः फूत्कारं कुर्वन्तः अनिलाशनास्सर्पाः यावदश्राम्यन् श्रमं प्रा-

नप्रदानापदेशेन परिघतोमरगदाप्रासादिभिः प्रहरणैः प्रकल्पयन्त इव सोपानानि, परिकर्षयन्तः शनैश्शनैरिव प्रापयामासुरवनितलं फणाधरानसुरेश्वराः।

आपाताळात्फणधरपतेरा च मूलात्सुमेरोः
अद्राक्षुस्ते स्तिमितपतितं भोगमायासयोगात्।
मन्थानाद्रेरवनिवलयादुद्धृतस्यातिवेगात्
अन्तर्लग्नं त्रुटितघटितं मूलमेकं भुवीव ॥ ६५ ॥

अथ कथञ्चिदाश्वस्तमहिपुङ्गवमालक्षयन्तो दानवा नगन-

---

पुः अत्रावध्यर्थको यावच्छब्दः। 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः॥ **तावदिति**॥ तावदसुरेश्वराः बलिविरोचनप्रभृतयः करा एवावलम्बनान्याश्रयाः तेषां प्रदानं वितरणं तदेव अपदेशो व्याजः तेन परिघतोमरगदाप्रासाः आदयो येषां ते तथाभूतैः अत्र महद्भिरायसतन्तुभिः वलयितः नीरन्ध्रो बृहद्दण्डः। 'परिघः परिघातन' इत्यमरः। तोमरः सर्वलायुधं। 'सर्वला तोमरोऽस्त्रियां' इत्यमरः। गदा आयुधविशेषः। 'गदो रोगहरिभ्रात्रोः गदा स्यादायुधान्तरे' इति भास्करः। प्रासः कुन्तायुधम्। 'प्रासस्तु कुन्तः कोणस्तु' इत्यमरः। एतदादिभिरित्यर्थो बोध्यः। प्रहरणैरायुधैः। 'आयुधं तु प्रहरणं' इत्यमरः। सोपानान्यारोहणानीव। 'आरोहणं स्यात्सोपानं' इत्यमरः। कल्पयन्तः विरचयन्तः शनैर्मन्दं परिकर्षयन्तः आकर्षयन्तस्सन्तः शनैर्मन्दं फणाधरान् सर्पान् अवनितलं भूतलं प्रापयामासुः निन्युरित्यर्थः। स्वयं प्रयासं महान्तमनुभवन्तोऽपि बलिनः कार्यं साधयन्त्येवेति भावः॥ **आपाताळादिति**॥ आपाताळात्पाताळलोकमारभ्य सुमेरोर्हेमाद्रेः आमूलात् मूलदेशमभिव्याप्येत्यर्थः। आङ्मर्यादाभिविध्योरित्यनेनोभयत्र पाक्षिकाव्ययीभावसमासाभावः। आयासः श्रमः तस्य योगस्सम्बन्धः तस्मात् स्तिमितं निश्चलं आर्द्रञ्च वा तत्पतितं शायितं चेति कर्मधारयसमासः। 'आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तञ्च' इत्यमरः। फणधरपतिः वासुकिः तस्य भोगं कायं। 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः। अवनिवलयादप्रमण्डलादतिवेगादतिजवादुद्धृतस्य उत्पाटितस्य मन्थानाद्रेः मन्दरस्य सम्बन्धीत्यर्थः। भुवि भूमौ लग्नं सक्तं इदानीमिति शेषः। त्रुटितं छेदं प्राप्तमत एव घटितं ग्रथितम्। अथवा पूर्वं त्रुटितं बलाद्देवासुरैरुत्पाटितान्मध्ये छिन्नमिदानीं देवासुरैर्घटितं छिन्नकूपरज्जुवद्ग्रथितमित्यर्थः। समासस्तु स्नातानुलिप्तवत्। एकं मुख्यं मूलं मूलभङ्गमिव अद्राक्षुः ददृशुः॥ **अथेति**॥ अथ पाताळं विहाय भूप्रदेशानयनानन्तरं अहिपुङ्गवं वासुकिं कथञ्चित् अतिकृच्छ्रेण आश्वस्तं आश्वा-

गरग्रामनदनदीनदीशसन्तानदन्तुरेण भौमेन पथा परिक्रमणं, आवेद्य मान्द्यहेतुं, आसाद्य तदनुज्ञां, आफणामण्डलादा च वालमूलादुद्धृत्य कराञ्चलैर्युगपदुपनिवेशयन्तः स्कन्धेषु तं, अपरान् पुनर्महोरगान् अङ्गुलीभिरङ्गुलीयकानीव, पादैर्नूपुराणीव, पाणिभिः कङ्कणानीव, कटिभिः कटिसूत्राणीव, वक्षसा हारवलयानीव, वहन्तो लीलया तारापथेन पथा दुग्धोदधिमभिप्रतस्थिरे ।

दूरादलक्ष्यत सुरैर्दनुजांसलग्ना
द्राघीयसी भुजगपुङ्गवभोगरेखा ।
तिर्यक्प्रवाहमुपयातवतीव दिष्ट्या
मन्दाकिनी निपतिता शिखरे हिमाद्रेः ॥ ६६ ॥

सं प्राप्नुवन्तं व्यर्थत्वात्तस्येति भावः । आलक्षयन्तः पश्यन्तः दानवाः नगानामद्रीणां नगराणां पुराणां ग्रामाणां संवसथानां नदीनां सरितां नदानां पुन्नदीनां नदीशानां समुद्राणां च यानि शतान्यनेकानि तेषां सन्तानाः अविच्छेदाः सर्वत्र स्थितय इति यावत् । 'सन्ताना स्युरविच्छिन्नत्तिवंशापत्यसुरद्रुमाः' इत्यमरशेषः । तैः दन्तुरेण निम्नोन्नतेन व्याप्तेनेति वार्थः । भूमौ भवः भौमः तथाभूतेन पथा मार्गेण परिक्रमणं गमनं । परिपूर्वात् क्रमु पादविन्यास इति धातोर्भावे ल्युट्प्रत्ययः । मान्द्यं शैघ्र्यराहित्यं तस्य हेतुं कारणमित्यावेद्य विज्ञाप्य तस्य वासुकेरनुज्ञां अभ्यनुज्ञामासाद्य प्राप्य । आफणामण्डलादिति पदद्वयं फणामण्डलमारभ्येत्यर्थः । आ च वालमूलं लाङ्गूलाग्रमभिव्याप्येत्यर्थः । कराञ्चलैः हस्ततलैः युगपदेकदा स्कन्धेषु अंसेषु तं वासुकिं उपनिवेशयन्तः स्थापयन्तस्सन्तः अपरानन्यान् महोरगान् पुनः तक्षकादीन् अङ्गुलिभिः करशाखाभिः । 'अङ्गुलयः करशाखाः स्युः' इत्यमरः । अङ्गुलीयकानि ऊर्मिका इव । 'अङ्गुलीयकमूर्मिका' इत्यमरः । पादैः नूपुरान्मञ्जीरान् । 'पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियां' इत्यमरः । पाणिभिः कङ्कणानीव । 'कङ्कणं करभूषणं' इत्यमरः । कटिभिः श्रोणिफलकैः । 'कटो ना श्रोणिफलकं कटिः श्रोणिः ककुद्मती' इत्यमरः । कटिसूत्राणि मौञ्जीरज्जव इव वक्षसा हारवलयानीव मुक्तासरमण्डलानीवेत्यर्थः । वहन्तः धरन्तस्सन्तः लीलया क्रीडया । 'क्रीडा लीला च नर्म च' इत्यमरः । तारापथेन अन्तरिक्षरूपेण । 'तारापथोऽन्तरिक्षं च' इत्यमरः । पथा मार्गेण दुग्धोदधिं क्षीरार्णवं अभिप्रतस्थिरे अभिमुखं प्रययुरित्यर्थः ॥ **दूरादिति** ॥ दनुजानामंसेषु स्कन्धेषु लग्ना स्थिता द्राघीयसी अतिदीर्घा भुजङ्गपुङ्गवो वासुकिः तस्य भोगरेखा कायदण्डः सुरैः इन्द्रादिभिः दूरात् हिमाद्रेः

पायंपायं पवनमभितस्स्थौल्यमापाद्यमानं
वाहंवाहं फणधरपतिं विश्लथस्कन्धबन्धाः ।
प्रत्युद्यातैस्सुरपरिबृढैर्भारविश्रान्तिहेतोः
सार्धं दैत्या भुवि निदधिरे सन्निधौ शार्ङ्गपाणेः ॥ ६७ ॥
अथ शिथिलांसमांसळितखेदविनोदकृते
परिकलिताङ्गभङ्गमभितोऽपि वपुर्धुवताम् ।
करचरणोदराङ्गुळिभुजान्तरकन्धरतो
भुवि भुजगा निपेतुरितरे विबुधद्विषताम् ॥ ६८ ॥
खर्वोन्नतासुरस्कन्धसन्धारणकृतां व्यथाम् ।
वीजितो विबुधैर्दैत्यैर्विजहौ वासुकिश्शनैः ॥ ६९ ॥

शिखरे निपतिता स्रस्ता तिर्यक् प्रवाहः प्रवहनम् । भावे घञ् । तमुपयातवती प्राप्तवती मन्दाकिनी वियद्गङ्गेव दिष्ट्या आनन्देन । 'दिष्ट्या समुपजोषञ्चेत्यानन्देऽथान्तरेऽन्तरे' इत्यमरः । अदृश्यत दृष्टेत्यर्थः । महाप्रयाससम्पादनीयस्य वासुक्यागमनस्य अनायासलाभादानन्द इति भावः ॥ **पायमिति** ॥ पवनं वायुं पायंपायं पीत्वा पीत्वेत्यर्थः । अभितः स्थौल्यं स्थूलत्वं आपाद्यमानं प्राप्नुवन्तं फणधरपतिं वासुकिं वाहंवाहं धृत्वा धृत्वेत्यर्थः । विश्लथाः विगळितास्सन्धीनां बन्धाः कीलानि येषां ते तथाभूताः दैत्याः दितिपुत्राः । दित्यदित्यादित्यपत्युत्तरपदाण्ण्य इति दितिशब्दादपत्यार्थे ण्यप्रत्ययः । भारो धूः तस्माद्विश्रान्तिः विश्रमणं तस्य हेतोः प्रत्युद्यातैः प्रतिमुखमागतैः सुरपरिबृढैः देवैः सार्धं । प्रभौ परिबृढ इति निपातनात्साधुः । 'प्रभुः परिबृढोऽधिप' इत्यमरः । भुवि शार्ङ्गं धनुः पाणौ यस्य स तथाभूतस्य श्रीहरेः सन्निधौ निकटे निदधिरे निचिक्षिपुः । इतः परं कर्तव्योपदेशनायेति भावः ॥ **अथेति** ॥ अथ वासुकिप्रक्षेपानन्तरं शिथिलाः पीडिताः ये अंसाः भुजशिरांसि तेषु मांसलितः औल्बण्यं प्राप्तः यः खेदः बाधा तस्य विनोदकृते अपनोदनायेत्यर्थः । परिकलितः कृतः अङ्गानामवयवानां भङ्गः खण्डः यस्मिन् कर्मणि तत्तथा । 'भङ्गः खण्डे पराजये तरङ्गे रोगभेदे च' इति भास्करः । परितस्सर्वतोऽपि वपुश्शरीरं धुवतां धूननं कुर्वतां विबुधानां द्विषन्तः तच्छत्रवः असुराः तेषां कराश्च चरणाश्च उदराणि चाङ्गुळयश्च भुजान्तराणि च कन्धराश्च करचरणोदराङ्गुळिभुजान्तरकन्धरं तस्मात्ततः । द्वन्द्वश्च प्राणितूर्यसेनाङ्गानामिति प्राण्यङ्गत्वादेकवद्भावः । भुवि इतरे तक्षकादयो भुजगाः सर्पाः विनिपेतुः ॥ **खर्वेति** ॥ वासुकिः दैत्यैरसुरैः विबुधैः देवैः वीजितः ताळवृन्तादिभिरुपचरितस्सन्नित्यर्थः । खर्वो वामनः । 'खर्वो ह्रस्वश्च वामन' इत्यमरः । उन्नताः औन्नत्यशालिनश्च येऽ-

परिश्राम्यतश्च वासुकेरतिवेलश्वासनिःश्वासपरम्पराप-रिणमदुपचयापचया परिणतशरकाण्डपाण्डुरा च भोगयष्टि-रभिपूरयितुं दुग्धसागरमापतिता विदूरादुच्छृङ्खलतरङ्गमाला-समाकुला स्तब्धेव सिद्धनदी सुरासुरैरालुलोके ।

क्षितिधरपरिपातक्षुभ्यदम्भोधिगर्भ-
प्रचलदमृतबिन्दुस्यन्दसान्द्रैस्समीरैः ।
फणिपतिरपनीतस्वेदखेदो ददर्श
त्रिजगदनभिवेद्यं देवमाद्यं मुकुन्दम् ॥ ७० ॥

प्रणिपतन्नथ वासुकिः फणामणिप्रकाशधारानीराजनैरा-राधयामास चरणारविन्दमरविन्दनाभस्य, आह चेदम् 'भगव-

---

सुरा दानवाः तेषां स्कन्धेषु सन्धारणेन वहनेन कृतां प्राप्तां व्यथां दुःखम् । 'पीडा बाधा व्यथा दुःखं' इत्यमरः । शनैर्मन्दं विजहौ विससर्ज । ओ हाक् त्याग इति धातोः कर्तरि लिट् ॥ **परिश्राम्यत इति** ॥ परिश्राम्यतः परिश्रमं प्राप्तवत इत्यर्थः । वासुकेस्सर्पराजस्य अतिक्रान्ताः वेलामतिवेलाः निर्मर्यादा इत्यर्थः । 'अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि' इत्यमरः । अत्यादयः कान्ताद्यर्थे द्वितीययेति समासः । तथाभूता याः श्वासनिःश्वासानां परम्पराः पङ्क्तयः ताभिः परिणमन्तौ प्रादुर्भवन्तौ उपचयापचयौ वृद्धिह्रासौ यस्यास्सा । किञ्च परिणतः परिपक्वः स्थौल्यं प्राप्तो वा यश्शरस्य तृणस्य काण्डो दण्डः तद्वत्पाण्डुरा धवळा । 'शरो दध्याग्रसारे बाणे काण्डे तृणान्तरे' इति भास्करः । भोगयष्टिः दण्डसदृशः काय इत्यर्थः । दुग्धसागरं क्षीरसमुद्रमभिपूरयितुं पूर्तिं कर्तुं विदूराद्दु-दूरादापतिता आयाता उच्छृङ्खलाः निर्निरोधाः ये तरङ्गाः तेषां मालाभिः समाकुला सङ्कुला स्तब्धा निश्चला सिद्धनदी गङ्गेव सुरासुरैः आलुलोके दृष्टेत्यर्थः ॥ **क्षितीति** ॥ क्षितिधरो मन्दरस्तस्य परिपातेन परिपतनेन क्षुभ्यन् तारळ्यलक्षण-क्षोभं प्राप्नुवन् योऽम्भोधेर्गर्भः कुक्षिदेशः तस्मात् प्रचलन्तो येऽमृतस्य बिन्दवः तेषां स्यन्दः प्रवहणं तेन सान्द्रैः मेदुरैः समीरैर्वायुभिः अपनीतौ निवर्तितौ स्वेदखेदौ घर्मोदकश्रमौ यस्य स तथाभूतः फणिपतिर्वासुकिः त्रिजगता त्रिभुवनेन अनभिवेद्यं वेदितुमशक्यं आद्यं कारणभूतं देवं प्रकाशमानं मुकुन्दं श्रीहरिं ददर्श दृष्टवानित्यर्थः ॥ **अथेति** ॥ अथ श्रीहरिदर्शनानन्तरं वासुकिः प्रणिपतन् नमस्कारं कुर्वन् सन् फणामणीनां ये प्रकाशा दीप्तयः तेषां धारा अविच्छेदा एव नीराजनान्यारार्तिकाः तैः अरविन्दनाभस्य श्रीहरेः चरणारविन्दं पादकमलमारा-धयामास आनर्चेत्यर्थः । इदं चाहेति योजना ॥ **भगवन्निति** ॥ हे भगवन्

अशिक्षितोऽस्मि शेष इव व्याकरणे, अनभियुक्तोऽस्मि पद्म इव पाञ्चरात्रे, अकृतश्रमोऽस्मि कम्बळाश्वतराविव गान्धर्वे, केवलमहं भगवतो मेरुधन्वनस्सायकसन्धानावसरसम्पन्नं भवतश्चरणारविन्दविन्यासभाग्यं परिशीलयन्नान्तरेण करणेन, परिपालयन् भवच्छासनं, आकाङ्क्षन् भवतो नियोगानुग्रहमासे भवदधीनः' इति। तदनु च।

'किं तन्त्रैः किं मन्त्रैः किं व्याकरणेन किं पुराणेन।
चरणाम्बुजे निमग्ना धिषणा यदि पद्मनाभस्य॥ ७१ ॥'

इति स्तूयमानमब्जसम्भवादिभिरिन्दिरारमणो वासुकिमिदमवादीत्। 'वत्स वासुके न वक्तव्यमिदं त्वया। परिजा-

---

शेष इव व्याकरणे व्याकरणशास्त्रे शिक्षितो नास्मि न भवामि शेषेणेव स्वेन ग्रन्थाकरणादिति भावः। पद्मः पद्माख्यनाग इव पाञ्चरात्रे पाञ्चरात्रागमे कृतः श्रमोऽभ्यासो येन स तथाभूतः नास्मि तेनेव स्वेन पाञ्चरात्रप्रकाशीकरणाभावादिति भावः। कम्बळाश्वतराविव कम्बळसंज्ञिकाश्वतरसंज्ञिकनागाविव गान्धर्वे सामवेदोपवेदे अकृतश्रमोऽस्मीति योजना। ताभ्यामिव स्वेन भगवच्चरित्रगानस्याकरणादिति भावः। अहं भगवतः अप्रच्युतैश्वर्यशालिनः मेरुः धनुर्यस्य स तथाभूतस्य परमेश्वरस्य त्रिपुरसंहारकाल इति भावः। सायको बाणः। 'शरे खड्गे च सायक' इत्यमरः। तस्य सन्धानं सन्धुक्षणं तस्यावसरः समयः तस्मिन् सम्पन्नं लब्धं भगवतो भवत इति शेषः। चरणारविन्दयोर्विन्यासः स्थापनमेव भाग्यं केवलं सौभाग्यमेवेत्यर्थः। बाणरूपत्वाद्भवत इति भावः। आन्तरेण करणेन अन्तःकरणेन परिशीलयन् ध्यायन् सन् भगवतश्शासनं प्रथमभुवनाधिपत्यलक्षणामाज्ञां परिपालयन्ननुतिष्ठन् भवतो नियोगो निर्देशः स एवानुग्रहः प्रसादः तमाकाङ्क्षन्निच्छन् भवतोऽधीनः वशवर्ती सन् आसे तिष्ठामीत्याहेति पूर्वेणान्वयः। अथ निष्कृष्टार्थमाह ॥ **किमिति** ॥ पद्मनाभस्य तव चरणाम्बुजे पादारविन्दे धिषणा बुद्धिः न मग्ना न संसक्ता यदि तन्त्रैः पाञ्चरात्रादिभिः किं प्रयोजनम्। मन्त्रैः प्रणवादिभिः किं। व्याकरणेन इदमुपलक्षणं शिक्षादिवेदाङ्गैः किमित्यर्थः। पुराणेन स्कान्दादिना वा किं। वेदशास्त्रादिभिर्यद्भवति तत्सर्वस्यापि भगवच्चरणारविन्दभक्त्यैव सम्भवात्तैस्साध्यं न भवतीति भावः ॥ **इतीति** ॥ इतीत्थं अब्जसम्भवो ब्रह्मा आदिर्येषां तैः स्तूयमानं स्तुतिभाजनीक्रियमाणं वासुकिं सर्पराजं इन्दिरारमणः श्रीपतिर्विष्णुरिदं वचनमवादीदभाणीदित्यर्थः ॥ **वत्सेति** ॥ हे वत्स वासुके

नतैव हि भक्तिमियतीमपि मया प्रतिष्ठापितोऽसि प्रथमभुवनाधिपत्ये। तदिदानीं माहेश्वरं धनुरनुस्पृश्य सम्पादितं यशो माहेश्वरं गिरिमिमं प्रदक्षिणीकृत्य परिवर्धयेत्यादिशामि।

तेजसाप्याययिष्यामि दिव्येन त्वामसंशयम्।
कामं वेष्ट्य मन्थाद्रिं कर्षन्तु त्वां सुरासुराः ॥ ७२॥'

इति दत्तवरो वासुकिरिन्दिरारमणेन, परितोषयन् सुरासुरान्, पश्यत्सु वैमानिकेषु, समुत्प्लुत्य वेगेन, सद्यःकृत्तविद्रुमकाण्डवत् संवेष्टयामास भोगेन मन्दरगिरेराभोगम्।

त्वया इदं न वक्तव्यं अभक्तविषयत्वात् पूर्वोक्तवचनस्येति भावः ॥ **परीति** ॥ इयतीमेतावतीमपि भक्तिं मयि तवानुरागमित्यर्थः । पूज्येष्वनुरागो भक्तिरिति महोपाध्यायवचनात्परिजानता जानानेनैव मया प्रथमभुवनं पाताळं तस्याधिपत्ये प्रतिष्ठितः निक्षिप्तः तदिदानीं त्रिपुरसंहारकाल इत्यर्थः । माहेश्वरं परमेश्वरसम्बन्धि धनुः मेरुपर्वतरूपमिति भावः । अनुस्पृश्य स्पृष्ट्वा सम्पादितमासादितमित्यर्थः । ज्यारूपत्वात्तवेति भावः । यशः कीर्तिं माहेश्वरं महेश्वरसम्बन्धिनमित्यर्थः । तदावासत्वात्तस्येति भावः । इमं गिरिं एतं मन्दरं प्रदक्षिणीकृत्य वेष्टयित्वेति भावः । परिवर्धय वृद्धिं प्रापय इतीत्थं आदिशामि कथयामीत्यर्थः । ममात्यन्तभक्तत्वात्तवेति भावः ॥ **तेजसेति** ॥ दिव्येन श्लाघ्येन तेजसा प्रभावेन दीप्त्या बलेनेति वार्थः । 'तेजः प्रभावे दीप्तौ च बले शुक्रेऽप्यथ त्रिषु' इत्यमरः । आप्याययिष्यामि विगततापं करिष्यामीत्यर्थः । अत्रार्थे असंशयं संशयो नास्तीत्यर्थः । मन्थश्चासावद्रिश्चेति कर्मधारयः । तथाभूतमद्रिं अत्र मन्थपदेन मन्थनोपयोगिदण्ड इति बोध्यम् । तदुक्तममरेण । 'वैशाखमन्थमन्थानमन्थानो मन्थदण्डकः' इति द्वितीयकाण्डे । काममत्यन्तं वेष्ट्य वेष्टनं कुरु सुरासुराः देवासुराः विरोधस्याशाश्वतिकत्वादेव येषां च विरोधश्शाश्वतिक इति गोव्याघ्रादिवदेकवद्भावाभावः । त्वां भवन्तं कर्षन्तु आकर्षणं कुर्वन्त्वित्यर्थः ॥ **इतीति** ॥ इतीत्थं इन्दिरारमणेन रमाकान्तेन दत्तः वितीर्णः वरः सामर्थ्यलक्षणप्रसादो यस्य स तथाभूतो वासुकिः सर्पराजः सुरासुरान्परितोषयन् सन्तोषं प्रापयन्नित्यर्थः । विमानेन व्योमयानेन चरन्तीति वैमानिकाः सिद्धचारणादयः इति यावत् । तेषु पश्यत्सु द्रष्टृषु सत्सु । सद्यः वेगेन जवेन समुत्प्लुत्य समुत्प्लवनं कृत्वा मन्दराद्रेः आभोगं पूर्णतां । 'आभोगौ पूर्णतायत्नौ' इति भास्करः । कृत्तः वात्यादिना समीकृतः यो विद्रुमकाण्डः प्रवाळदण्डः तेन तुल्यं यथा तथा सं-

**प्रणमन्तः स्तुवन्तंश्च भगवन्तं जनार्दनम् ।**
**ववल्गुश्च जगर्जुश्च वासवाद्यास्सुरासुराः ॥ ७३ ॥**

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुराधिक-
शतप्रबन्धनिर्वाहकश्रीमन्महाव्रतयाजिश्रीमदप्पयदीक्षित-
सोदर्यश्रीमदाचान्दीक्षितपौत्रेण नारायणदीक्षितात्मजेन
श्रीभूमिदेवीगर्भसंभवेन श्रीनीलकण्ठदीक्षितेन
विरचिते श्रीनीलकण्ठविजये चम्पुकाव्ये
तृतीय आश्वासः ॥

---

वेष्टयामास संवेष्टनं चकारेत्यर्थः ॥ **प्रणमन्त इति** ॥ भगवन्तं षड्गुणैश्वर्यसम्पन्नं जनार्दनं श्रीहरिं प्रणमन्तः प्रणामं कुर्वन्तः स्तुवन्तः स्तुतिं कुर्वन्तः वासवाद्या इन्द्रादयः सुरासुराः ववल्गुः प्रचेलुः मन्थनार्थमिति भावः । जगर्जुः सिंहनादं चक्रुः कार्यस्य करगतप्रायत्वादिति भावः ॥

इति श्रीमद्भारद्वाजवेल्लालमहादेवसूरिविरचिते नीलकण्ठविजयव्याख्याने
विबुधानन्दाख्याने तृतीयाश्वासविवृतिः ॥

## अथ तुरीयाश्वासः॥

**संवेष्टयन्नथ स मन्दरमम्बुराशौ**
**सार्धद्वयेन वलयेन भुजङ्गराजः।**
**पार्श्वद्वयेऽपि शतयोजनमुच्छिशेष**
**पुच्छं मुखं च मथनाय सुरासुराणाम्॥ १॥**

**ततः पूर्वजैः पूर्वकायः फणिपतेः, अवरजैरपरकायश्च परिग्राह्य इति न्यायमाचक्षाणेषु दानवेषु, कटाक्षेण कमलाक्षस्य, शासनेन च स्वयम्भुवः, समुत्साहिताः परिकल्प्य शिरोभागमासुरं, परिजगृहुर्वालभागमदितिसुताः। अनन्तर-**

---

देवानाममृतप्राप्तौ गतो यो मुख्यहेतुताम्।
तमिहानन्दसम्प्राप्त्यै फणिराजमुपास्महे॥

अथ कालकूटोत्पत्तिं तद्भक्षणरूपपरमेश्वरचरितं च वर्णयिष्यन्नादौ मथनप्रकारादिकमाह॥ **संवेष्टयन्निति**॥ अथानन्तरं स भुजङ्गराजो वासुकिः अर्धयोर्द्वयं अर्धद्वयं तेन सहितः सार्धद्वयः अर्धाभ्यां सहितं सार्धं तथाभूतं च तद्वलयं चेति वार्थः। तथाभूतेन वलयेन अम्बुराशौ समुद्रे मन्दरं संवेष्टयन् वेष्टनं कुर्वन् सन् मुखं मुखभागः पुच्छं वालभागश्चेति पार्श्वद्वये उभयपार्श्वयोः शतयोजने यस्मिन् कर्मणि तत्तथा भवति तथा सुरासुराणां। कर्तरि षष्ठीयं। मथनाय मथनार्थं उच्छिशेष अवशेषो बभूवेत्यर्थः। तथाच वलयितांशं विहाय मुखभागे शतयोजनभागं पुच्छभागे एकशतयोजनभागमवशेषितवानिति भावः। अथ वलयितं वासुकिं उभयेऽपि जगृहुरित्याह॥ **तत इति**॥ ततो वेष्टनानन्तरं दानवेषु पूर्वजैः ज्येष्ठैरस्माभिरिति भावः। पूर्वः कायस्य पूर्वकायः शिरोभाग इत्यर्थः। अवरजैः कनिष्ठैः देवैरिति भावः। अपरः कायस्यापरकायः पुच्छभाग इत्यर्थः। ग्राह्यः स्वीकर्तव्य इत्यर्थः। इतीत्थं न्यायं उपपत्तिं आचक्षाणेषु वदत्सु सत्सु कमलाक्षस्य कटाक्षेणापाङ्गदर्शनेन स्वयम्भुवो ब्रह्मणश्च शासनेन आज्ञया चानुगृहीताः अदितिसुताः देवाः शिरोभागं वासुकेरिति भावः। आसुरं असुराणामिदं। तस्येदमित्यण्प्रत्ययः। तादृशं परिकल्प्य निश्चित्य विहायेत्यर्थः। वालभागं लाङ्गूलपार्श्वं जगृहुः दधुरित्यर्थः। अथ मन्थनपरिपाटीं वर्णयति॥ **अनन्तरमिति**॥ अनन्तरं मुखपुच्छभागयोः दैत्यदेवग्रहणानन्तरं अन्तः क्षीरार्णवकुक्षौ भ्रमन् घूर्णमानो यो अचलराजो मन्दरः तस्य मूले याश्शिलाः तासां सङ्ग-

मन्तर्भ्रमदचलराजमूलशिलासङ्गसङ्घर्षणकण्डूयननिद्राणकमठ-राजनिःश्वासपरम्परापरिहृतपवनाशनलोकदुर्भिक्षं, अभितः प्रकीर्णदुग्धकल्लोलनिपातपरिपूरितशुद्धजलार्णवं, आमूलपरिभ्र-मदमृतसागरैकावर्तपरिभ्रामिततिमितिमिङ्गिलोद्गीर्णतत्कालनिगी-र्णाजीर्णशफरतर्णकाकीर्णं, अत्युच्चशिखरिशिखरनिष्पतदच्छनि-र्झरस्रोतोनिपातपरिधौतचक्रवाळशिलाचक्रं, अतिरभससमुद्भू-तधातुरागसमुद्भाविताकाण्डसन्ध्यासंसूचितहालाहलोपप्लवं, उ-त्प्लवमानसागरदुग्धशीकरास्वादसुहितभुजगराजभोगप्रसारणवे-

---

स्समूहः तेन सङ्घर्षणं लोडनं तदेव कण्डूयनं तेन निद्राणः शयितः यः कमठरा-जः कूर्मः। 'निद्राणशयितौ समौ' 'कूर्मे कमठकच्छपौ' इति चामरः। तस्य श्वासा-नां मुखनासिकवायूनां याः परम्पराः पङ्क्तयः ताभिः परिहृतं अपोहितं पवनाश-नानां सर्पाणां लोके भुवने। 'लोकस्तु भुवने जने' इत्यमरः। दुर्भिक्षमन्नालाभ-व्यसनं यस्मिन् स तथाभूतं किं च अभितस्सर्वतः विकीर्णाः विक्षिप्ताः ये दुग्ध-कल्लोलाः क्षीरतरङ्गाः तेषां निपातो निपतनं तेन पूरितः भरितः शुद्धजलार्णवः शुद्धोदकसमुद्रः यस्मिन् स तथाभूतं आमूलं मूलदेशमारभ्येत्यर्थः। परिभ्रमन्तः विघूर्णमानाः ये अमृतार्णवस्य समुद्रस्यावर्ताः उदकभ्रमाः। 'स्यादावर्तोऽम्भसां भ्रमे' इत्यमरः। तैः परिभ्रामिताः विघूर्णनं प्रापिताः ये तिमितिमिङ्गिलाः म त्स्यविशेषाः तैरुद्गीर्णाः वान्ताः तत्कालनिगीर्णाः तत्क्षणगळिताः अजीर्णा ये शफ-रतर्णका मीनशिशवः। 'सद्योजातस्तु तर्णकः' इत्यमरः। तैराकीर्णं व्याप्तमत्यु-च्चानि अत्युन्नतानि यानि शिखरिणां पर्वतानां शिखराणि। 'उच्चप्रांशून्नतोदग्रे' इत्याद्यमरः। तेभ्यो निष्पतन्तो ये अच्छाः स्वच्छोदकाः निर्झरा गिरिनदीप्रवा-हाः। 'प्रवाहो निर्झरो झरः' इत्यमरः। तेषां स्रोतांसि अम्बुसरणानि। 'स्रो-तोऽम्बुसरणं स्रुतिः' इत्यमरः। तेषां निपातेन धौतं क्षाळितं चक्रवाळस्य लो कालोकपर्वतस्य शिलानामुपलानां चक्रं समूहो यस्मिन् सः। 'चक्रं जालन्तु जा-लकं' इत्यमरः। तथाभूतं अतिरभसोऽत्यन्तमथनत्वरा तेन समुद्भूताः समुत्पन्नाः धातूनां मनश्शिलादीनां। 'धातुर्मनश्शिलाद्यद्रेः' इत्यमरः। रागः आरुण्यं तेन समुद्भाविता तर्किता या अकाण्डः अकालः। 'काण्डोऽस्त्री दण्डबाणार्ववर्गावस-रवारिषु' इत्यमरः। तस्मिन् सन्ध्या सन्ध्याकालः तया संसूचितः हालाहलोप-प्लवो विषसम्बन्ध्युपद्रवः यस्मिन् स तथाभूतं उत्प्लवमानाः उत्प्लुतिं प्राप्नुवन्तो ये दुग्धकणाः क्षीरशीकराः तेषामासारः। आस्वादः इति पाठान्तरं। धारासम्पात आघ्राणनं वा तेन सुहितः तृप्तो यो भुजङ्गराजो वासुकिः तस्य यो भोगः कायः। 'भोगस्सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः। तस्य प्रसारणं

गपतदुत्पतत्सुरासुरस्तोमपर्यवस्थापनव्यग्रपद्मसम्भवं, उभयपार्श्वसङ्घट्टितशिलासङ्घसङ्घर्षणसुखनिर्मुच्यमानचिरपरिणामनिर्मलवासुकिनिर्मोकशकलपरिधानसञ्जिघृक्षानुधावत्प्रमथयूथनिनादमेदुरं, अत्यायासपरिश्रान्तजरदुरगराजसमुद्भ्रान्तपरुषविषानलज्वालाकलापदुरापलालाप्रवर्तितहालाहलबीजावापं, आवसथपरिभ्रमणसमुद्विग्नकात्यायनीपरिरम्भसम्भ्रमानन्दितचन्द्रशेखरतया प्रतिक्षणमुपर्युपचीयमानमहातपस्सम्भारं, आरसातलप-

दीर्घीकरणं तस्य वेगो जवः तस्मिन् पतन्तः पतनं कुर्वन्तः उत्पतन्तः उत्तिष्ठन्तश्च ये सुरासुरास्तेषां स्तोमस्समूहः तस्य पर्यवस्थापनं मथनकर्मण्येव स्थापनं पलायनादिकं प्रतिषिध्येति भावः । तस्मिन् व्यग्रो जागरूकः पद्मसम्भवो ब्रह्मा यस्मिन् स तथाभूतम् । उभौ च तौ पार्श्वौ चेति कर्मधारयः । तयोः सङ्घट्टिताः सम्बद्धाः संयोजिता इति वार्थः । ये शिलानां सङ्घाः तेषां सङ्घर्षणं उल्लेखनं तेन सुखमनायासं निर्मुच्यमानः विसृज्यमानः यः चिरपरिणामः चिरकालावस्थित्या परिपाकः तेन निर्मलः यो वासुकेर्निर्मोकः कञ्चुकः । 'समौ कञ्चुकनिर्मोकौ' इत्यमरः । तस्य शकलं खण्डमेव परिधानं अधोऽशुकं तस्य संजिघृक्षा सङ्ग्रहीतुमिच्छा । अथवा निर्मोकशकलस्येति कर्मणि षष्ठीं कृत्वा परिधानार्थं सञ्जिघृक्षेति योजना बोध्या । 'अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके' इत्यमरः । तस्यै अनुधावन्तः अनुगच्छन्तः ये प्रमथाः पारिषदाः तेषां यूथस्य सङ्घस्य निनादेन कलकलेन मेदुरः सान्द्रः तथाभूतं अत्यायासेन परिश्रान्तः परिश्रमं प्राप्तो जरन् वृद्धः यः उरगराजो वासुकिः । 'जीनो जीर्णो जरन्नपि' इत्यमरः । तेन समुद्भ्रान्ता उद्गीर्णाः परुषः क्रूरो यो विषानलः तस्य ज्वालास्तासां कलापेन समूहेन । 'कलापो भूषणे बर्हे तूणीरे संहतावपि' इत्यमरः । दुरापा दुष्प्रापा दुस्सहेति यावत् । या लाला तालुनिर्गतजलं । 'सृणिका स्यन्दिनी लाला' इत्यमरः । तया प्रवर्तितः कलितः हालाहलाख्यस्य विषस्य बीजानामावापः आवपनं यस्मिन् स तथाभूतं । आवसथस्य आवासभूतमन्दरस्य परिभ्रमणेनावर्तनेन उद्विग्ना भीता स्त्रीस्वभावादिति भावः । या कात्यायनी गौरी तस्याः परिरम्भे आलिङ्गने यस्संरम्भः उपक्रमः । रभ राभस्ये राभस्यमुपक्रम इति धातुपाठात् । तेनानन्दितस्सन्तोषं गमितश्चन्द्रशेखरः यस्मिन् सः तस्य भावस्तत्ता तया । तदुक्तं देवीभागवते । 'भ्रमतो मन्दरस्याद्रेरूर्ध्वदेशे महेश्वरः । सगणस्त्ववसद्देव्या देवानां हितकाम्यया ॥' इति । प्रतिक्षणं वीप्सायामव्ययीभावः । उपरि मन्दरोर्ध्वदेशे उपचीयमानोऽभिवर्धमानः महान् तपसः संभारोऽतिशयो यस्मिन् स तथाभूतं परमेश्वरप्रीणनादिति

रिभ्रमदर्णवावर्तगर्तसन्दृश्यमानफणिलोकवृत्तान्ततया प्रशान्तगृहोदन्तविचारसुस्थपरिजनोरगपरिचरणसम्भृतानन्ददन्दशूकेश्वरं, अद्भुतमवलोकयतां, अद्भुततरमद्यापि शृण्वतां, अपर्याप्तमुपन्यसितुं वाचस्पतेरपि, अशक्यं काव्यशतेनापि वर्णयितुं काव्यस्य, सर्वतो निर्वृतैरपि महर्षिभिस्समुत्सृज्य समाधिमालक्ष्यमाणमपक्ष्मपरिक्षेपं, अनुल्लिखितार्थलाभसमुल्लासेन किञ्चिदप्यगणितशरीरक्लेशमायस्यद्भिरपि सुरासुरैरालोकमानः सागरमथनसंरम्भमाननन्द गोविन्दः ।

निर्मन्थश्लथसन्धिबन्धनिखिलोद्देशक्षरन्निर्झरः

शैलोऽदृश्यत सिद्धचारणमरुद्गन्धर्वविद्याधरैः ।

---

भावः । आरसातलं पाताळमभिव्याप्य परिभ्रमन्तो विघूर्णमानाः ये अर्णवस्य उदधेरावर्ताः अम्भोभ्रमा तेषां ये गर्ताः तैस्सन्दृश्यमानः फणिलोकस्य नागलोकस्य वृत्तान्तो वार्ता यस्मिन् सः तस्य भावस्तत्ता तया प्रशान्तः अकलितः यः गृहोदन्तस्य सदनवृत्तान्तस्य विचारो विचारणा । 'वृत्तान्त उदन्तः स्यात्' इत्यमरः । तेन सुस्थाः अवहिताः ये परिजनोरगाः तक्षकादयः तैर्यत्परिचरणं सेवा तेन सम्भृतानन्दस्सम्पादितहर्षः दन्दशूकानां सर्पाणां ईश्वरो यस्मिन् स तथाभूतं तत्कालमिति शेषः । अवलोकयतां पश्यतां अद्भुतमाश्चर्यकरं । शृण्वतां श्रोतॄणामद्याप्यद्भुततरं अत्यन्ताश्चार्यकरम् । तदानीं प्राक्कल्पभवमन्थनादिद्रष्टॄणां बहूनां सत्त्वादाश्चर्यकरत्वम् । अधुना कस्याप्यत्राभावाददृष्टपूर्वत्वादद्भुततरत्वामिति भावः । वाचस्पतेस्सुराचार्यस्यापि अपर्याप्तं अपरिसमाप्तं यथा तथा उपन्यसितुं निरूपयितुमशक्यम् । काव्यस्य शुक्रस्य काव्यानां सगुणालङ्कृतिगद्यपद्यानां शतेनानेकेनापि वर्णयितुं वर्णनं कर्तुमशक्यम् । सर्वतः सर्वप्रकारैः निर्वृतैः सुखितैः विरतैरपि वेत्यर्थः । महर्षिभिः सनकादिभिः समाधिं निर्विकल्पसमाधिं उत्सृज्य विसृज्य अविद्यमानः पक्ष्मणां निमेषाणां परिक्षेपः चलनं यस्मिन् कर्मणि तत्तथा आलक्ष्यमाणमालोक्यमानं अनुल्लिखितः वाङ्मनसाभ्यामसम्भावितः योऽर्थलाभः अमृतरूपप्रयोजनप्राप्तिः तस्मिन् समुल्लासेनादरेणेति तात्पर्यार्थः । आयस्यद्भिरायासं प्राप्नुवद्भिरपि सुरासुरैः किञ्चिदगणितः अनाकलितः शरीराणां क्लेशो यस्मिन् स तथाभूतम् । सागरमथने संरम्भमुद्योगं गोविन्दः आलोकमानः पश्यन् सन् आननन्द आनन्दं प्रापेत्यर्थः । तथा चोक्तं देवीभागवते । 'समन्तात्तत्र दैत्यास्ते ज्येष्ठभागजिघृक्षया । मन्दरं चालयन्तोऽद्रिं नष्टाः केचिन्महावटे ॥ वासुकेर्मुखनिश्वासैर्दग्धा दैत्यास्तथापरे । हताश्च शेषदैत्याश्च देवा विष्ण्वादयो नृप ॥ पुच्छं गृहीत्वा योक्त्रस्य वासुकेः पृष्ठतः स्थिताः । मथितुं सम्प्र-

अश्रान्तभ्रमणश्रमेण जलधेः पीतं प्रभूतं पयः
स्रोतोभिः पुनरुद्वमन्निव मुखश्रोत्राक्षिनासादिभिः ॥ २ ॥

अपि च।

निश्वसति भोगिभर्तरि निर्दग्धमहासुरैर्विषज्वालैः।
उच्छ्वसितममरवर्गैरुत्प्रेक्षितकार्यलाघवैरन्तः ॥ ३ ॥

मथ्नतामप्येवं महतोत्साहेन, तेषामपाङ्गयन् शनैश्शनैश्शक्तिह्रासं, आप्याययन्वासुकिमम्बरचरानपि स्वतेजसा, त्रिविक्रमः स्वयमपि मथितुमुपचक्रमे।

वृत्तास्ते सुधार्थं क्षीरसागरं' इति ॥ **निर्मन्थेति** ॥ निर्मन्थेन मन्थनेन श्लथाः विगळिताः सन्धयः सन्धिस्थानानि तेषां बन्धाः ग्रन्थयो यस्य स तथाभूतः यो निखिलोद्देशः सर्वप्रदेशस्तस्मात् क्षरन्तः प्रस्रवन्तः निर्झराः प्रवाहा यस्य स तथाभूतः शैलो मन्दरः अश्रान्तं सन्ततं। 'सततानारताश्रान्तसन्तत' इत्यमरः। भ्रमणेन यः श्रमः खेदः तेन पूर्वं जलधेः पीतं प्रभूतं अधिकं पयः क्षीरं मुखश्रोत्राक्षिनासादिभिः मुखादिद्वारैरित्यर्थः। पुनः स्रोतोभिरम्बुसरणव्याजैरुद्वमन् उद्गिरन् सिद्धचारणमरुद्गन्धर्वविद्याधरैः देवयोनिविशेषैः। 'मरुतौ पवनामरौ' इत्यमरः। अदृश्यत दृष्टः ॥ **अपि चेति** ॥ निर्दग्धाः भस्मीकृताः महासुराः यैस्तथाभूतैः विषज्वालैः। 'वह्निद्वयोर्ज्वालकीलौ' इत्यमरः। भोगिभर्तरि वासुकौ निश्वसति निश्वासं कुर्वति सति अन्तर्मनसि उत्प्रेक्षितं तर्कितं कार्ये भाविनि दैत्यतिरस्काररूपे साध्ये लाघवं यैस्ते बहूनामिदानीमेव नाशादिति भावः। तथाभूतैरमरवर्गैरिन्द्रादिभिरुच्छ्वसितं अभिवृद्धं उत्पूर्वात् श्वसि वृद्धाविति धातोर्भावे क्तः। तदुक्तं देवीभागवते। 'वासुकेर्मुखनिश्वासैर्दग्धा दैत्यास्तथापरे' इति ॥ **मथ्नतामिति** ॥ एवं महताधिकेन उत्साहेन मथ्नतां मथनं कुर्वतां तेषां देवासुराणां शनैश्शनैश्शक्तिह्रासं प्रति अपाङ्गं कुर्वन् अपाङ्गयन् देवासुरशक्तिसङ्कोचं पश्यन्निति भावः। स्वतेजसा स्वीयदिव्यसामर्थ्येन वासुकिं अम्बरचरान् देवासुरानुभयानपीत्यर्थः। आप्याययन् दिव्यबलदानेन प्रोत्साहयन्नित्यर्थः। त्रिविक्रमः श्रीहरिः स्वयमपि मथितुमुपचक्रमे उपक्रान्तवान्। तदुक्तं देवीभागवते। 'ततस्संमथ्यमानेऽब्धौ देवैर्दैत्यैश्च सत्वरम्। शिवाज्ञया भुवं भित्वा मन्दरस्सुतलं गतः ॥ देवानां कार्यसिद्ध्यर्थं देवीतेजोपबृंहितः। मन्दराधारभूतोऽसौ कूर्मरूपी दधार तम् ॥ स्वस्वरूपेण देवानां मध्ये चक्रगदाधरः। वासुकेः पुच्छमाकर्षन् देवान् स त्वरयद्धरिः ॥ उपर्याक्रान्तवान् शैलं विष्वप्रूपेण तेजसा। देवांश्च नागराजानमुपबृंहितवान् प्रभुः ॥ भ्रमतो मन्दरस्याद्रेः ऊर्ध्वदे-

स्वेनैव भ्रमयति माधवे भुजाभ्यां
बभ्राम भ्रमरकवत्स शैलराजः।
किं चित्रं भ्रमति महर्षिसिद्धसङ्घे
मृद्धारे क्वचन महान् भ्रमोऽजनीति ॥ ४ ॥

अत्रान्तरे च समन्ततः प्रकीर्यमाणमन्दरशिखरकाननप्रसूनपरागपरिचयादिव धूसराणि ददृशिरे दिङ्मुखानि। परिस्फुटितनिष्ठ्यूताः फणामणय इव वासुकेः प्रतिसूर्या जजृम्भिरे। परितोऽपि आसन्नमकाण्डविप्लवं जगतामवेक्षितुमक्षमेण दयानिधिना महेश्वरेण दृशोर्निमीलनादिव प्रचकाशे पद्मबन्धुरिन्दुश्च नाकाशे। सपर्वतवनद्वीपवसुमतीकम्पसम्पन्नच-

---

शे महेश्वरः। सगणस्तववसद्देव्या देवानां हितकाम्यया।।' इति ॥ **स्वेनेति** ॥ माधवे श्रीप्रिये स्वेनैव भुजाभ्यां भ्रमयति विघूर्णयति सति भ्रमं कलयति सति चेत्यर्थः। स शैलराजो मन्दरः भ्रमरस्य प्रतिकृतिः भ्रमरकः। इवे प्रतिकृताविति कः। बालक्रीडनको दारुविशेषः भाषायां बम्बरं बुगरीति च प्रसिद्धः। तेन तुल्यं बभ्राम जुघूर्णे भ्रान्त आसीदिति चार्थः। महर्षिसिद्धसङ्घे भ्रमति भ्रमं प्राप्नुवति सति मृद्धारे घनीभूतमृत्तिकास्वरूपे क्वचन मन्दरे महान् भ्रमो भ्रान्तिः विघूर्णनं चाजनीति किं चित्रं। मायिनि वासुदेवे भ्रममुत्पादयति सति को वा भ्रमं न प्राप्नुयादिति भावः। अथ भाविहालाहलेन जगद्बाधासूचकारिष्टोत्पातान्वर्णयितुमारभते ॥ **अत्रान्तर इत्यादिना** ॥ अत्रान्तरे अस्मिन्नवसरे समन्ततश्च दिङ्मुखानि प्रकीर्यमाणा मन्दरशिखरकाननेषु यानि कुसुमानि तेषां ये परागा धूळयः तेषां परिचयात्सम्बन्धादिव धूसराणि ईषत्पाण्डुवर्णानि ददृशिरे दृष्टानीत्यर्थः। 'ईषत्पाण्डुस्तु धूसरः' इत्यमरः ॥ **परीति** ॥ परिस्फुटिता विदळिताश्च ते निष्ठ्यूता वान्ताः स्नातानुलिप्तवत्समासः। वासुकेः फणामणय इव प्रतिकूलाः सूर्याः प्रतिसूर्या जजृम्भिरे उद्बभूवुरित्यर्थः ॥ **परीति** ॥ जगतां लोकानां परितोऽपि आसन्नं सम्प्राप्तं अकाण्डो अकालस्तस्मिन् विप्लवं उपद्रवं अवेक्षितुं द्रष्टुमक्षमेण असमर्थेन दयानिधिना महेश्वरेण दृशोर्दृष्ट्योर्निमीलनादिव मुकुळनादिव आकाशे व्योम्नि पद्मबन्धुरिन्दुश्च सूर्यश्चन्द्रश्चेत्यर्थः। न चकाशे नैन्द्ध इत्यर्थः। कदाचित् प्रतिदिशं प्रतिसूर्या दृष्टाः कदाचित् प्रसिद्धसूर्योऽपि न दृष्ट इति भावः। अत्र सूर्यचन्द्रादर्शने भगवच्चक्षुर्निमीलनं न हेतुः तथापि तस्यासिद्धस्य भगवतस्सूर्यचन्द्रनेत्रत्वबलात्तत्र हेतुत्वकथनादसिद्धविषयहेतूत्प्रेक्षालङ्कारः। 'उक्तानुक्तास्पदाद्या तु सिद्धासिद्धास्पदे परे' इति लक्षणात् ॥ **सपर्वतेति** ॥ पर्वता महेन्द्रादिगिरयः वनानि चम्पकादीनि द्वीपाः कुशद्वीपादयः तैस्सहिता सपर्वतवनद्वीपा सा च सा वसुमती

लनसुमेरुशिखरस्थसुरराजनगरप्रासाददीपिका इव परिपेतुरभितोऽपि तारकाः ।

उद्यन्निर्घातघोषप्रतिभयमुदयद्धूमकेतूपकेतु
क्रन्दद्दिक्पालगन्धद्विपमुदधिपतत्तुङ्गशैलाग्रश्रृङ्गम् ।
उड्डीनश्येनकङ्कप्रकरमुपचितध्वान्तमुद्भ्रान्तवातं
प्राप्तं मृत्योरकस्मादिव वदनबिलं विश्वमासीत्तदानीम् ॥

तदनु निर्गमिष्यतः कालकूटस्योष्मणा क्वथितादुदधेरुत्पतन्तः पयःकणा यत्र यत्र निपेतुस्तत्र तत्र पर्वता व्यदीर्य-

---

चेति कर्मधारयः । स्त्रियाः पुंवदित्यादिना पुंवद्भावः । तस्याः कम्पेन चलनेन सम्पन्नानि सम्प्राप्तानि चलनानि चञ्चलानि यत्सुमेरोश्शिखराणि तत्स्थं यत् सुरराजनगरमिन्द्रपुरं तत्रस्था ये प्रासादाः भूभुजां देवानां सदनानि । 'प्रासादो देवभूभुजां' इत्यमरः । तेषां दीपिका दीपा इव तारका नक्षत्राणि निपेतुः । नक्षत्रपातादीनामुत्पातत्वमाश्वलायनपरिशिष्टे शान्तिप्रकरणे चोक्तम् । तथाहि 'परितस्तारका निपतन्ति गवां श्रृङ्गेषु धूमो जायते गोस्तनेषु रुधिरं स्रवति केतुरुत्तिष्ठेदुल्काः पतन्ति रात्राविन्द्रधनुर्दृश्यते' इति ॥ **उद्यदिति** ॥ उद्यन्तः उद्भवन्तः ये निर्घाताः अशनयः तेषां घोषेण ध्वानिना प्रतिभयं भयङ्करं । 'भयङ्करं प्रतिभयं' इत्यमरः । उदयन्त आविर्भवन्तः धूमकेतवः सवालतारकाः उपकेतवः तत्समीपवर्तिध्वजसदृशतारकाश्च यस्मिन् तत्तथाभूतं । क्रन्दन्तः रुदन्तः दिक्पालानां गन्धद्विपाः मदगजा यस्मिन् तत्तथाभूतं उदधौ पतन्ति तुङ्गानि शैलाग्राणां श्रृङ्गाणि यस्मिन् तत्तथाभूतं । तदुक्तमाश्वलायनपरिशिष्टे । 'अथ यदास्य मानुषदुःखं भवति पर्वताः स्फुटन्ति ते पतन्त्याकाशादुन्मूलन्ति तरवश्चतुष्पादं पञ्चपादं भवन्ति' इति । उड्डीनः उड्डीनगतिं प्राप्तः श्येनानां पक्षिविशेषाणां कङ्कानां गृध्रादीनां च प्रकरस्समूहो यस्मिन् तत्तथाभूतं । तदुक्तं तत्रैव । 'वाताः प्रतिकूला वान्ति कङ्काकगृध्रा वोपरि पांसूनावेष्टन्ते शशका ग्रामं प्रविशेयुर्मेघाश्च रुधिराणि प्रवर्षन्ति द्रुमाश्चोद्गिरन्त्याकाशे गन्धर्वनगराणि दृश्यन्ते' इति । उपचितमभिवृद्धं ध्वान्तमन्धकारं यस्मिन् तत्तथाभूतम् । उद्भ्रान्ता उद्गीर्णा वाताः पवनाः यस्मिन् तत्तथाभूतं विश्वमशेषं जगत् । 'विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निश्शेषं' इत्यमरः । तदानीं विषोत्पत्तेः पूर्वकाले अकस्मादज्ञातनिमित्तादित्यर्थः । मृत्योर्यमस्य मुखबिलमिति वदनद्वारमित्यर्थः । प्राप्तं प्रविष्टमिवासीदभवत् ॥ **तदन्विति** ॥ निर्गमिष्यत आविर्भविष्यतः कालकूटस्य विषस्य । 'पुंसि क्लीबे च काकोलकालकूटहलाहलाः' इत्यमरः । ऊष्मणा उष्णांशेन क्वथितात्पक्वीकृतादुदधेस्समुद्रादुत्पतन्तः उत्पतनं कुर्वन्तः पयसां क्षीराणां कणाः अणवः यत्र यत्र वृक्षादिषु

न्त, पादपाः प्रजज्वलुः, पशुपक्षिणो विनेशुः, प्रागेव सागरचराणि यादांसि।

निस्सङ्ख्यस्फुरितस्फुलिङ्गजटिलोत्सङ्गज्वलत्पावक-
ज्वालाभङ्गविटङ्कसङ्कलितधूमस्तोमभीमस्ततः।
क्रुध्यत्कालविवृत्तवक्त्रकुहरोन्मुक्ताट्टहासोद्भट-
स्फूत्कारध्वनिभीषणः प्रववृते कोऽप्यद्भुतो मारुतः॥ ६॥

स निर्जिहान एव यज्जगर्ज तर्जयन्
दिशो बभर्ज यच्च दुर्जयोष्मजर्जरं पुनर्जगत्।
ततः प्रभूतभूतघातजातपातकावली-
विलापनाभिलाषुकः किमाससाद सागरम्॥ ७॥

---

निपेतुः तत्र तत्र प्रदेशेषु पर्वता व्यदीर्यन्त विदारिता बभूवुः पादपाः प्रजज्वलुः ज्वलिता बभूवुः पशुपक्षिणो विनेशुः नाशं प्रापुरित्यर्थः। प्रागेव मन्दरपातावसर एव सागरचराणि समुद्रचारीणि यादांसि जलजन्तवः विनेशुरित्यन्वयः॥ **निस्सङ्ख्येति**॥ ततो निस्सङ्ख्यानि स्फुरितानि। भावे क्तः। स्फुरणानि येषां तथाविधा ये स्फुलिङ्गाः अग्निकणाः तैर्जटिलः व्याप्तः उत्सङ्गो यस्य स तथाभूतः यो ज्वलत्पावक इन्धाग्निः तस्य ये ज्वालानां भङ्गाश्शकलानि विटङ्कानीवेत्युपमितसमासः। 'कपोतपालिकायां तु विटङ्कं पुन्नपुंसकं' इत्यमरः। तैस्सङ्कलितः व्याप्तः ये धूमानां स्तोमाः तैः भीमः। अथवा तद्वद्भीमः भयङ्करः क्रुध्यतः क्रोधविशिष्टस्य कालस्य मृत्योर्यद्विवृत्तं विवृतं च तद्वक्त्रकुहरं मुखबिलं चेति कर्मधारयसमासः। तेन उन्मुक्ताः कृता येऽट्टहासाः तैरुद्भटा दुस्सहाः ये स्फाङ्काःरध्वनयः तैर्भीषणः तद्वद्भीषणः भयङ्करः अत एव अद्भुतः आश्चर्यकरः अननुभूतपूर्वत्वादिति भावः। कोऽप्यनिर्वाच्यः मारुतो वायुः प्रववृते प्रववौ॥ **स इति**॥ सः कालकूटः निर्जिहानः निर्गच्छन्नेव दिशः तर्जयन् भीषयन् जगर्ज गर्जनं चकारेति यत् दुर्जयं निरोद्धुमशक्यं यदूष्म तेन जर्जरं जीर्णं जगत् बभर्ज भर्जनञ्चकारेति यत् ततो भर्जनात् प्रभूतमधिकं भूतानां प्राणिनां घातेन संहारेण जातानि यानि पातकानि तेषामावलिः पङ्क्तिः तस्या विलोपनमपनोदनं तस्मिन्नभिलाषुको लुब्धः। 'लुब्धोऽभिलाषुकस्तृष्णक् समौ लोलुपलोलुभौ' इत्यमरः। तथाभूतस्सन् सागरमाससाद प्राप किं सर्वपापनिवर्तकसमुद्रस्नानेच्छयेति भावः॥ **तत इति**॥ ततो निर्गमनानन्तरं तेन ऊष्मणा लीढाः आक्रान्तास्सप्त सप्तकूपाकाः। तदुक्तममरेण। 'दधिक्षीरसुरासर्पिर्लवणोदास्तथापरे। स्वादूदकोदश्चेक्षुद इति सप्त प्रकीर्तिताः॥' सिन्धवस्समुद्राः सप्ताप्यबिन्दव इव एकैव

ततस्तदालीढास्सप्तापि सिन्धवः सप्ताज्यबिन्दव इव जज्वलुरेकयैव ज्वालया। तदग्रसरोष्मतापिता एव भस्मावशेषतामभजन्त जन्तवः क्षुद्रास्त्रिभुवने। प्रदीपशिखराग्रविन्यस्तेन प्रसूनेनेव धुत्तूरस्य सुधानिधिनैव सुतरां परिमम्ले। प्रक्षिप्तो दूरमस्य मरुतो रंहसा पतगपतिरेव किं पपात, किमुत्पपात, किमतप्यत, किं निरदह्यत, किं मुमूर्च्छ, किं जीवितं जहाविति न ज्ञायते। उद्भ्रान्तविषानला सममिव प्राणैरुरगपतेरपि तनुर्वर्ध्रिकेव सलिलक्लिन्ना वस्त्रभस्त्रिकेव रिक्तोदरा निस्सारतया क्षणादवालम्बत नितम्बतश्शैलपतेः। प-

---

ज्वालया जज्वलुः उद्दिदीपिरे ॥ तदिति ॥ त्रिभुवने क्षुद्राः जन्तवः प्राणिनः। 'प्राणी तु चेतनो जन्मी जन्तुः' इत्यमरः। तस्य विषस्य अग्रसरोष्मणा पुरोनिर्गतोष्मणैव तापिताः तापं प्रापिता एव भस्मावशेषतां भस्मना रूपेणावशिष्टत्वं अभजन्त प्रापुरित्यर्थः॥ प्रदीपेति ॥ प्रदीपशिखराग्रे विन्यस्तेन निक्षिप्तेन धुत्तूरस्य काञ्चनवृक्षस्य कुसुमेन पुष्पेणेव। 'उन्मत्तः कितवो धूर्तो धुत्तूरः काञ्चनाह्वयः' इत्यमरः। सुधानिधिना क्षीरार्णवेन परिमम्ले। ग्लै म्लै हर्षक्षय इति धातोर्भावे लिट् ॥ प्रक्षिप्त इति ॥ अस्य विषराजस्य मरुतः पवनस्य रंहसा वेगेन दूरं प्रक्षिप्तः विनिवेशितः पतगपतिर्गरुड एव पपात पतनं चकार किमुत्पपात उत्प्लुत्य धावनं चकारेत्यर्थः। किमतप्यत तप्तः सञ्जात इत्यर्थः। किं निरदह्यत भस्मीकृतः किमित्यर्थः। किं मुमूर्च्छ मूर्च्छां प्राप किमित्यर्थः। किं जीवितं प्राणनं जहौ तत्याज किमित्यर्थः। इति एवमासीदिति न ज्ञायते तत्काले तत्र कोऽपि स्थातुं शक्तो माभूदिति भावः॥ उदिति ॥ प्राणैस्समं उद्भ्रान्तः उद्गीर्णः विषानलो यया सा तथाभूतेव उरगपतेर्वासुकेस्तनुः कायोऽपि निस्सारतया निर्जलतया सलिलेन क्लिन्ना आर्द्रा। 'आर्द्रं सार्द्रं क्लिन्नं' इत्यमरः। वर्ध्रैव वर्ध्रिका। स्वार्थे कः। चर्मैवेत्यर्थः। 'नध्री वध्री वरत्रा स्यादश्वादेस्ताडनी कशा' इत्यमरः। रिक्तं पिष्टतूलादिरहितं उदरं कुक्षिदेशो यस्यास्सा तथाभूता भस्त्र्येव भस्त्रिका। अत्रापि स्वार्थे कः। स्वर्णकारैः पुटपाकार्थं सन्निधौ धमनोपयोगिसन्दानितचर्मविकारः क्रियते तदेव भस्त्राशब्देन गृह्यते। 'तैजसावर्तिनी मूषा भस्त्रा चर्मप्रसेविका' इत्यमरः। क्षणात्क्षणं विहाय शैलपतेर्मन्दरस्य नितम्बतः नितम्बदेशे। सार्वविभक्तिकस्तसिः। अवालम्बत लम्बमाना बभूव। भगवत्तेजसा आप्यायितापीति भावः। तदुक्तं श्रीभागवते। 'निर्मथ्यमानादुदधेरभूद्विषं महोल्बणं हालहलाह्वमग्रतः। सम्भ्रान्तमीनोन्मकराहिकच्छपात्तिमिद्विपग्राहतिमिङ्गिलाकुलात् ॥' ॥ परेति ॥ माया

**रिमृष्टाश्च तेन मायाविनोऽपि महासुराः, सुकृतशालिनोऽपि सुपर्वाणः, माहात्म्यनिधयोऽपि महर्षयः, चिरजीविताबलेन परं चिन्मात्रशेषिताः, परिक्षीणया गिरा, परिभ्रमता च लोचनेन, प्राकृता इव पर्यचेष्टन्त धरणीतले।**

**ऊष्माणाववहद्विभावसुरुभौ सांसिद्धिकागन्तुकौ**
**सस्यन्दे क्वथितं शरीरमभितः पाथोमयं पाशिनः।**
**सर्वाङ्गीणदृगन्तकन्दळदतिस्फाराश्रुधाराशतैः**
**सेकंसेकमनुक्षणं तु मघवा गात्रं दधौ जीवितम्॥ ८॥**

**हताः स्मो वयमस्मिन् कर्मणि प्रवर्तिता भवतेति परिभाषमाणेषु सुरासुरेषु, परितप्यमानस्ततोऽपि त्रपयैव पद्मसम्भ-**

कापट्यमेषामस्तीति मायाविनः। अस्मायामेधास्रजो विनिरिति विनिप्रत्ययः। तथाविधा अपि महासुराः दानवाः सुकृतं पुण्यं तच्छालिनोऽपि सुपर्वाणः देवाः माहात्म्यस्य निधयः स्थानभूता अपि सिद्धाः अणिमादिशालिनः महर्षयः वसिष्ठादयश्च तेन विषेण परामृष्टाः स्पृष्टास्सन्तः चिरजीविता चिरकालजीवित्वं तस्या बलेन परं सामर्थ्येनैकेनेवेत्यर्थः। चिन्मात्रं प्रज्ञामात्रं तेन शेपिताः अवशेषितास्सन्तः प्रक्षीणया गिरा विनष्टया वाचेत्यर्थः। परिभ्रमता घूर्णमानेन लोचनेनेत्र धरणीतले प्राकृताः पृथग्जना इव। 'विवर्णः पामरो नीचः प्राकृतश्च पृथग्जन' इत्यमरः। पर्यचेष्टन्त हस्तपादादिघातं कृत्वा चेष्टाश्चक्रुरित्यर्थः। अत्रोक्तं देवीभागवते। 'मथ्यमानात्ततस्तस्मात्क्षीराब्धेर्देवदानवैः। नतः क्षणात्समभवत्कालकूटो महोल्बणः॥ ज्वालया तस्य सर्वेऽपि मूर्च्छामापुः सुरा नृप। दैत्या निश्चेतना जाता विष्णुः कृष्णस्तदाभवत्॥' इति॥ **ऊष्माणाविति**॥ विभावसुस्सूर्यः। 'विभावसुर्ग्रहपतिः' इत्यमरः। सांसिद्धिकागन्तुकौ स्वाभाविकतदात्वसम्प्राप्ताविल्यर्थः। उभौ ऊष्माणौ उभयविधं तापमित्यर्थः। अवहत् धृतवानित्यर्थः। तयोर्विषाग्निसम्बन्धेकं अपरन्तु विषाग्न्यभिभूततया बहिःप्रसरणाभावादन्तरेव स्थितं स्वीयमेकमिति भावः। पाशिनो वरुणस्य। 'प्रचेता वरुणः पाशी' इत्यमरः। पाथसां जलानां विकारः पाथोमयं अम्मयमित्यर्थः। क्वथे पाके क्तः। पक्वं सत् सस्यन्दे द्रवीबभूवेत्यर्थः। अतिस्फाराण्यभिवृद्धानि सर्वाङ्गीणानि सर्वावयवव्यापीनि दृगन्तेषु कन्दळन्ति प्ररोहन्ति यान्यश्रूणि बाष्पाणि तेषां या धाराः परम्पराः तासां शतैरनेकैरित्यर्थः। मघवतः गात्रं शरीरमनुक्षणं प्रतिक्षणं सेकंसेकं सिक्त्वा सिक्त्वा जीवितं जीवनं। भावे क्तः। दधौ दधारेत्यर्थः। किं वक्तव्यमितरेषामिति भावः॥ **हता इति**॥ अस्मिन् समुद्रमथनरूपे क-

वो विश्वम्भरमिदमवादीत् 'भगवन् किमेतदिति मन्यसे।

न संवर्तः प्राप्तो न च वहति संवर्तपवनः
शतेनाब्दैः शोषं नयति स परन्तु त्रिभुवनम्।
न च व्यापद्यन्ते तदुपरि चरन्तस्तनुभृतः
क एष ब्रह्माण्डं कबळयति निश्शेषयति च ॥ ९ ॥

अपि च।

नासौ वह्निर्न हि खलु भवत्यग्निनाग्नेः प्रणाशो
नापि क्ष्वेळो न हि गरळतो हानिराशीविषाणाम्।

---

र्मणि व्यापारे भवता प्रवर्तिताः उत्सुकीकृतास्सन्तः हताः हिंसिताः स्मः इतीत्थं सुरासुरेषु परिभाषमाणेषु सनिन्दोपालम्भं कुर्वत्सु। 'यस्सनिन्द उपालम्भस्तत्र स्यात्परिभाषणं' इत्यमरः। त्रपया लज्जयैव ततोऽपि परिभाषणेनापि। सार्वविभक्तिकस्तसिः। तप्यमानस्सन्तापितः पद्मसम्भवो ब्रह्मा विश्वम्भरं श्रीहरिं प्रत्यवादीत् जगादेत्यर्थः। भगवन्विष्णो एतदुद्यद्वस्तु किमिति मन्यसे जानासि॥ **नेति**॥ संवर्तः प्रळयकालः न संप्राप्तः न समागत इत्यर्थः। 'संवर्तः प्रळयः कल्पः क्षय' इत्यमरः। संवर्तकालोचितश्चासौ पवनश्चेति शाकपार्थिवादित्वात्समासः। प्रळयोचितवायुश्चेत्यर्थः। न वहति न वातीत्यर्थः। स तु परं प्रळयवायुस्तु शतेन अब्दैस्संवत्सरैः। 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समा' इत्यमरः। त्रिभुवनं त्रीन् लोकान् शोषं निस्सारतां शुष्कतामिति वार्थः। नयति प्रापयति। तदुक्तं श्रीभागवते। 'पर्जन्यश्शतवर्षाणि भूमौ राजन्न वर्षति। तदा निरन्ने ह्यन्योन्यं भक्षमाणाः क्षुधार्दिताः॥ क्षयं यास्यन्ति शनकैस्तत्कालोपद्रुता जनाः। सामुद्रं दैहिकं भौमं रसं सांवर्तको रविः॥ रश्मिभिः पिबते घोरैस्सर्वं नैव विमुञ्चति। ततस्संवर्तको वह्निः सङ्कर्षणमुखोत्थितः॥ दहत्यनिलवेगोत्थः शून्यान् भूविवरानथ। उपर्यधः समन्ताच्च शिखाभिर्वह्निसूर्ययोः। दह्यमानं विभात्यण्डं दग्धगोमयपिण्डवत्॥ ततः प्रचण्डपवनः वर्षाणमाधिकं शतम्। ततस्सांवर्तको वाति धूम्रं खं रजसा वृतम्॥ ततो मेघकुलान्यङ्ग चित्रवर्णान्यनेकशः। शतं वर्षाणि वर्षन्ति नदन्ति रभसस्वनैः॥' इति। तदुपरि त्रिभुवनस्योपरि चरन्तः तनुभृतः प्राणिनः न च व्यापद्यन्ते विपदं न प्राप्नुवन्तीत्यर्थः। एषः उद्भवन् पदार्थः कः ब्रह्माण्डं कबळं करोति कबळयति निश्शेषं करोति निश्शेषयति। तत्करोतीति णिच्॥ **नेति**॥ असौ उद्भवन् पदार्थः वह्निर्न हि यस्मादग्निनाग्नेर्विनाशो न भवति। प्रत्युत तदभिवर्धकत्वादिति भावः। क्ष्वेळः विषमपि न। 'क्ष्वेळस्तु गरळं विषं' इत्यमरः। हि यस्माद्गरळतो विषादाशीविषाणां सर्पाणां। 'आशीविषो विषधर' इत्यमरः। हानिः नाशः नास्ति तस्य तन्मुखत्वादिति भावः। इदं सक्

नेदं सृष्टं सकृदपि मया नोपदिष्टं त्वया वा
किं व्याहारैर्मम च किमपि क्षुभ्यतीवान्तरात्मा ॥' १० ॥

इत्यभिदधान एव विधौ, अशङ्कितोपनतरसातलातङ्कसङ्घ-टितसमाधिक्षोभकोपदुर्दर्शकालरुद्रसमुन्निद्रितफालनेत्रसमुत्थित इव महाप्रळयपावकः, प्रतिसर्गनिर्गळदनर्गळशेषविषनिःश्वास-धूमसमाश्लेषजनितविषमषीपिण्ड इव मथनसंक्षोभचलितबडबा-नलसंवळितः, सुन्दरतरमन्दरगिरिकन्दरशयस्वायम्भुवशाम्भ-वलिङ्गचलनसम्भावितप्रत्यवाय इव परमदारुणः, कल्पानलद-ग्धजगदण्डपिण्डीकरणप्रसक्तकालचण्डीकरक्षालनोदकमिव क्षी-

इदं सकृदेकवारमपि मया न सृष्टं त्वया वा नोपदिष्टं न प्रोक्तं व्याहारैरुक्तिभिः किं । 'व्याहार उक्तिर्लपितं' इत्यमरः । मम चान्तरात्मा मनः किमपि किं वा क्षुभ्यति बिभेतीत्यर्थः । क्षुभ सञ्चलने भये चेति धातोर्लट् । जायमाने पदार्थे विलक्षणवि-षत्वारोपार्थं सयुक्तिकं यथा तथा वह्नित्वादीनामपह्नवाद्धेत्वपह्नुत्यलङ्कारः । 'स एव युक्तिपूर्वश्चेदुच्यते हेत्वपह्नुतिः' इति लक्षणात् ॥ **इतीति** ॥ इतीत्थं विधौ ब्रह्मणि अभिदधाने सति भाषमाणे सत्येव अशङ्कितोपनतोऽतर्कितसंप्राप्तो यो रसातलस्य पाताळस्य आतङ्कः तापः । 'अधो भुवनपाताळबलिसद्म' इत्य-मरः । 'रुक्तापशङ्कास्वातङ्कः स्वल्पेऽपि क्षुल्लकस्त्रिषु' इति च । तेन सङ्घटितः कलितः यः समाधेः योगलक्षणनियमस्य । 'स्युस्समर्थननीवाकनियमाश्च समाधयः' इत्य-मरः । क्षोभः स्खालित्यं । क्षुभ सञ्चलन इति धातोः पचाद्यच् । तेन यः कोपः क्रोधः तेन दुर्दर्शः दुर्निरीक्ष्यो यः कालरुद्रः तेन समुन्निद्रितमुन्मीलितं य त्फालनेत्रं तस्मादुत्थितः उद्भूतः प्रळयपावकः प्रळयकालाग्निरिव मथनमेव सङ्क्षोभः कर्षणं तेन चलितो यो बडबानलेन मिळितः संवळितः तथाभूतः सर्गः सृष्टिः सर्गे सर्गे प्रतिसर्गं । वीप्सायामव्ययीभावः । 'सर्गस्वभावनिर्मोक्षनिश्चया-ध्यायसृष्टिषु' इत्यमरः । निर्गळन्तः निस्सरन्तः अनर्गळा निर्निरोधाश्च ये शेष-स्य विषमिश्रिताः निश्वासधूमाः तेषां संश्लेषेण जनितः यो विषमष्याः पिण्डः गोळकं अयोगोळकवत्स इवेत्यर्थः । 'पिण्डो वपुषि निवापे गोळेऽप्यथ पिण्डम-यसि गर्भशिशौ' इति भास्करः । सुन्दरतरोऽतिशयेन सुन्दरः यः मन्द-रगिरिः तस्य कन्दरे शेत इति कन्दरशयं तच्च तत् स्वयम्भवं स्वयं व्यक्तं यच्छाम्भवलिङ्गं तस्य चलनेन कम्पनेन सम्भावितस्सम्पादितः यः प्रत्यवायो दुरितं स इव परमदारुणोऽत्यन्तभयङ्करः क्षीरोदं क्षीरनिधिं कल्पान-लदग्धस्य जगदण्डस्य पिण्डीकरणे प्रसक्ता उद्युक्ता या कालचण्डी तस्याः कर-क्षाळनोदकमिव आकलयन् कुर्वन् भुवनेषु लोकेषु प्रथमं निःसृतो निर्गतः यः प-

रोदमाकलयन्, प्रथमनिःसृतपवनपरिस्पन्दमात्रनिश्शेषितेषु भुवनेषु, दग्धव्यानुपलम्भसम्भवक्षुधाप्रसारितरसनासहस्रभीषणेन ज्वालाकलापेन लेलिहान इव वैरिञ्चमपि प्रपञ्चं, अवसादितभुवनकोलाहलो हालाहलो निर्गत्य, वारण इव वारणमभिदुद्राव रमारमणम्। तत्क्षणं च परुषविषानलज्वालापरिप्लोषप्रतीकारमन्त्राक्षराङ्गाररूषितानीव वदनानि चतुर्वदनस्य दधिरे दन्ततालुरसनाधरे मालिन्यम्।

म्लायन्त्यां वैजयन्त्यामथ कनकपटे धूसरे धूमजालैः
चक्रे निर्ज्वालचक्रे सपदि परिणतस्फोटशङ्के च शङ्खे ।
उत्सर्पन्तं समन्तादपि परिकलयन्नुद्भटं कालकूटं
कालात्मा पद्मनाभो मनसि विनिदधे कालसङ्कर्षयोगम् ॥

---

वनः तस्य परिस्पन्दमात्रेण किञ्चिच्चलनेनैव निश्शेषितेषु निरवशेषितेषु सत्सु दग्धव्यो दाह्यपदार्थः तस्यानुपलम्भः अप्राप्तिः अलाभ इति यावत्। तस्मात्सम्भवा समुत्पन्ना या क्षुधा क्षुत् तया प्रसारिता या रसनाः जिह्वाः तासां सहस्रवद्भीषणं भयङ्करं तथाभूतेन ज्वालानां कलापस्समूहः तेन वैरिञ्चं विरिञ्चिसम्बन्धिनं प्रपञ्चं लोकं लेलिहानः लेहनं कुर्वन्निव। अवसादितः विनाशितः भुवनानां कोलाहलः कलकलरवः येन स तथाभूतः। हालाहलः कालकूटः वारणं गजं वारण इव। 'मतङ्गजो गजो नागः कुञ्जरो वारणः करी' इत्यमरः। रमारमणं श्रीहरिं अभिदुद्राव अनुधावनं चकारेत्यर्थः॥ **तदिति**॥ तत्क्षणं परुषः दुस्सहः यो विषानलः तस्य ज्वालाभिः यः परिप्लोषः म्लानत्वं तस्य प्रतीकारः चिकित्सनं तदर्थाः ये मन्त्राः। 'नर्यप्रजांमेगोपाय' इत्यादयो मन्त्राः तेषामक्षरैर्वर्णैरेवाङ्गारैः रूषितानि व्याप्तानीव चतुर्वदनस्य ब्रह्मणः वदनानि दन्ततालुरसनाधरे मालिन्यं मलिनता। प्राण्यङ्गत्वाद्द्वन्द्वश्च प्राणीत्यादिना एकवद्भावः। दधिरे दधुरित्यर्थः॥ **म्लायन्त्यामिति**॥ अथ कालस्तत्कालः तस्मिन्नात्मा धैर्यं यस्य सः कालात्मा। यद्वा कालस्वरूप इत्यर्थः। 'आत्मा यत्नो धृतिर्बुद्धिः' इत्यमरः। पद्मनाभः श्रीहरिः वैजयन्त्यां वनमालायां म्लायन्त्यां म्लानतां प्राप्तायां सत्याम्। धूमजालैः कनकपटे धूसरे मालिने सति चक्रे सुदर्शने निष्क्रान्तं ज्वालानां चक्रं समूहो यस्मात्तत्। निरादयः क्रान्ताद्यर्थे पञ्चम्येति समासः। शङ्खे पाञ्चजन्ये परिणतः प्राप्तः यः स्फोटः विदळनं तस्माच्छङ्का भीतिर्यस्येति व्यधिकरणबहुव्रीहिः। अथवा परिणता स्फोटशङ्का यस्य स तथाभूते सति समन्तात्परितः उत्सर्पन्तं प्रसरन्तं कालकूटं उद्भटं दुस्सहं परिकलयन् विजानन् मनसि चित्ते

**सिञ्चन्तीं परमामृतानि दिशि दिश्यप्राकृतैरंशुभिः**
**खेलन्तीममृतार्णवे मणिमयीमारुह्य नौकां नवाम्।**
**स्निग्धापाङ्गतरङ्गशिक्षितभवक्ष्वेळां मुकुन्दश्चिरात्**
**अस्मार्षीदमृतेश्वरीं भगवतीमम्बामहम्भावतः ॥ १२ ॥**
**तामित्थं स्मरतश्चिरं मधुभिदस्तारां सुधामालिनीं**
**धूतद्वैतकळङ्कशङ्करकलापुम्भावरूपात्मनः।**

---

सपदि तदानीं कालात्सङ्घर्षः पराभवः तस्य योगं सम्बन्धं विनिदधे विवेदेति तात्पर्यार्थः। तदुक्तं देवीभागवते। 'ज्वालया तस्य सर्वेऽपि मूर्च्छामापुस्सुरा नृप। दैत्या निश्चेतना जाता विष्णुः कृष्णस्तदाभवत् ॥ पीताम्बरं धूसरं तच्चक्रं निर्ज्वालचक्रकम्। स शङ्खः स्फोटशङ्खोऽभूत्तस्य देवस्य शार्ङ्गिणः॥ मन्दगर्वस्स गोविन्दः ज्वालाव्याप्ततनुर्भृशम्। चिन्तयन् तत्प्रतीकारं हृदि सस्मार शङ्करं' इति ॥ **सिञ्चन्तीमिति** ॥ दिशि दिशि प्रतिदिशं। वीप्सायां द्विर्भावः। प्रकृतेः कारणादागताः प्राकृताः सहेतुका इत्यर्थः। न प्राकृता अप्राकृताः तैः निर्हेतुकैरिति यावत्। आभरणाद्युपाध्यप्रयोजकत्वादिति भावः। अंशुभिः दीप्तिभिः परमामृतानि सिञ्चन्तीं सेकं कुर्वन्तीं किरन्तीमिति तात्पर्यार्थः। मणिमयीं मणिभिः प्रचुरामित्यर्थः। प्राचुर्यार्थे मयट्। टिड्ढेत्यादिना ङीप्। नवां नूतनां नौरेव नौका तरिः तां। 'नवीनो नूतनो नवः' 'स्त्रियां नौस्तरणिस्तरिः' इति चामरः। आरुह्य आरूढा भूत्वेत्यर्थः। अमृतार्णवे खेलन्तीं क्रीडन्तीमित्यर्थः। स्निग्धाः मसृणा ये अपाङ्गाः कटाक्षाः तैश्शिक्षितः भवः विद्यमानः क्ष्वेळः गरळं यस्याः सा अपाङ्गमात्रेण विद्यमानकालकूटघ्नीत्यर्थः। 'क्ष्वेळस्तु गरळं विषं' इत्यमरः। तथाभूतां भगवतीमम्बां अमृतेश्वरीं तारासंज्ञिकां सुधामालिनीं देवीं मुकुन्दः श्रीहरिः अहमिति भावः अभिप्रायः अहम्भावस्तस्मादहम्भावतः। 'भावः पदार्थे सत्तायां क्रिया चेष्टात्मयोनिषु। विद्वल्लीलास्वभावेषु भूत्यभिप्रायजन्तुषु॥' इति नानार्थमाला। अस्मार्षीत् सस्मार अहममृतेश्वर्यस्मीति दध्याविति भावः॥ **तामिति** ॥ सुधायाः माला सुधामाला अस्या अस्तीति सुधामालिनी स्रवत्सुधेति भावः। तथाभूतां तारां तारादेवीं इत्थमभेदेनेत्यर्थः। चिरं बहुकालं स्मरतः ध्यायतः द्वयोर्भावः द्विता सैव द्वैतं। स्वार्थेऽण्प्रत्ययः। तदेव कळङ्कोऽङ्कः धूतः उत्सृष्टः द्वैतकळङ्को येन सः। स चासौ शङ्करश्चेति कर्मधारयः। 'त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टं' इत्यमरः। 'कळङ्कोऽङ्कापवादयोः' इति च तथाभूतस्य शङ्करस्य या कला कलना कृतिरिति यावत्। शक्तिरिति वार्थः। तस्याः। 'कलांशमात्रे शिल्पादौ कलनाकालभेदयोः। इन्दोश्च षोडशे भागे स्यान्मूलधनवर्धने' इति भास्करः। पुंसा पुंरूपेण भावः। भूतिः पुरुषरूपेण भवनमिति यावत्।

**पाषाणव्यतिभेदजर्झरजरच्छैवालवत्तत्क्षणात्**
**आरात्किञ्चिदपासरत्परिगतो हालाहलस्सर्वतः ॥ १३ ॥**

**अथ स्वस्थो यथापुरमम्बुजेक्षणस्तावतापि संरम्भेण तनुमात्रत्राणपर्यवसन्नेन निराशो हालाहलनिग्रहे, निश्चिन्वन्ननितरसाध्यसाधनधौरन्धर्यमन्तकान्तकस्य भाग इति, निर्धारयन्नन्तरेण परदेवताप्रसादमलभ्यतां शिवसाक्षात्कारस्य, चिन्तयन्नपि चिच्छक्तिविभूतिरूपतामात्मनः, परमेण समाधिना**

---

'विद्रल्लीलास्वभावेषु भूत्यभिप्रायजन्तुषु । भावस्सत्ता' इत्यादि भास्करः । एवंच शङ्करकलाया यः पुम्भावः तस्मिन् यद्रूपमाकार इत्यर्थः । 'रूपं स्वभावे शुक्लादौ सौन्दर्ये नायके पशौ । ग्रन्थावृत्तौ नाटकादावाकारे श्लोकशब्दयोः' इति भास्करः । तद्रूपमात्मा विग्रहो यस्य सः । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इत्यमरः । तथा चाद्वितीयशङ्करकलास्वरूपपार्वतीविवर्तस्येति भावः । एवम्भूतस्य मुरभिदो वासुदेवस्य सर्वतः समन्ततः परिगतः परिप्राप्तः हालाहलः कालकूटः तत्क्षणात् । ल्यब्लोपे पञ्चमी । ध्यानक्षणं विहायेत्यर्थः । पाषाणस्य व्यतिभेदः आघातः तेन जर्झरः खण्डितः यो जरन्निस्सारं यच्छैवालं शैवलं तद्वत् । 'जलनीली तु शैवालशैवलेऽथ कुमुद्वती' इत्यमरः । आरात्समीपे किञ्चिदल्पमपासरदपगतः सुधामालिनीध्यानेन किञ्चिद्विषबाधा स्वस्य गतेति भावः ॥ **अथेति** ॥ यथापुरं पुरेव स्वस्थः सुखितमानसः । 'स्वस्थस्सुखितमानस' इत्यजयः । अम्बुजेक्षणः श्रीहरिः तनुमात्रं स्वशरीरमात्रं तस्य त्राणं रक्षणं । 'स्त्रियां मूर्तिस्तनुस्तनूः' । 'त्राणं रक्षितमवितं गोपायितं गुप्तं' इति चामरः । तस्मिन् पर्यवसन्नं उपक्षीणं तथाभूतेन तावता तथाविधेन संरम्भेण प्रयत्नेनापि हालाहलं कालकूटः तस्य निग्रहे निवारणविषये निराशः स्पृहारहितस्सन् इतरैस्साधयितुं न योग्यं अनितरसाध्यं इतरैः कर्तुमशक्यं कार्यमित्यर्थः । 'त्रिषु साध्यं साधनीय' इति भास्करः । तस्य साधनं सम्पादनं तस्मिन् धौरन्धर्यं धुरन्धरस्य भावः धुरीणत्वमिति यावत् । 'धूर्वहे धुर्यधौरेयधुरीणास्स्युर्धुरन्धराः' इत्यमरः । अन्तकान्तकस्य परशिवस्य भागः अंशः । 'भागो भाग्ये रूपकांशे चतुर्थांशैकदेशयोः' इति नानार्थमाला । इतीत्थं निश्चिन्वन् निश्चयं कुर्वन्नान्तरेण करणेनेति शेषः मनसेत्यर्थः । शिवस्य साक्षात्कारः प्रत्यक्षं तस्य परदेवतायाः प्रसादोऽनुग्रहः तल्लभ्यतां तत्प्राप्यतां निर्धारयन् निर्धारणं कुर्वन् । पाठान्तरे परदेवताप्रसादमन्तरेण विहायेत्यर्थः । शिवसाक्षात्कारस्य अलभ्यतां दौर्लभ्यं निर्धारयन्निति योजना । आत्मनः स्वस्य चिच्छक्तिरूपतां शिवशक्तिरूपत्वं चिन्तयन् विदन् परमेण उत्कृष्टेन । 'परमं स्यादनुज्ञानेऽप्यासन्नापरमात्मनि । त्रिषूत्कृष्टे पश्च-

समाराध्य नारायणीमित्थमस्तावीत् ।

'यज्जन्मस्थेमभङ्गव्रतमिह जगतां यच्च सर्वान्तरत्वं
यत्स्वातन्त्र्यं च मोक्षे श्रुतिषु निगदितं विश्वसाम्राज्यचिह्नम् ।
तद्यस्यास्साहचर्यात्परिणमति परब्रह्मणि श्रीमहेशे
तामाद्यामात्मविद्यामहमिति कलयन् सर्वतो निर्वृतोऽस्मि ॥
यल्लक्ष्मीदयितोऽस्मि यद्दनुभुवां जेतास्मि यत्कर्मिणां
कर्मस्वभ्युदयप्रदोऽस्मि यदपि ध्येयोऽस्मि वा योगिनाम् ।
तत्सर्वं त्रिपुरे महेश्वरि महामाये जगद्रूपिणि
त्वत्सौभाग्यमहाविभूतिकणिकालेशस्य लेशायते ॥ १५ ॥

---

मस्तु स्वरेणापूरणे त्रिषु' इति भास्करः । समाधिना ध्यानेन । 'समाधिर्ध्याननीवाकनियमेषु समर्थने' इति च । नारायणी श्रीगौरी । 'नारायणी रमागौर्योश्शतावर्यां हरौ तु वा' इति नानार्थमाला । इत्थं वक्ष्यमाणप्रकारेण अस्तावीत् स्तुतिं चकारेत्यर्थः ॥ यदिति ॥ जगतां लोकानां जन्म उत्पत्तिः स्थेम स्थितिः भङ्गः प्रळय इत्यर्थः । एतेषु विषये यद्व्रतं नियमः । 'नियमो व्रतमस्त्री तच्चोपवासादिकर्मकं' इत्यमरः । यद्वर्तते जगदुत्पत्तिस्थितिलयरूपकार्यं करोमीति भावः । सर्वेषामन्तरः अन्तरात्मा । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च' इत्यमरः । तस्य भावस्तत्त्वं यद्वर्तते इहाद्य श्रुतिषु वेदेषु निगदितमभिहितं मोक्षे मुक्तिदानविषये यत् स्वातन्त्र्यं अपावृतत्वं । 'स्वतन्त्रोऽपावृतः स्वैरी' इत्यमरः । साम्राज्यस्य मण्डलेश्वरत्वस्य सम्यगितरापेक्षामन्तरा राजते प्रकाशत इति सम्राट् तस्य भावस्साम्राज्यं स्वप्रकाशत्वं तस्येति वार्थः । चिह्नं लक्षणं यद्वर्तते । 'चिह्नं लक्ष्म च लक्षणं' इत्यमरः । तत्सर्वं परब्रह्मणि श्रीपरमेशे परशिवे यस्याः परदेवतायास्साहचर्यात् सान्निध्यात् परिणमति घटत इत्यर्थः । तथोक्तमाचार्यैः । 'शिवश्शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि' इति । आद्यामादिभवां । 'आद्य आदिभवे मुख्ये भक्ष्ये चापि त्रिलिङ्गक' इत्यमरसारः । आत्मविद्यां ब्रह्मविद्यारूपिणीं । तदुक्तं देवीमाहात्म्ये । 'या देवी सर्वभूतेषु विद्यारूपेण संस्थिता' इति । तां परदेवतां अहमिति कलयन् अभेदेन ध्यायन्नित्यर्थः । सर्वतः सर्वप्रकारैः निर्वृतः सुखितः अस्मि भवामि ॥ यदिति ॥ अहं लक्ष्म्या रमायाः दयितः प्रियोऽस्मीति यत् दनुभुवां दानवानां जेता जयकर्ता अस्मीति यत् कर्मिणां कर्मठानां कर्मसु सन्ध्यावन्दनादिषु सहस्रवर्षसत्रान्तेषु कर्मसु अभ्युदयः चित्तशुद्ध्यादिश्रेयः तस्य प्रदः प्रदातास्मीति योगिनां वा ध्येयः ध्यातव्यः अस्मीति यदपि तत्सर्वं हे मातः जननि त्रिभ्यः पुरा त्रिपुरा ब्रह्मादी-

अपि च।

अतीतत्रैगुण्यामशरणशरण्यां भगवतीं
अहं तामालम्बे दृढतरमहन्तां पशुपतेः।
तदाद्यं तत्त्वानामजरमपरिच्छेद्यममलं
पराभूतद्वैतं परमपदमाविर्भवतु मे ॥ १६ ॥'

इति स्तुतिभिरर्थ्याभिर्ध्यायतो निश्चलं शिवाम्।
अस्पन्देष्वस्य गात्रेषु पस्पन्दे दक्षिणो भुजः ॥ १७ ॥

---

तामुपाधित्वेन पूर्वं वर्तमाना इति भावः। तस्याश्शम्बुद्धिः महती च सा मायेति कर्मधारये। आन्महत इत्यादिना महत आकारः तस्याश्शम्बुद्धिः। 'स्यान्माया शाम्बरी मायाकारस्तु प्रातिहारिक' इत्यमरः। तस्या जगन्मोहत्वाच्छाम्बरीवन्मायात्वमिति भावः। हे महेश्वरि जगन्नियन्त्रीत्यर्थः। हे जगद्रूपिणि जगत्स्वरूपे प्रकृतिकार्यत्वादिति भावः। हे परदेवते त्वत्तव सौभाग्यं माहात्म्यं तदेव महाविभूतिः तस्य वा महाविभूतिस्सम्पत्। 'भूतिर्भस्मनि सम्पदि' इत्यमरः। तस्याः कणिका लेशः तस्याः यो लेशः अस्य लेशायते लेशवदाचरतीत्यर्थः॥ **अतीतेति** ॥ त्रिगुणा एव त्रैगुण्यं। चतुर्वर्णादित्वात् स्वार्थे ष्यञ् प्रत्ययः। त्रैगुण्यमतिक्रान्ता अतीतत्रैगुण्या। यतः स्वयमेव त्रिगुणात्मिका ततः स्वगतिरिक्तसत्त्वरजस्तमोगुणत्रयरहितेत्यर्थः। तथाभूतां अविद्यमानं शरणं रक्षको येषां ते अशरणाः अस्मदादयः तेषां शरण्यां रक्षणधुरीणामित्यर्थः। 'शरणं गृहरक्षित्रोः' इत्यमरः। भगवतीं माहात्म्यवतीं। 'भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु' इत्यमरः। पशुपतेः परमेश्वरस्य अहमो भावः अहन्ता अहङ्काररूपिणीत्यर्थः। तदुक्तम्। 'पुरमथितुराहोपुरुषिका' इति। तथाभूतां तां परदेवतां अहं अतिशयेन दृढं दृढतरम्। 'गाढबाढदृढानि च' इत्यमरः॥ आलम्बे ध्यायामीति तात्पर्यार्थः। अविद्यमाना जरा यस्य तदजरं देशकालवस्तुभिः परिच्छेत्तुं अनर्हमपरिच्छेद्यं अप्रमेयमित्यर्थः। अमलं निर्मलं पराभूतं तिरस्कृतं द्वैतं येन तत्तथाभूतम्। तत्त्वानां पञ्चविंशतिसङ्ख्याकानां आद्यं प्राथमिकं तत्तत्त्वमित्यर्थः। मे मम आविर्भवतु स्फुरतु चकास्त्वित्यर्थः। यद्वा तत्त्वानां मुख्यं आद्यम्। 'आद्य आदिभवे मुख्य' इति भास्करः। परमं निरतिशयं यत्पदं वस्तु तदित्यर्थः। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः॥ **इतीति** ॥ इतीत्थं अर्थादभिधेयादनपेताः। अर्थ्याः अन्वर्था इत्यर्थः। धर्मपथ्यर्थन्यायादनपेत इति सूत्रेण यत्प्रत्ययः। तथाभूताभिः स्तुतिभिः। 'स्तवः स्तोत्रं स्तुतिर्नुतिः' इत्यमरः। शिवां पार्वतीं। 'शिवा भवानी रुद्राणी' इत्यमरः। निश्चलमस्खलनं यथा तथा ध्यायतः ध्यानं कुर्वतः अस्य

अवतीर्णा चास्य कर्णसरणिमशरीरिणी वाणी।
'साधु वत्स जगन्नाथ साधु विष्णो जगन्मय।
पश्य त्वमात्मनात्मानं 'परमं ज्योतिरैश्वरम् ॥ १८ ॥' इति ॥
अथ यावत्समाधिं तं श्लथयामास माधवः।
तावदाविर्बभूवास्य पुरः पुरहरं महः ॥ १९ ॥

तत्र च पवित्रतरनदनदीनदीशादितीर्थस्वरूपतासम्भावि-

श्रीविष्णोरस्पन्देषु ईषन्मात्राचलनेष्वपि गात्रेष्ववयवेषु। 'गात्रं प्रतीके दन्त्य-प्रजङ्घाभागे वपुष्यपि' इति नानार्थमाला। दक्षिणो भुजः बाहुः। 'वामं शरीरे सव्यं स्यादपसव्यन्तु दक्षिणं' इत्यमरः। पस्पन्दे किञ्चित् पुस्फोरेत्यर्थः। स्पदि किञ्चिच्चलन इति धातोर्लिट्। शर्पूर्वाः खय इति पकारावशेषः। तदुक्तं देवी-भागवते। 'अब्रह्मण्यं ब्रुवाणोऽसौ सिद्धैरभ्यर्थितस्तदा। किमेतदिति सञ्चिन्त्य ब्रह्मा तत्रातिविस्मृतः॥ व्याक्षिप्तचेतसस्सर्वे बभूवुः स्तिमितेक्षणाः। त्रैलोक्यवि-पदं दृष्ट्वा ततस्सिद्धा महर्षयः॥ संमन्त्र्य विधिविष्णुभ्यां ध्यात्वा देवीं महेश्व-रीम्। सम्प्रेरितास्तथा देव्या लोकानां हितकाम्यया। शरणं प्रापुरव्यग्राश्शङ्करं करुणाकरम्। कालकूटोपशान्त्यर्थं सर्वलोकमहेश्वरं॥' इति॥ **अवतीर्णेति**॥ अस्य श्रीविष्णोः कर्णसरणिं कर्णपथं प्रति अशरीरिणी शरीर्यनुच्चारिता वाणी वाक् अवतीर्णा अवततार। तद्वागानुपूर्वीमेवाह ॥ **साध्विति** ॥ हे वत्स किशोर जगन्नाथ जगत्पते साधु तव ध्यानमिति भावः। जगन्मय जगत्स्वरूप हे पश्य विष्णो साधु। 'सुन्दरं रुचिरं चारु सुषमं साधु शोभनं' इत्यमरः। त्वं भवान् आत्मना स्वेन आत्मानं स्वमेव ऐश्वरं ईश्वरसम्बन्धि परममुत्कृष्टं ज्योतिस्तेजोरूपं पश्य जानीहि शि-वमहम्भावेन भजस्वेति भावः॥ **अथेति**॥ अथ तद्वाक्छ्रवणानन्तरं माधवः श्रीवि-ष्णुः समाधिः ध्यानं यावच्छ्लथयामास विगळयाम्बभूव तावदेव। अवध्यर्थकावत्र यावत्तावच्छब्दौ। 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारण' इति कोशात्। अस्य श्रीहरेः पुरः पुरहरं त्रिपुरसंहर्तृ महः तेजः। 'तेजःपुरीषयोर्वर्चो महस्तूत्सवतेजसोः' इत्यमरः। आविर्बभूव दृष्टिपथवर्ति बभूवेत्यर्थः। तथोक्तं श्रीभागवते। 'तदुग्रवेगं दिशि दिश्युपर्यधो विसर्पदुत्सर्पदसह्यमप्रति। भीताः प्रजा दुद्रुवुरङ्ग सेश्वरा अर-क्ष्यमाणाः शरणं सदाशिवम्॥ विलोक्य तं देववरं त्रिलोक्या भवाय देव्याभिमतं मुनीनां। आसीनमद्रावपवर्गहेतोस्तपो जुषाणं स्तुतिभिः प्रणेमुः॥' इति। अथ शिखादिनखपर्यन्तं परशिवं वर्णयितुमारभते ॥ **तत्रेति** ॥ तत्र च तत्काले प्र-देशे वेत्यर्थः। पूतानि पवित्राणि यानि नदानां शोणादीनां नदीनां गङ्गादीनां न-दीशानां रत्नाकरादीनां च तीर्थानि जलानि। 'पूतं पवित्रं मेध्यं च' 'निपानागम-योस्तीर्थमृषिजुष्टजले गुरौ' इति चामरः। तेषां स्वरूपः तस्य भावस्तत्ता। शि-

तत्क्लेदनैयत्यानुवृत्त्येव सामिविकसितललाटविलोचनधूमरेखा-संस्तवेनेव कवळितजाह्नवीकोपपरिपूरितगर्भतयेव च परिणतपाटलिम्नि जटावलये प्रतिष्ठिततया सान्ध्यरागसंवलितेनेव सकलशिवज्ञानाधिगमारम्भसंसूचनायेव द्वितीयाचन्द्रतामुपजग्मुषा, परमज्ञानरूपतयेव परिहृतकळङ्कानुषङ्गेण कपर्दबन्धनोरगदंष्ट्राङ्कुरेणेव कुटिलनिर्मलेन चन्द्रखण्डेन मण्डितं, जगन्नि-

---

तस्य जलस्वरूपत्वं स्कान्दपुराणे 'योऽपां स्वरूपेण नृणां करोति' इत्यादिनोक्तं । तया सम्भावितस्सम्प्राप्तः यः क्लेदः आर्द्रत्वमित्यर्थः । 'आर्द्रं सार्द्रं क्लिन्नं' इत्यादिकाशोक्तत्वात् । तस्य नैयत्यं सन्ततावस्थानं तदनुवृत्त्या तदनुसरणेनेव । 'अनुवृत्तिस्त्वनुसरणमनुवर्तनजीवन' इत्यजयः । साम्यर्धं विकसितं स्फुटितं लालाटं फालसम्बन्धि च तद्विलोचनञ्च । 'सामि त्वर्धे जुगुप्सने' 'ललाटमालिकं गोधः' 'लोचनं नयनं नेत्रं' इति सर्वत्रामरः । तस्य या धूमरेखा धूमराजिः । 'श्रेणीरेखास्तु राजयः' इत्यमरः । तस्यास्संस्तवस्सम्बन्धः । 'संस्तवः स्यात्परिचय' इत्यमरः । तेनेव । करणे तृतीयेयम् । कबळिता भक्षिता भरितेति तात्पर्यार्थः । या जाह्नवी गङ्गा तस्याः कोपः क्रोधः तेन परिपूरितः सर्वत्र भारतः गर्भः कुक्षिदेशो यस्यास्सा तस्या भावस्तत्ता तया । हेतौ तृतीयेयम् । कोपस्य रजोगुणकार्यत्वेन आरुण्यमिति भावः । परिणतं कालवशात्परिपाकं प्राप्तं पाटलिम श्वेतरक्तत्वं यस्य तत् । 'पक्कं परिणते गूनं' 'श्वेतरक्तस्तु पाटल' इति चामरः । तथाभूते जटानां सटानां वलये मण्डले । 'व्रतिनां तु जटा सटा' इत्यमरः । प्रतिष्ठिततया स्थापिततया अत एव सान्ध्यरागः सन्ध्याकालसम्बन्ध्यारुण्यं तेन संवळितेन मिळितेनेव स्थितेनेत्यर्थः । सकलस्वरूपश्चासौ शिवश्चेति कर्मधारयः । 'सर्वं खल्विदं ब्रह्म' इति श्रुतेः । तद्विषयकं यत् ज्ञानं वासुदेवस्सर्वमितिवच्छिवस्सर्वमित्याकारकं तस्याधिगमो लाभः तदर्थो य आरम्भः शैवशास्त्रोपक्रमस्तस्य संसूचनाय ज्ञापनायेवेत्यर्थः । यद्वा ज्ञायते एभिरिति करणे ल्युट्प्रत्ययेन सकलानि यानि शिवज्ञानानि शैवप्रतिपादकशास्त्राणीति वार्थः । शिष्टं प्राग्वत् । अथवा ज्ञानमित्यत्र भावे ल्युट्प्रत्ययवशात् सकलानि यानि शिवस्य ज्ञानानि उपासनान्यपीत्यर्थः । शिष्टं प्राग्वत् । द्वितीयाचन्द्रतां द्वितीयातिथिचन्द्रत्वं उपजग्मुषा प्राप्तवता परमुत्कृष्टं यत् ज्ञानं तद्रूपतया तत्स्वरूपत्वेनेव भगवन्मनस्सकाशादुत्पन्नत्वादिति भावः । परिहृतः परित्यक्तः कळङ्कस्य अनुषङ्गस्सम्बन्धो यस्य स तथाभूतेन कपर्दस्य जटाजूटस्य बन्धनार्थो य उरगः सर्पः । 'कपर्दोऽस्य जटाजूटः' 'उरगः पन्नगो भोगी' इति चामरः । तस्य या दंष्ट्रा तालुसमीपवर्तिस्थूलदन्तस्तस्यांकुरेणेव स्थितेन कुटिलं वक्रं च तन्निर्मलं मलरहितं चेति क-

ष्कामताहेतुतयेव निष्कामजनोपासनीयेन पक्ष्मविवरसमुच्चलदर्चिस्स्फुलिङ्गपरिष्वङ्गमात्रादेव निश्शेषीभवति जगति निरीक्षितव्यासम्भवादिव नित्यनिमीलितेन भसितत्रिपुण्ड्रहारमालिकापद्मरागतरळेनेव ललाटलोचनेन परिहरन्तमान्तरं तमो भक्तिमतां, कुण्डलितकुण्डलिराजफणामणिमयूखराजिनीराजितेन निसर्गसुन्दरेण गण्डमण्डलेन, श्रुत्युल्लङ्घनभयादिव कर्णा-

---

र्मधारयः। तथाभूतेन चन्द्रखण्डेन चन्द्रशकलेन मण्डितमलङ्कृतम्। मडि भूषा... मित्यतः कर्मणि क्तप्रत्ययः। अत्र यद्यपि शिवशिरःस्थितचन्द्रखण्डस्य द्वितीयाचन्द्रतायाः स्वाभाविकत्वात्तस्य सकलशिवज्ञानाधिगमारम्भसंसूचनं फलं तथाप्यस्यासत्फलकत्वोक्तेः फलोत्प्रेक्षालङ्कारः। अफलस्य फलत्वकल्पनं फलोत्प्रेक्षेति लक्षणात्। जगतां लोकानां निष्कामता मदनराहित्यं सैव निष्कामता फलेच्छाराहित्यं श्लिष्टरूपकं। तत्र हेतुतया कारणत्वेनेव। करणे तृतीयेयम्। निष्कान्ताः कामाः फलाभिलाषाः येभ्यस्ते तथाभूता ये जनाः तैरुपासनीयः उपास्यः तथाभूतेन। पक्ष्मणां निमेषाणां विवराणि। 'सुषिरं विवरं बिलं' इत्यमरः। तेभ्यस्समुच्चलन्तः समुत्पतन्तः अर्चिषां अन्तःस्थाग्निशिखानां ये स्फुलिङ्गाः। 'त्रिषु स्फुलिङ्गोऽग्निकण' इत्यमरः। तेषां परिष्वङ्गमात्रात् सम्बन्धमात्रादेव जगति लोके निश्शेषीभवति निरवशेषभूते सति निरीक्षितव्यः दर्शनीयः तस्यासम्भवादिव हेतोरित्यर्थः। निर्मलेन मलरहितेन कलङ्करहितेनेति यावत्। चन्द्रखण्डेन शशिशकलेन कर्पूरेणेति च गम्यते। नेत्रातिशैत्यसम्पादकत्वेनोपयोगात्। 'घनसारश्चन्द्रसंज्ञ' इत्यमरः। नित्यमनवरतं निमीलितेन सङ्कुटितेनेत्यर्थः। भसितानि भस्मरूपाणि यानि त्रीणि पुण्ड्राणि तिलकानि। 'भूतिर्भस्मनि सम्पदि' इत्यमरः। 'पुण्ड्रो देशेक्षुतिलकभेदे क्रिम्यतिमुक्तयोः' इति नानार्थमाला च। तान्येव हाराः मुक्तावळ्यादयः। 'हारो मुक्तावळी देवच्छन्दोऽसौ' इत्यमरः। तेषां या मालिकाः नक्षत्रमालादयः। 'सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः' इत्यमरः। तासां संबन्धी यः पद्मरागः तत्संज्ञिकशोणरत्नं। 'शोणरत्नं लोहितकं पद्मरागोऽथ मौक्तिकं' इत्यमरः। तरळो हारमध्यभाङ्मणिः। 'तरळो हारमध्यग' इत्यमरः। तेनेव स्थितेन ललाटलोचनेन फालनयनेन भक्तिराराध्यत्वेन ज्ञानमेषामस्तीति भक्तिमन्तः तेषामान्तरं हृदयस्थं तमस्तमोगुणमेवान्धकारम्। 'तमो राहौ गुणध्वान्ते शूक' इति नानार्थमाला। परिहरन्तं निवारयन्तं कुण्डलितौ कर्णकुण्डलीकृतौ यौ कुण्डलिराजौ सर्पौ तयोः फणानां मणयः माणिक्यानि तेषां ये मयूखाः त्विषः 'मयूखस्त्विट्करज्वालासु' इत्यमरः। तेषां या राजिः पङ्क्तिः तया नीराजितेन आरार्तिकीकृतेनेत्यर्थः। निसर्गात् स्वभावत एव सुन्द

न्तपर्यवसितेन निरन्तरकरुणासारवाहिना लोचनयुगळेन, त्रिपुरविजययशोविशदेनेव परापराशेषविद्यात्मना प्रवहतो वचनामृतस्य निष्यन्देनेव मन्दस्मितेन च मदयन्तमिव मनांसि महायोगिनां, कदासौ पूर्येत, कदा चेममारोहेयमिति कुतूहलादुद्ग्रीवमालोकयन्तमिव चूडाचन्द्रमसं उदञ्चिताग्रपादतया किञ्चिदन्यतो जिगमिषन्तमिव प्रकृतिचापलेन वेदमयं मृगम-

रेण दर्शनीयेन। 'सुन्दरं रुचिरं चारु' इत्यमरः। गण्डौ कपोलौ। 'अधस्ताच्चिबुकं गण्डकपोलौ तत्परा हनुः' इत्यमरः। तयोर्मण्डलं प्रदेशः तेन। 'मण्डलं त्रिषु कुष्ठे स्यादुपसूर्यकदेशयोः' इति नानार्थमाला। श्रुती श्रोत्रे ते एव श्रुतयो वेदाः श्लिष्टरूपकम्। 'वेदे श्रवासे च श्रुतिः' इत्युभयत्राप्यमरः। तयोरुल्लङ्घनमतिक्रमणं तस्माद्भयं भीतिः तस्मादिव हेतोः कर्णान्तयोः श्रोत्रनिकटयोः पर्यवस्थितेन कृतावासेन निरन्तरमनवरतं करुणाया आसारान् धारासम्पातान्वोढुं शीलं यस्य तत्तथाभूतेन लोचनयोर्युगळं युग्मं तेन। 'युग्मं तु युगळं युगं' इत्यमरः। त्रिपुरविजयस्त्रिपुरसंहारप्रयुक्तो विजयस्तस्माद्यानि यशांसि तैर्विशदं धवलं तथाभूतेनेव परापरसंज्ञिकाः याः अशेषाः निखिलाः विद्याः शास्त्राणि तासां आत्मा स्वरूपं तेन। अत्रायं विशेषः। पराविद्या ब्रह्मविद्या अपराविद्या शीक्षाद्यङ्गषट्कोपेतर्ग्यजुस्सामाथर्वणलक्षणकर्मकाण्डात्मकविद्या इति। तथा प्रश्नोपनिषदि। 'द्वे विद्ये वेदितव्ये इति ह स्म ब्रह्मविदो वदन्ति' इत्युपक्रम्य 'परा चैवापरा च' इति प्रथमं विभागं कृत्वा पश्चादपरविद्यास्वरूपं 'तत्रापरा ऋग्वेदो यजुर्वेदस्सामवेदोऽथर्वणवेदश्शीक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषं' इत्यनेनोक्त्वा परविद्यास्वरूपमपि 'अथ परा यया तदक्षरमधिगम्यते' इत्यनेनोक्तमिति बोध्यम्। प्रवहतः प्रसरतः वचनमेव अमृतं पीयूषं तस्य निष्यन्दः स्रवणं तेनेव स्थितेन मन्दस्मितेन महायोगिनां सनकादीनां मनांसि मदयन्तं परितोषयन्तमिव स्थितम्। किञ्च असौ शिरस्स्थितश्चन्द्रः कदा पूर्येत पूर्णत्वभरितो भवेत्। इममिन्दुमारोहेयमारूढो भविष्यामि इतीत्थं कुतूहलादौत्सुक्यादुत्क्षिप्ता ग्रीवा कण्ठो यस्मिन् कर्मणि तत्तथा। क्रियाविशेषणमेतत्। चूडाचन्द्रमसं शिरःस्थितमिन्दुमालोकयन्तं पश्यन्तमिव स्थितम्। किञ्चिदीषदुदञ्चितौ उत्क्षिप्तौ अग्रपादौ अग्रचरणौ येन स तस्य भावस्तत्ता तया। प्रकृतिः स्वभावः। 'प्रकृतिः पञ्चभूतेषु स्वभावे सचिवादिषु' इति भास्करः। तया यच्चापलं चाञ्चल्यम्। 'चापलं त्वनवस्थानं' इति कोशलक्षणात्। तेन। करणे तृतीयेयम्। अन्यतोऽन्यत्र अन्यदेशं प्रतीति वार्थः। जिगमिषन्तं गन्तुमिच्छन्तमिव स्थितं वेदमयं वेदस्वरूपं मृगं हरिणम्। 'मृगे कुरङ्गवातायुहरिणाजिनयोनयः' इत्यमरः। अपरपादयोः पश्चाच्चर-

परपादनियन्त्रणेन नियच्छन्तमात्मन्येव निभृतमेकेन करेण, अतिकठिनाज्ञानपाषाणसमुट्टङ्कनायेव गृहीतटङ्कमितरकरेण, निरुपप्लवापवर्गदानसत्रदीक्षिते जयत्यभयङ्करे करे, निस्सारभोगवदान्येन किं मयेति ह्रियेवावाङ्मुखेन वराङ्कितेन करारविन्देन परिपूरयन्तमभिमतान्यभिसन्धिमतां, नीरूपदिगम्बराच्छादननिर्वेदादिव बहुरूपेण तारक्षवेण चर्मणाभिसंवीतं, चिन्मये अतिनिर्मले वपुषि जपाकुसुमपार्श्वगस्फटिकोपलन्यायेन मञ्जीरफणिफणामणिप्रभापुञ्जपिङ्ग चरणारविन्देनातिपचेलिम-

णयोर्नियन्त्रणेन नियमनेनेत्यर्थः। आत्मन्येव निभृतं निश्चलं यथा तथा नियच्छन्तं निगृह्णन्तं अतिकठिनमतिनिष्ठुरम्। 'कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं' इत्यमरः। यदज्ञानमेव पाषाणं तस्य समुट्टङ्कनं विभेदनं तस्मा इव इतरस्तदन्यः यः करो हस्तस्तेन गृहीतः स्वीकृतः टङ्कः पाषाणभेदकायोविकारो येन स तथाभूतम्। 'वृक्षादनो वृक्षभेदी टङ्कः पाषाणदारणः' इत्यमरः। निष्क्रान्तः उपप्लवः उत्पातो विप्लवो वा यस्मात्सः। 'उपप्लवस्सैंहिकेये विप्लवोत्पातयोरपि' इति हेमचन्द्रः। तथाभूतश्चासौ योऽपवर्गो मोक्षः। 'मोक्षोऽपवर्गोऽथाज्ञानं' इत्यमरः। तस्य दानं वितरणं तदेव सत्रं एकवत्सरादिबहुवत्सरादिसाध्ययागविशेषः। तस्मिन् दीक्षिते बद्धदीक्षे अत एवाभयङ्करे अभयप्रदातरि करे हस्ते जयति सर्वोत्कर्षेण वर्तमाने सतीत्यर्थः। निस्सारस्तुच्छो यो भोगः वैषयिकसुखं तस्य वदान्येन दात्रा। 'भोगस्सुखे स्त्र्यादिभृतौ' 'वदान्यो दातृमहतोः' इति चामरः। मया किंप्रयोजनमिति ह्रिया लज्जयेव अवाङ्मुखेनाधोमुखेन वराङ्कितेन वरदमुद्राङ्कितेन करारविन्देन अभिसन्धिमतां फलाभिलाषवतामभिमतानि प्रार्थितार्थान् अभीरयन्तं वितरन्तमित्यर्थः। योगेन संरक्षणधुरीणमिति भावः। अथवा पूरयन्तं पालयन्तमित्यर्थः। क्षेमेण संरक्षकमिति भावः। पॄ पालनपूरणयोरिति धातोर्णिजन्ताल्लटश्शत्रादेशः। नीरूपं रूपरहितं यद्दिगेवाम्बरं वस्त्रम्। 'अम्बरं व्योम्नि वाससि' इत्यमरः। तेनाच्छादनं परितो धारणं तस्मिन् निर्वेदो जुगुप्सा तस्मादिव बहून्यनेकानि रूपाणि नीलपीतादीनि यस्य तत्तथाभूतेन। तरक्षोः व्याघ्रस्य इदं तारक्षवं वैयाघ्रमित्यर्थः। तथाभूतेन चर्मणाजिनेन। 'तरक्षुस्तु मृगादनः' 'अजिनं चर्म कृत्तिः स्त्री' इति चामरः। चिन्मये ज्ञानविकारे अत एवातिनिर्मलेऽतिस्वच्छे वपुषि शरीरे अभिसंवीतमाच्छन्नमित्यर्थः। जपाकुसुमं बन्धूकपुष्पम्। 'बन्धुजीवकबन्धूकौ जपा स्यादथ वैतस' इत्यजयः। तत्पार्श्वगतः यः स्फटिकोपलः स्फटिकमणिः तन्न्यायेन तद्रीत्येति तात्पर्यार्थः। मञ्जीराः नूपुरस्थानीयाः ये फणिनस्सर्पाः। 'मञ्जीरो नूपुरोऽस्त्रियां' 'चक्षुःश्रवाः काकोदरः फणी' इति

भाग्ययोगानिर्मलैरन्तःकरणैरिव चरणलग्नैस्समाधिषु योगिनां पञ्चभिरक्षरैश्शिवसूत्रस्य पर्यवसितैरिव सव्यापसव्ययोः पादयोरतिसुन्दरैर्नखैरवतंसयन्तमादिभारतीचिकुरबन्धं, अध्यासीनमधःकृतान्तःकरणवासनाष्टकं आस्तीर्णात्मतन्त्रमहातल्पकल्पितं अखिलतत्त्वपथोत्तीर्णमानन्दमयमहार्हमासनं, अन्वास्यमानमखिललोकमातृकया संविदानन्दघनीभावसम्पन्नविग्रहया

---

चामरः। तेषां ये फणामणिराजाः मणिश्रेष्ठाः तेषां याः प्रभाः कान्तयः तासां पुञ्जः राशिः तेन पिञ्जरे अरुणे चरणारविन्दे यस्य स तथाभूतम्। अतिपचेलिमं अत्यन्तकालवशात्परिपक्वं यद्भाग्यमदृष्टं तेन योगेन यमनियमाद्यनुष्ठानेन च निर्मलानि रागादिमलरहितानि तथाभूतैः। अत एव समाधिषु ध्यानेषु चरणयोः पादयोः लग्नानि सङ्क्रान्तानि तथाभूतैः। महायोगिनां अन्तःकरणैः मनोभिरिव स्थितैः। शिवमन्त्रस्य रुद्राध्यायप्रसिद्धमन्त्रराजस्येत्यर्थः। पर्यवसितैः परिणतैः पञ्चभिः पञ्चसङ्ख्याकैः अक्षरैः वर्णैरिव स्थितैः। अतिसुन्दरैरत्यन्तमनोहरैः सव्यापसव्ययोर्वामदक्षिणयोः। 'वामं शरीरे सव्यं स्यादपसव्यं तु दक्षिणं' इत्यमरः। पादयोश्चरणयोः नखैः। 'नखोऽस्त्री नखरोऽस्त्रियां' इत्यमरः। आदिमाः भारत्यः आदिवचनानि आदिगिरः वेदा इति तात्पर्यार्थः। 'अथ भारती। वचने च सरस्वत्यां पक्षिवृत्तिप्रभेदयोः' इति हेमचन्द्रः। स्त्रीप्रत्ययबलात् स्त्रीव्यक्तयः व्यज्यन्ते तासां चिकुराः चिकुरप्रायाः उपनिषदः। 'चिकुरः कुन्तलो वालः कचः केशश्शिरोरुह' इत्यमरः। त एव बन्धः अधिष्ठानम्। 'बन्धकं व्यसनं चेतःपीडाधिष्ठानमाधय' इत्यमरः। यद्वा चिकुरबन्धः चिकुराधिष्ठानमित्यर्थः। एवञ्चादिमभारतीचिकुरबन्धमित्यस्य वेदशिर इति फलितार्थः। तमवतंसयन्तं विभूषयन्तम्। अवतंसयन्तमित्यत्र तत्करोतीति णिजन्ताल्लटश्शत्रादेशः। वेदप्रतिपाद्यमिति भावः। अधःकृतं लोकवासनादीनामष्टकं येन तत्तथाभूतम्। वासनाष्टकमुक्तं तत्त्वविवेके। 'लोकपुत्रधनग्रामदारशास्त्रगृहेषु च। देहे च वासनां त्यक्त्वा सुखी भवति नान्यथा॥' इति। आस्तीर्णं परिस्तीर्णं आत्मनामन्तरात्मजीवात्मपरमात्मनां त्रयमेव महातल्पं उत्कृष्टशय्या तेन कल्पितं विरचितं अखिलानां ये तत्त्वानां पृथिवीतत्त्वजलतत्त्वतेजस्तत्त्ववायुतत्त्वाकाशतत्त्वानां पन्थानो मार्गाः तानुत्तीर्णं उल्लङ्घ्य तिष्ठन्तमित्यर्थः। आत्मत्रैविध्यं पृथिव्यादितत्त्वपञ्चकं संन्यासिसन्ध्यावन्दनप्रकरणे स्पष्टमुक्तम्। विस्तरभयान्नेह तद्विविच्यते। आनन्दमयमानन्दस्वरूपमत एव महार्हमत्युत्तममासनं भद्रासनमध्यासीनं आसने तिष्ठन्तमित्यर्थः। अधिशीङ्स्थासां कर्मेत्याधारस्य कर्मत्वम्। अखिललोकानां

**कादम्बिन्येव करुणारसपूर्णया आत्मविद्ययेव सादरमालिङ्गन्त्या समानगुणरूपसौन्दर्यशीलया भगवत्या सर्वमङ्गळया, सुखविश्रान्तमिव शरन्मेघमण्डलं, सुधासारघटितमिव कर्पूरपरागसञ्चयं; अतिकोमलमिव स्फटिकाचलं, आद्दतघनीभावमिव चन्द्रिकासारं, आवर्त्यपिण्डितमिव परमामृतं, आसेचनकमासेचनकानां, आश्चर्यमाश्चर्याणां, मङ्गळं मङ्गळानां, आदिमादिमतां, अवधिमवसीदतां, आकरं विद्यानां, आलयं दया-**

---

मातृकया जनन्या संवित् ज्ञानमानन्दश्चेत्येतयोर्यो घनीभावः निरन्तरीभवनमित्यर्थः। 'घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरन्तर' इत्यमरः। यद्वा घनीभावः मूर्तीभवनमित्यर्थः। तेन सम्पन्नो विग्रहः कायो यस्यास्सा तथाभूतया करुणा कृपा सैव रसः द्रवद्रव्यं। 'गुणे रागे द्रवे रस' इत्यमरः। तेन पूर्णया भरितया कादम्बिन्या मेघमालयेव स्थितया। 'कादम्बिनी मेघमाला' इत्यमरः। सादरं सप्रेम यथा तथा आलिङ्गन्त्या आश्लिष्यन्त्या समानानि रूपगुणसौन्दर्यशीलानि यस्यास्सा। 'रूपं स्वभावे शुक्लादौ' इति भास्करः। 'रूपं स्वभावे सद्वृत्त' इत्यमरश्च। तथाभूतया भगवत्या महामहिमशालिन्या सर्वमङ्गळया पार्वत्या। 'रुद्राणी शर्वाणी सर्वमङ्गळा' इत्यमरः। अन्वास्यमानं उपास्यमानम्। सुखमनायासं यथा तथा विश्रान्तं विश्रमप्राप्तमित्यर्थः। शरदि शरत्काले यो मेघमण्डलः तमिव स्थितम्। किञ्च सुधाया अमृतस्य आसारो धारासम्पातः तेन सङ्घटितः गोळकीकृतः तथाभूतं कर्पूरस्य परागा धूळयः तेषां सञ्चयस्समूहः तमिव स्थितं अतिकोमलोऽत्यन्तमृदुलः। 'कोमलं मृदुलं मृदु' इत्यमरः। तथाभूतं स्फटिकाचलमिव स्थितम्। आद्दतः अङ्गीकृतः घनीभावः सान्द्रीभवनं येन स तथाभूतम्। चन्द्रिकायास्सारः स्थिरांशः। 'सारो बले स्थिरांशे च' इत्यमरः। तमिव स्थितम्। आवृत्य आवृत्तिं कृत्वेत्यर्थः। पिण्डितं चिक्कणीकृतं परमामृतमिव स्थितं यान्मुहुर्मुहुर्दृष्ट्वापि जना न तृप्यन्ति ते अत्रासेचनकाः तेषामप्यासेचनकं अतिसुन्दरमित्यर्थः। 'तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्' इत्यमरः। आश्चर्याणां विस्मयकराणामप्याश्चर्यं विस्मयकरं विलक्षणभूषणादिमत्त्वादिति भावः। 'विस्मयोऽद्भुतमाश्चर्यं' इत्यमरः। मङ्गळानां कल्याणानामपि मङ्गळं सर्वस्पृहणीयत्वादिति भावः। 'कल्याणं मङ्गळं शुभं' इत्यमरः। आदिमतां निखिलकार्याणां आदिकारणम्। 'यतो वा इमानि भूतानि जायन्त' इत्यादिश्रुतेः। अवसीदतां विनश्यतां अवधिं परिसमाप्तिस्थानमित्यर्थः। 'यत्प्रयन्त्यभिसंविन्ति' इति श्रुतेः। विद्यादीनां ऋग्वेदादीनामाकरमुत्पत्तिस्थानम्। 'खनिः स्त्रियामाकरस्स्यात्' इत्यमरः। 'तस्मात्तपानात्त्रयो वेदा अजायन्त छन्दांसि ज-

सौलभ्ययोः, अचिन्तनीयप्रभावमपि चिन्तनीयमखिललोकस्य, अद्वैतब्रह्मस्वरूपमप्याविष्कृतपञ्चब्रह्मरूपं, अतिदूरमर्वाचां प्रमाणानां, अविप्रकर्षगोचरमादिगिरां साक्षाच्चकार दाक्षायणीरमणम् ।

शाणोल्लीढशरन्मृगाङ्कशकलस्तोमाभिरामं महः
तत्पश्यन्निभृतं विनिद्रकमलद्राघीयसा चक्षुषा ।

---

ज्ञिरे तस्मात्' इति श्रुतेः । दयासौलभ्ययोः कृपाभक्तपराधीनत्वयोरित्यर्थः । आलयं निकेतनं अखिललोकस्य निखिलजनस्य । 'लोकस्तु भुवने जन' इत्यमरः । अचिन्तनीयः अज्ञेयः प्रभावः स्वरूपं यस्य स तथाभूतमपि चिन्तनीयं ज्ञेयमित्युक्ते विरोधः । चिती संज्ञान इति धातोस्तव्यत्तव्यानीयर इति अनीयर्प्रत्ययः । विरोधपरिहारस्तु अचिन्तनीयः प्रभावः प्रभवनमुत्पत्तिर्यस्य सः । 'भावस्सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु' इत्यमरः । अद्वैतमद्वितीयं ब्रह्मणः स्वरूपं स्वभावः यस्य तत् । अथवा अद्वैतं यद्ब्रह्म तस्य स्वरूपमपीत्यर्थः । आविष्कृतानि प्रकटीकृतानि पञ्चसङ्ख्याकानि ब्रह्मणः स्वरूपाणि यस्मिन् तत्तथाभूतम् । अथवा आविष्कृतं प्रकटितं पञ्चानां ब्रह्मणां स्वरूपं यस्य स तथाभूत इत्यर्थः । इत्युक्तेऽपि विरोधो बोध्यः । तत्परिहारस्तु द्वयोर्भावो द्विता सैव द्वैतम् । स्वार्थेऽण्प्रत्ययः । अविद्यमानं द्वैतं यस्य तत्तथाभूतं च तद्ब्रह्म तत्स्वरूपमित्यर्थः । 'एकमेवाद्वितीयं' इति श्रुतेः । आविष्कृतानि प्रकटीकृतानि पञ्चब्रह्मणां सद्योजातवामदेवाघोरतत्पुरुषेशानसंज्ञकानां पञ्चसङ्ख्याकानां ब्रह्मणां स्वरूपाणि यस्य स तथाभूतमित्यर्थो बोध्यो भवतीति । अर्वाचां जघन्यानां प्रमाणानां शास्त्राणाम् । 'प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु' इत्यमरः । अतिदूरमगोचरमित्यर्थः । 'नावेदविन्मनुते तं बृहन्तं' इति श्रुतेः । आदिगिरां वेदानां विप्रकृष्टं दूरं न भवतीत्यविप्रकृष्टं सन्निहितदेशः तस्मिन् गोचरं विषयम् । 'स्याद्दूरं विप्रकृष्टकं' इत्यमरः । अदूरविप्रकर्षगोचरमिति पाठे अविद्यमाने दूरविप्रकर्षे दैर्घ्यव्यवधाने यस्मिन् सः समीपदेशः तत्र गोचरमित्यर्थः । 'तं त्वौपनिषदं पुरुषं पुराणं पृच्छामि' इति श्रुतेः । वेदैकवेद्यमिति भावः । दाक्षायणीरमणं पार्वतीपतिम् । साक्षाच्चकार प्रत्यक्षीचकारेत्यर्थः ॥ **शाणेति** ॥ शाणः घर्षणचक्रम् । 'शाणस्तु निकषोपलः' इत्यमरः । तेन उल्लीढानि उल्लिखितानि यानि शरन्मृगाङ्कशकलानि शरत्कालचन्द्रखण्डानि तेषां स्तोमस्समूहः स इवाभिरामं मनोहरं तच्छिवरूपं महः तेजः । 'महस्तूत्सवतेजसोः' इत्यमरः । विनिद्रं विकसितं यत्कमलं तद्वद्द्राघीयसात्यन्तविपुलायतेन चक्षुषा नेत्रेण निभृतं निश्चलं यथा तथा पश्यन्माधवः श्रीविष्णुः पुरा पूर्वमीश्वरभजनकाले साहस्राणि सहस्रसङ्ख्याकानि

साहस्राम्बुजपूजनव्रतसमाधित्सुः पुरा साहसं
चक्रे यद्गिरिशे स्वयं तदुचितं मेनेऽधुना माधवः ॥ २० ॥

अपि च ।

वैराजशाकररथन्तरवामदेव्य-
कालेयराजनगवांव्रतरौहिणाद्यैः ।
तं सामभिर्बहुभिः ऋग्यजुषेण चोच्चैः
शौरिस्स्तुवन् पुरहरं शतशो व्यनंसीत् ॥ २१ ॥

भावैरष्टभिरान्तरैः परिचरन् पुष्पैरहिंसादिभिः
कोटीरे परभक्तिभारनमिते कुर्वन्प्रणामाञ्जलिम् ।

यानि अम्बुजानि तैर्यत्पूजनं पूजा तस्य यद्व्रतं नियमः तत्समाधित्सुः समापयितुमिच्छुस्सन्नित्यर्थः । गिरिशे कैलासनाथविषये यत्साहसं सङ्ख्यापूरणार्थं स्वनेत्रकमलमुत्पाट्य भगवदर्पणरूपं यद्दुष्करं कर्मेत्यर्थः । चक्रे कृतवान् तत्साहसमधुनोचितं सार्थकमेव मेने सम्यग्भगवत्स्वरूपदर्शनजनितहर्षलाभादिति भावः ॥ अपि चेति ॥ वैराजं वैराजसंज्ञिकसाम तच्च शाकरं शक्करसंज्ञिकसाम तच्च रथन्तरं रथन्तरसाम तच्च वामदेव्यं वामदेव्यसाम तच्च कालेयं कालिदृष्टसाम राजनं राजनसाम गवांव्रतमिति साम रौहिणसाम तच्च तान्येव आद्यानि मुख्यानि येषां तानि तथाभूतैः बहुभिः सामभिः बृहत्सामादिभिः ऋक्च यजुश्च ऋग्यजुषं तेन । अचतुरविचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषेत्यादिना निपातनात्साधुः । उच्चैरधिकं स्तुवन् स्तुतिं कुर्वन् शौरिः श्रीहरिः पुरहरं तं परशिवं प्रति शतशः अनेकप्रकारैः व्यनंसीत् ननामेत्यर्थः ॥ भावैरिति ॥ अन्तराः बाह्याः त एव आन्तराः स्वार्थेऽण्प्रत्ययः । 'अन्तरः परिधानीयस्वीयबाह्येषु वाच्यवत्' इति नानार्थमाला । तैः बाह्यैरित्यर्थः । पुष्पैरष्टभिः अष्टसङ्ख्याकैः भावैः स्तम्भप्रळयरोमाञ्चस्वेदवैवर्ण्यवेपथुवैस्वर्याश्रुलक्षणैः सात्त्विकभावैरित्यर्थः । सहित इति शेषः । अहिंसा आदिर्येषां तैः पुष्पैश्च कुसुमैः आदिपदेन सत्यास्तेयब्रह्मचर्यापरिग्रहग्रन्थातितिक्षोपरतिसमाधानानि ग्राह्याणि । 'अहिंसा प्रथमं पुष्पमिन्द्रियाणाञ्च निग्रहः । क्षान्तिः पुष्पं दयापुष्पं ज्ञानपुष्पमतः परं ॥ तपःपुष्पं सत्यपुष्पं भावपुष्पमथाष्टमं' इत्यभियुक्तोक्तेः । परिचरन् परिचरणं कुर्वन्नित्यर्थः । अत्युत्कटमहोदर्शनात्सञ्जातसात्त्विकभावस्सन् हार्दैरहिंसादिभिः शिवं पूजयामासेति भावः । यद्वा अन्तरः अन्तरात्मा तत्र भवाः आन्तराः अन्तरात्मस्था इत्यर्थः । तत्र भव इत्यण्प्रत्ययः । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्म-

वाग्भिर्गद्गदनिर्गताभिरखिलत्र्यन्तसैद्धान्तिक-
स्रोतस्सारमयीभिरस्तुत स तज्ज्योतिः परं ज्योतिषाम् ॥
'सान्निध्यमात्रतो यस्य स्पन्दो बिन्दोरिदं जगत् ।
अद्वन्द्वमपरिस्पन्दि तद्वन्द्वं नौमि शाम्भवम् ॥ २३ ॥

नि च' इत्यमरः । तथाभूतैः अष्टाभिः अष्टसङ्ख्याकैः अहिंसादिभिः अहिंसाप्रभृतिभिः भावैः पदार्थैरित्यन्वयः । 'भावः पदार्थे सत्तायां' इति भास्करः । तैरेव पुष्पैरिति व्यस्तरूपकमेतत् । परिचरन् पूजयन्नित्यर्थः । अथवा अष्टभिः अष्टसङ्ख्याकैः आन्तरैर्हार्दैः भावैः भावनाविशेषैः पदार्थैरिति वार्थः । ते च भावाः स्कान्दपुराणे आभ्यन्तरपूजाप्रकरणे दर्शिताः । तथा हि । 'स्नानं समत्वसलिलेन हि पूर्णभावो वस्त्रं त्रिशक्तिगुणसंयुतयज्ञसूत्रम् । विद्या सुगन्धमिह भूतदयाक्षतांश्च ग्रन्थादिपुष्पचयमर्पय नित्यमङ्ग ॥ प्रज्ञामनोऽहङ्कृतिचित्तधूपं श्रोत्रादिपञ्चेन्द्रियदीपमङ्ग । सद्वासनातैलयुतं च देहे जीवोपहारं सुखदुःखबाह्यम् ॥ गुणत्रयाख्यताम्बूलं प्राणार्पणनमस्कृतिम् । शान्तिपुष्पाञ्जलिं देहे चैकभावेन संयुतम् । एवमाभ्यन्तरद्रव्यसम्भूतं शिवपूजनं' इत्यादिनाभिहितम् । अहिंसादिभिरेव पुष्पैः व्यस्तरूपकमेतत् । अहिंसादिभिरित्यादिना ग्रन्थादिपरिग्रहः परिचरन् पूजां कुर्वन्नित्यर्थः । परा निरतिशया या भक्तिः अनुरागस्तस्यैव भारो धूरित्यर्थः । तेन नमिते प्रह्वीकृते कोटीरे शिरसि । 'शीर्षे किरीटे कोटीरं' इति हलायुधः । प्रणामः प्रणतिमुद्राङ्कितः योऽञ्जलिः सङ्कुचितहस्तयुगमित्यर्थः । 'पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमान्' इत्यमरः । गद्गदं प्रस्खलितप्रत्यक्षरार्थं यथा तथा सुताभिर्विनिर्गताभिः अखिलास्समस्ता ये त्र्यन्ताः तेषां सिद्धान्ता एव सैद्धान्तिकाः । स्वार्थे ठक्प्रत्ययः । निर्णीतार्था इत्यर्थः । 'समौ सिद्धान्तराद्धान्तौ' इत्यमरः । त एव स्रोतांसि प्रवाहास्तेषां सारमयीभिर्मुख्याभिरित्यर्थः । वाग्भिः वचनैः ज्योतिषां सूर्यादीनां ज्योतिः प्रकाशकम् । 'तस्य भासा सर्वमिदं विभाति' इति श्रुतेः । तत् प्रादुर्भूतं मह इत्यर्थः । अस्तुत स्तुतिं चकारेत्यर्थः । ष्टुञ् स्तुताविति धातोः कर्तरि लङ् । साङ्ख्यमतानुरोधेन स्तौति ॥ सान्निध्येति ॥ यस्य परशिवस्य सान्निध्यमात्रतः सन्निधिमात्रादेव बिन्दोः बिन्दुसंज्ञिकायाः प्रकृतेरित्यर्थः । स्पन्दः चलनमेव इदं परिदृश्यमानं नामरूपात्मकं जगत्सर्वं जगद्भगवत्प्रकृत्यौपाधिकस्पन्दप्रयोज्यमिति भावः । तथा च साङ्ख्यसूत्रं । 'सन्निधानादधिष्ठातृत्वं मणिवत्' अस्यायमर्थः यथायस्कान्तमणेस्सन्निधिमात्रेणायश्चालकत्वं तथादिपुंसस्सन्निधिमात्रेण संयोगमात्रेण महत्तत्त्वादिरूपेण प्रकृतिपरिणमनेऽधिष्ठातृत्वम् । तथैव पौराणिकवचनम् । 'अयमात्मनि कर्तृत्वमकर्तृत्वञ्च संस्थितम् । निरिच्छत्वादकर्तासौ कर्ता सन्निधिमात्रतः ॥ निरिच्छे संस्थिते रत्ने

ओमित्युमेति युवयोरभिधानमेकं
सृष्ट्यादिसृष्ट्यवधितागुणमात्रभिन्नम्।
एकं च तावदभिधेयमपीह रूपं
वेणी जटेति कचसंहतिभेदभिन्नम्॥ २४॥

यथा लोहं प्रवर्तते। सत्तामात्रेण देवेन तथैवायं जगज्जनः॥' इति। अद्वन्द्वं शीतोष्णसुखदुःखक्षुत्पिपासाजरामरणादिद्वन्द्वरहितमित्यर्थः। अपरिस्पन्दि परस्परसंयोगरहितमित्यर्थः। शाम्भवं शम्भुसम्बन्धि तत्पूर्वोक्तं द्वन्द्वं बिन्दुपुरुषयुग्मं नौमि नमस्करोमीत्यर्थः॥ **ओमिति॥** सा च त्वं च युवां तयोः युवयोः प्रकृतिपुरुषसंज्ञकयोर्बिन्दोर्भवतश्चेत्युभयोरित्यर्थः। अभिधानमभिलापकनामेत्यर्थः। एकं एकजातीयवर्णकमित्यर्थः। 'आख्याह्वे अभिधानं च नामधेयं च नाम च' इत्यमरः। शिवस्य परब्रह्मणः 'ओमिति प्रणवो ब्रह्म निर्भयं ओमित्येकाक्षरं ब्रह्म' इति श्रुतेः। प्रकृतिबिन्द्वादिसंज्ञिकायाः पार्वत्यास्तु उमेति नाम। 'बहु शोभमानामुमां हैमवतीं' इति श्रुतेः। एवं च ओमित्युमेत्युभयोः शब्दयोरकारोकारमकारात्मकत्वादभेद इति भावः। ननु ओमिति नाम्नः अकाराद्यवयवकत्वं श्रूयते उमेति नाम्नः अकारान्तावयवकत्वं श्रूयते अतः एकजातीयवर्णगत्वेऽपि आनुपूर्वीभेदात्कथमनयोरभेद इति चेदत आह॥ **सृष्ट्यादीति॥** ओमिति शब्दे सृष्ट्यादित्वं वर्तते कथमिति चेत् सृष्टौ शब्दनिष्पत्तौ अः अकार आदिर्यस्येत्यादिः ओंशब्दः। अः अकारः अवधिः अवसानं यस्येति व्युत्पत्त्या अकारावसानक उमाशब्दः। 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः। आपञ्चैव हलन्तानां यथा वाचा निशा दिशा' इत्यनेन अवधिशब्दावयवावेत्युपसर्गावयवस्य अकारस्य लोपात्केवलं वलग्नवतंसादिशब्दवद्वधिशब्दः प्रयुक्त इति बोध्यम्। ननु ओंशब्दे सृष्ट्यादित्वमुपपादयता अ आदीति वक्तव्यमिति चेन्न। अ आदीति स्थितेऽपि अकाराकारयोः अकस्सवर्णे दीर्घ इति सूत्रेणाभिन्नमिति विग्रहः। परस्परमिति शेषः। तथा च अयमर्थः परमन्योन्यं सृष्ट्यादिसृष्ट्यवधितागुणमात्रभिन्नं युवयोरभिधानं नामधेयभूतं ओमित्युमेति शब्दद्वयं एकं एकविधावान्तरजातीयवर्णकदम्बकमित्यवधेयम्। इतिशब्दः काकाक्षिन्यायेनोभयत्रान्वेति। तथा वेणीति जटेति च यौ कचसंहतेश्शिरोरुहसमुदायस्य भेदौ विशेषौ ताभ्यां भिन्नं भेदवदित्यर्थः। अभिधेयं ओमुमाशब्दवाच्यार्थभूतं रूपंच स्वरूपमपीत्यर्थः। इहेदानीं तावदेकं अभिन्नमित्यर्थः। अस्माकमिदानीमभिन्नतया प्रत्यक्षविषयत्वादिति भावः। यद्वा युवयोर्बिन्दोः भवतश्चेत्युभयोररभिधानं वाचकशब्द एकं एकविधवर्णविशिष्टमित्यर्थः। उभयोरकारोकारमकारात्मकत्वाविशेषादिति भावः। सृष्टिः निर्माणम्। 'सृष्टिः स्वभावे निर्माणे' इति भास्करः। तस्यामादिः तस्या

यद्घोरघोरतररूपमघोरसंज्ञं
आवर्तितभ्रुकुटिभीषणमाननं ते।
तद्दक्षिणं पशुपतेः परमं पदं मे
सांसारिकार्तिहरणं शरणं प्रपद्ये ॥ २५ ॥'

इति स्तुवन्तमिन्दिरारमणमिन्दुशेखरः परिरभ्य बाहुभ्या-

आदिरिति वा प्रथमा वा कारणं वा उमेत्यर्थः। उमायाः पञ्चविंशतितत्त्वान्तर्गतप्राथमिकप्रकृतितत्त्वस्वरूपत्वादिति भावः। 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं' इति प्रकृतेः महान्महतोऽहङ्कार इत्यादिश्रुतिस्मृतिभ्यां जगत्कारणत्वाद्वा आदित्वमिति भावः। पूर्वोक्तभास्करकोशात् सृष्टिः स्वभावः तथैव अवधिर्मर्यादास्थानमित्यर्थः। 'परिच्छेदे बिलेऽवधिः' इत्यमरः। अवधित्वं तु परमेश्वरस्य 'यस्मात्परन्नापरमस्ति किञ्चित्' इत्यादिश्रुतेः। एवं च सृष्ट्यादिश्च सृष्ट्यवधिश्चेति द्वन्द्वः तयोर्भावस्तत्ता सैव गुणः विशेषणमित्यर्थः। 'त्यागादावप्रधाने च गुण' इति भास्करः। स एव गुणमात्रं। 'मात्रं कार्त्स्न्येऽवधारण' इत्यमरः। गुणमात्रेण भिन्नं गुणेनैव परस्परं भेदवदित्यर्थः। अभिधेयं वाच्यार्थभूतोमामहेश्वराख्यवस्तु च॥ **वेणीति**॥ 'वेणिः प्रवेणी शीर्षण्यशिरस्यौ विशदे कचे' इत्यमरः॥ **जटेति**॥ 'शिखा चूडा केशपाशे व्रतिनां तु जटा सटा' इत्यमरः। कचशिरोरुहः। 'कचः केशशिरोरुह' इत्यमरः। तेषां संहतिर्बृन्दम्। 'स्त्रियां तु संहतिर्बृन्दं' इत्यमरः। तस्याः यौ भेदौ प्रकारौ ताभ्यां भिन्नं परस्परं भेदवादिति तात्पर्यार्थः। तादृग्रूपमपि इहेदानीं एकं तावदभिन्नमेवेत्यर्थः। अर्धनारीश्वरतया अस्माकं प्रत्यक्षविषयत्वादिति भावः॥ **यदिति**॥ आवर्तिते सर्वतो विघूर्णिते ये भ्रुकुट्यौ अक्षिकनीनिके। 'तन्द्री प्रमीला भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियां' इत्यमरः। ताभ्यां भीषणं दारुणम्। 'दारुणं भीषणं भीष्मं' इत्यमरः। घोराणां भयङ्करप्रमथभूतपिशाचानां घोरमत्यन्तभयङ्करामित्यर्थः। तथाविधं रूपमाकारः यस्य तत्तथाभूतम्। अघोरमिति संज्ञा नामधेयं यस्य तत्तथाभूतं पशवो ब्रह्मादयः तेषां पतिः तस्य ते तव। 'ब्रह्माद्याः पशवः प्रोक्ताः शिवस्तेषां पतिः स्मृतः' इति पुराणोक्तेः। यदाननं मुखं वर्तते सांसारिकाणां संसारिणां सम्बन्धिनी या आर्तिः पीडा। 'आर्तिः पीडाधनुष्कोट्योः' इत्यमरः। तस्या हरणं नाशकमत एव परमुत्कृष्टं पदं प्राप्यस्थानभूतम्। 'पदं व्यवसितत्राणस्थान' इत्याद्यमरः। तच्छिवदक्षिणमुखं मम शरणं संरक्षकमिति। 'शरणं गृहरक्षित्रोः' इत्यमरः। प्रपद्ये प्रपन्नोऽस्मीत्यर्थः। तमन्तरा विपदामुद्धर्तुरभावादिति भावः॥ **इतीति**॥ इतीत्थं स्तुवन्तं स्तुतिं कुर्वन्तं इन्दिरारमणं श्रीहरिं इन्दुशेखरः श्रीचन्द्रमौळीश्वरः बाहुभ्यां भुजाभ्यां परिरभ्य आलिङ्ग्य

मिदमाचचक्षे। 'भगवन् कमललोचन भवद्दर्शनेन परमामस्मि निर्वृतिं प्राप्तः, आत्मनोऽपि किमधिकं प्रेमपदम्।
तथा हि।

शिवा घोरा चेति श्रुतिषु विदिते ये मम तनू
तयोराद्या मूर्तिः परमरमणीया त्वमसि मे।
त्वमस्यर्धे देहे त्वमसि वदनं दक्षिणमिति
त्वयि प्रीये यावत्तव भवति तावच्च विदितम्॥ २६॥

किमिच्छसि किं करणीयं' इत्यभिदधत्युमावल्लभे, रमा-

इदं वचनं आचचक्षे जगाद॥ **भगवन्निति**॥ हे भगवन् अप्रच्युतषाड्गुण्यशालिन् हे कमललोचन पुण्डरीकाक्ष भवतस्तव दर्शनं प्रेक्षणं तेन परमां निरतिशयां निर्वृतिं सुखम्। 'निर्वृतिर्मनसस्तोषे मोक्षे प्रत्यागतावपि' इति नानार्थमाला। प्राप्तोऽस्मि आत्मनः स्वस्मादपि प्रेमपदं प्रीतिस्थानं किं न किमपीति भावः। ममार्धमिदं अन्तकसूदनस्य देवि त्वमिव तदिति प्रतिपादयति॥ **शिवेति**॥ श्रुतिषु वेदेषु। 'श्रुतिः स्त्री वेद आम्नायः' इत्यमरः। इतिशब्दः काकाक्षिन्यायेन शिवापदघोरापदयोस्सम्बध्यते तथा च शिवेति घोरा चेति मम परशिवस्य ये द्वे तनू शरीरे। 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः। विदिते प्रख्याते वर्तेते इत्यस्यै गम्यमानत्वादप्रयोगः। 'बुद्धं बुधितं मनितं विदितं प्रतिपन्नमवसितावगते' इत्यमरः। 'तस्यैते तनुवौ घोरान्या शिवान्या तनूः' इति। च श्रुतेः। तथोक्तं महाभारतेऽपि। 'द्वे तनू तस्य देवस्य दैवज्ञा ब्राह्मणा विदुः। घोरा चान्या शिवा चान्या ते चैव शतधा पुनः॥' इति। तयोः शिवाघोरयोर्मध्ये आद्या प्रथमोक्ता शिवाख्या परमरमणीयात्यन्तदर्शनीया मे मम मूर्तिश्शरीरं त्वमसि भवान् भवतीत्यर्थः। अर्धाङ्गीकृतदाम्पत्यस्य ममेति पदद्वयशेषः। देहे शरीरे अर्धमर्धांशः त्वमसि। तथाचोक्तं रहस्यागमे। 'योऽयं चकास्ति गगनार्णवरत्नकान्तिर्योऽयं सुरासुरगुरुः पुरुषः पुराणः।' यद्वा उमया साकं विष्णोरभेदादिति भावः। मम दक्षिणं वदनं मुखं च त्वमसि। 'विष्णुरूपं मुखं रम्यं अघोरं दक्षिणं मम' इति चन्द्रिकोक्तेः। इति हेतोः। 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरः। त्वयि भवद्विषये अहं यावत्कियदित्यर्थः। प्रीये च सन्तुष्टो भवामीत्यर्थः। तावत्तत्सकलमित्यर्थः। 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारण' इत्यमरः। तव विदितं बुद्धमित्यर्थः। 'बुद्धं बुधितं मनितं विदितं प्रतिपन्नमवसितावगते' इत्यमरः॥ **किमिति**॥ किमिच्छसि अपेक्षसे किं करणीयं कर्तव्यं मयेत्यादि इतीत्थं उमाधवे गौरीवल्लभे अभिदधति वदति सति रमावल्लभेन लक्ष्मीपतिना इदं वचनमभिदधे उक्तमित्यर्थः॥ **किमिति**॥ अन्यत्परिहृत्यमा-

वल्लभेनेदमभिदधे । 'किमन्यदेष्टव्यम् । इदं किल किमपि विशृङ्खलं दुर्यश इव सम्भावितस्य सद्यस्समाक्रान्तविध्यण्डमण्डल दुर्विदग्धस्य पाण्डित्यमिव तृणीकृतब्रह्मादिदैवतं, नीचगतमैश्वर्यमिव निमिषार्धमपि क्षन्तुमक्षमं, बालिशराजोपसेविजीवनमिव प्रतिक्षणं चित्रीयमाणं, पाशुपतावहेळनमिव भस्मीकृतजगत्त्रयं, क्षीणायुषामामयौल्बण्यमिव विफलीभवत्प्रतीकारप्रकारं, पाषण्डमुखमिव परिहरणीयं दर्शनपथात्, प्रतारकसौहार्दमिव परमदारुणं, विषयनिषेवणमिव व्यामोहकार-

---

नादतिरिक्तम् । मयेति शेषः । किमादेष्टव्यं किं वक्तव्यमित्यर्थः ॥ **इदमिति** ॥ सम्भावितस्य बहुमानितस्य सम्बन्धि दुर्यशः अकीर्तिरिव विशृङ्खलं निर्निरोधं यथा तथा । सद्यस्तत्क्षणं समाक्रान्तं विध्यण्डस्य मण्डलं ब्रह्माण्डगोळकं येन तत्तथाभूतं दुर्विदग्धस्य अतिगर्वितस्य । 'दुर्विदग्धोऽतिगर्वित' इति रुद्रः । पाण्डित्यं शास्त्रीयज्ञानमिवेत्यर्थः । तृणीकृतानि बल्बजीकृतानि ब्रह्मादिदैवतानि येन तत्तथाभूतं नीचः पृथग्जनः । 'विवर्णः पामरो नीचः प्राकृतश्च पृथग्जन' इत्यमरः । ईश्वरः स्वामी । 'धनी स्वामी त्वीश्वरः पतिरीशिता' इत्यमरः । तस्य भावः ऐश्वर्यमिव निमिषार्धमपि कलामात्रमपि क्षन्तुं सोढुं अक्षमं अशक्यं बालिशो मूर्खः तथाभूतो यो राजा । 'मूर्खवैधेयबालिशा' इत्यमरः । तस्योपसेवनं समीपसेवेत्यर्थः । प्रतिक्षणं चित्रीयमाणं वैचित्र्यभागित्यर्थः । पाशुपताश्शिवभक्ताः शिवभक्तस्वरूपं स्कान्दे । 'यो हस्तपीठे शिवलिङ्गनिष्ठं निवेश्य तल्लीनमनःप्रचारः । बाह्यक्रियासङ्कुलनिःस्पृहात्मा सम्पूजयत्यङ्ग स वीरशैवः ॥' इति । तेषामवहेळनमवज्ञेव । 'अवज्ञावहेळनमसूर्क्षणं' इत्यायमरः । भस्मीकृतं जगतां लोकानां त्रयं येन तत्तथाभूतम् । तथा चोक्तं स्कान्दे । 'भक्तानां गणमूर्तीनां प्राणलिङ्गाङ्गसङ्गिनाम् । अतिथीनां द्विजाग्र्याणां प्राज्ञस्सम्मानमाचरेत् ॥ अन्यथा तु महारिष्टमिति प्राह महेश्वरः ।' इति क्षीणमायुर्जीवितकालः येषां ते तेषां आमयो रोगः । 'रोगव्याधिगदामया' इत्यमरः । तस्य औल्बण्यं उपचय इव विफलीभवन् व्यर्थीभवन् प्रतीकारस्य चिकित्सायाः प्रकारो यस्य तत्तथाभूतं पाषण्डाः सर्वलिङ्गिनः बौद्धादयः तेषां मुखमिव । 'पाषण्डास्सर्वलिङ्गिन' इत्यमरः । अत्र सुधायां तु । 'पालनाच्च त्रयीधर्मः पाशब्देन निगद्यते । तं खण्डयन्ति ते यस्मात्पाषण्डास्तेन हेतुना' इत्युक्तम् । दर्शनयोः दृशोः पन्थाः मार्गः तस्मात् दर्शनपथात् । ऋक्पूरित्यादिना समासान्तादप्रत्ययः । परिहरणीयं परिहर्तव्यं दृष्टिप्रसारणानर्हमिति भावः । प्रतारकाः वञ्चकाः तेषां सौहार्दमिव मैत्रीव । सुहृद्दुर्हृदौ मित्रामित्रयोरिति

**णं, भवत्पादाब्जवैमुख्यजं दुरितमिव भवत्प्रपदनैकभेषजं, अव्यपदेश्यं, अनिर्धार्यं, अदूरविप्रकर्षेण शक्यमिव विषमिति व्यपदेष्टुं, अतर्कितोपनतमतीतभवप्रारब्धमिव समाक्रम्य जगत्त्रयं, सन्निपात्य देवासुरान्, प्रक्षोभ्य कमलासनं, परिवृत्य मामपि प्रवृत्तं शनैर्भूषणाम्बरादिषु, भगवत्यास्सुधामालिन्याश्चरणस्मरणप्रभावादपसृत्येव किञ्चिदधरोत्तरयति विश्वमिदम्।**

**अक्षोभ्यं भिषजां शतैरविषयश्शस्त्रस्य वास्त्रस्य वा**
**दुस्साधं मणिमन्त्रयन्त्रशरणैर्दुर्निग्रहं योगिभिः**

निपातनात्साधुः । परमदारुणमत्यन्तभयानकमित्यर्थः । 'घोरं भीमं भयानकं' इत्यमरः। शब्दादिविषयसुखसेवनं यथा नरस्य व्यामोहकारणं तद्वदित्यर्थः । विषनिषेवणमिति पाठे विषं गरळं तस्य निषेवणं सेवनमिव व्यामोहः मूर्च्छा तस्य कारणं निमित्तमित्यर्थः । भवतः पादाब्जे पादकमले तयोर्वैमुख्य मभजनं वा तस्माज्जातं तज्जं दुरितमिव भवतः प्रपदनं प्रपत्तिः प्रणिपात इति यावत् । तदेकं मुख्यं भेषजं प्रतीकारो यस्य तत्तथाभूतम् । यथा भवद्भजनाभावप्रयुक्तदुरितं भवन्नमस्कारेणैव निरस्यते तद्वदिदमपि तेनैव निवर्तनीयमिति भावः । 'भेषजौषधभैषज्य।' 'चिकित्सा रुक्प्रतिक्रिया' इति चामरः । अव्यपदेश्यं नाम्ना इदमित्थमिति वक्तुमशक्यमित्यर्थः। अनिर्धार्यं स्वरूपेणापि इदमित्थमिति ज्ञातुमशक्यमित्यर्थः । अदूरं समीपप्रदेशः तस्मिन् विप्रकर्षः विबाधनं तेन । 'द्वयोस्तु स्याद्विप्रकर्षः व्यवधाने विबाधन' इति हेमचन्द्रः । विषमिति गरळमित्येवं व्यपदेष्टुं नाम्ना निर्देष्टुमित्यर्थः । अशक्यमिव । अतर्कितमनूहितं यथा तथा उपनतः सम्प्राप्तः अतीतः अतिक्रान्तो यो भवः जन्म प्राग्जन्मेति यावत् । तत्सम्बन्धि यत् प्रारब्धं अवश्यभोक्तव्यकर्मेत्यर्थः । तदिव स्थितं दुर्निवारत्वादिति भावः । जगत्त्रयं त्रिभुवनं समाक्रम्य देवासुरान् सन्निपात्य पातयित्वेत्यर्थः । कमलासनं ब्रह्माणं प्रक्षोभ्य प्रधाव्यं क्षोभं प्रापयित्वा वेत्यर्थः । मामपि परिवृत्य सर्वतो व्याप्येत्यर्थः । भूषणाम्बरादिषु प्रवृत्तमिदं किल समुद्रविनिर्गतं वस्तु भगवत्याः सुधामालिन्याः अमृतेश्वर्याः चरणारविन्दयोर्यत् स्मरणं ध्यानं तस्य प्रभावः महिमा तस्मात् शनैर्मन्दं किञ्चिदल्पं अपसृत्येव निवृत्त्येव विश्वं कृत्स्नमिदं भुवनमधरोत्तरयति व्यत्यासं प्रापयतीत्यर्थः ॥ **अक्षोभ्यमिति** ॥ भिषजां चिकित्सकानाम्। 'भिषग्वैद्यचिकित्सकौ' इत्यमरः । शतैः अक्षोभ्यमनिवार्यं शस्त्रस्य आयुधस्य अस्त्रस्य ब्रह्मास्त्रादेर्वा । 'आयुध-

व्यामुह्यत्कमलासनं विनिपतद्देवर्षिसिद्धासुरं
निर्व्यापारितमङ्गजं च किमिदं किंनाम न ज्ञायते ॥ २७ ॥
यदादिष्टं पाल्यं जगदिति जगन्नाथ भवता
तदेतत्पर्यन्तं तव करुणया साधितमिव ।
दुरूहे दुस्साधे महति पुनरस्मिन् प्रविलये
ममेदं कार्यं यत्तव चरणयोस्तत्त्वकथनम् ॥ २८ ॥'

इति निर्विण्ण इव निवेदयति गरुडध्वजे, प्रहसन् पार्वतीरमणः, पश्य तावदिति ब्रुवन्, प्रसारयन् दक्षिणं बाहुं, अनुसस्मार हालाहलम् ।

सर्वातङ्कविशङ्कशङ्करजटालङ्कारचन्द्राङ्कुर-
ज्योत्स्नानिर्भरपूरितत्रिजगतीगर्भाद्वधूतो बहिः ।

---

न्तु प्रहरणं शस्त्रमस्त्रमथास्त्रियां' इत्यमरः । अविषयः अगोचरं लक्ष्यं न भवतीति यावत् । मणयो गारुडमणिप्रभृतयः मन्त्राः विषघ्नशाबरादिमन्त्राः यन्त्राणि गारुडयन्त्राणि तेषां करणानि स्थापनधारणपारायणादिक्रियाः तैः दुस्साधं नियन्तुमशक्यमित्यर्थः । अथवा निरासितुमशक्यमित्यर्थः । योगिभिः सनकादिभिः दुर्निग्रहं निग्रहीतुमशक्यमित्यर्थः । व्यामुह्यन्विमूर्च्छन् यः कमलासनो ब्रह्मा यस्मात्तथाभूतं, विनिपतन्तः देवर्षयः सिद्धाः असुराश्च यस्मात्तथाभूतं निर्व्यापारितं गतचेष्टीकृतं विश्वं लोकः यस्मात्तथाभूतं इदं परिदृश्यमानं अस्मदरिष्टं किं भवेत् किंनाम किंनामधेयकं न ज्ञायते न ज्ञातमित्यर्थः ॥ **यदिति** ॥ हे जगन्नाथ परशिव भवता जगद्भुवनं पाल्यं रक्षणीयमिति मह्यमिति शेषः । यदादिष्टं यत्सन्दिष्टं तद्भवन्निदेशः एतत्पर्यन्तमेतावत्कालपर्यन्तं तव करुणया कृपया साधितमिव सम्पादितप्रायमेवेत्यर्थः । दुरूहे ऊहितुमशक्ये दुःसाधे साधयितुमशक्ये महत्यधिके अस्मिन् प्रविलये पुनः एतस्मिन्विनाशकाले त्वित्यर्थः । तव चरणयोः तत्त्वस्य स्वरूपस्य कथनमभिधानमिति यत् । 'तत्त्वं विलम्बमाने स्यात् स्वरूपे परमात्मनि' इति नानार्थरत्नमाला । तदिदं मया कार्यं कर्तव्यमित्यर्थः । मम स्वरूपमेतावदिति कथनमेव मे रोचत इति भावः ॥ **इतीति** ॥ इतीत्थं निर्विण्णे खेदविशिष्ट इव गरुडध्वजे निवेदयति अभिदधाने सति पार्वतीरमणः उमाकान्तः प्रहसन् हासं कुर्वन् सन्नित्यर्थः । पश्य तावदिति ब्रुवन् दक्षिणं बाहुं वामेतरभुजम् । 'वामं शरीरे सव्यं स्यादपसव्यं तु दक्षिणं' इत्यमरः । प्रसारयन् प्रसारणं कुर्वन् सन् हालाहलं विषराजं अनुसस्मार स्मृतवानित्यर्थः ॥ **सर्वेति** ॥ सर्वे समस्ताः ये आतङ्का रोगाः सन्तापा इति वार्थः । 'रुक्तापशङ्कास्वातङ्क' इत्यमरः । तेभ्यः विशङ्काः

स क्ष्वेळः क्वचन व्यलीयत महाशुण्डालशुण्डाहति-
क्षुभ्यत्क्षुद्रसरस्तरङ्गनिकरव्याकीर्णशैवालवत् ॥ २९ ॥
अजनि शनैर्विशदं जगदपसर्पति कालकूटसन्तमसे ।
तात्पर्यमिव कवीनां तार्किककोलाहलोपरमे ॥ ३० ॥

ततश्च सान्निध्यत एव भगवतश्चन्द्रचूडस्य पल्लवितान्यरण्यानि, पर्यपूर्यन्त सागराः, प्रावर्तन्त सरितः, पस्पन्दिरे मरुतः, प्रचकाशिरे ज्योतींषि, प्रसेदुर्दिशः, प्रशेमुरुत्पाताः, प्रादुरभूवन्मङ्गळानि, अचेतयन्त जन्तवः, यथापुरं

---

भयरहितः गङ्गाब्धुरस्सदाशिवस्तस्य या जटाः । 'व्रतिनान्तु जटा सटा' इति कोशात् । जटीभूतशिरोरुहा इत्यर्थः । तासां अलङ्कारः मण्डनभूतः यश्चन्द्राङ्कुरः बालचन्द्रः तस्य या ज्योत्स्ना चन्द्रिका तया निर्भरमत्यन्तं पूरिता भरिताः यास्तास्तो जगत्यो लोकाः । 'जगती भुवने क्ष्मायां' इति विश्वः । तासां गर्भः कुक्षिदेशः । 'कुक्षिभ्रूणार्भकौ गर्भौ' इत्यमरः । तेन अवधूतः निष्कासितः सः क्ष्वेळः विषम् । 'क्ष्वेळस्तु गरळं विषं' इत्यमरः । महान् यश्शुण्डालो गजः तस्य शुण्डा करः तया आहतिराघातः तया क्षुभ्यत्तारळ्यं प्राप्नुवद्यत् क्षुद्रसरः स्वल्पजलकासारः । 'कासारस्सरसी सरः' इत्यमरः । तस्मिन् ये तरङ्गाः ऊर्मयः तेषां निकरस्समूहः तेन व्याकीर्णं प्रकीर्णम् । अथवा नुन्नमित्यर्थः । यच्छैवालं जम्बालः तेन तुल्यं तद्वदित्यर्थः । क्वचन क्वापि कुत्र वा कैरप्यदृष्टस्थले व्यलीयत विलीनमभूदित्यर्थः ॥ **अजनीति** ॥ कालकूटः विषराजः स एव सन्तमसं तमः । अवसमन्धेभ्यस्तमस इत्यकारान्तश्शब्दः । 'ध्वान्ते गाढेऽन्धतमसं क्षीणेऽवतमसं तमः' इत्यमरः । तस्मिन् अपसर्पति अपसरमाणे सति अखिलं जगद्भुवनजातम् । तार्किकाः शुष्कनैयायिकाः तेषां कोलाहलः कलकलध्वनिः तस्य उपरमः उपरतिः अवसानमिति यावत् । तस्मिन् सति कवीनां काव्यालङ्कारविदां तात्पर्यं उद्दिष्टार्थ इव शनैर्मन्दं विशदं प्रकाशमानमजनि बभूवेत्यर्थः ॥ **सान्निध्यत इति** ॥ चन्द्रश्चूडायां यस्य स तथाभूतः चन्द्रशेखर इत्यर्थः । तस्य सान्निध्यतस्सन्निधानात् अरण्यानि विपिनानि पल्लवितानि सञ्जातकिसलयानीत्यर्थः । सागरास्समुद्राः पर्यपूर्यन्त परिपूरिता बभूवुरित्यर्थः । सरितो नद्यः प्रावर्तन्त प्रावहन्नित्यर्थः । मरुतो वायवः पस्पन्दिरे प्रचेलुरित्यर्थः । ज्योतींषि सूर्यादयः प्रचकाशिरे बभुरित्यर्थः । दिशः ककुभः प्रसेदुः विमला बभूवुरित्यर्थः । उत्पाताः धूमकेतूपकेत्वादयः । 'अजन्युत्पातो धूमकेतू' इत्यमरः । प्रशेमुः शान्तिं प्रापुः । मङ्गळानि कल्याणानि प्रादुरभूवन् प्रादुर्बभूवुरित्यर्थः । जन्तवः प्राणिनः अचेतयन्त संज्ञां प्रापुरित्यर्थः । वासुकिस्सर्पराजो यथापुरं पूर्वकालमिवावाबुध्यत

प्रबुध्यत वासुकिः, उत्तस्थुर्देवासुराः, शनैरुपलभ्य संज्ञाम् अम्भोजसम्भवोऽपि सन्ददर्श चन्द्रशेखरम्।

पर्याप्तेन्दुशतद्युतिं परिचितं सत्या शुकश्यामया
साकूतस्मितसुन्दराधरपुटं शार्दूलचर्माम्बरम्।
सावज्ञाग्रकरप्रसारणमहासंरम्भसम्भावना-
संहृष्यत्कमलेक्षणं च तमसौ पश्यन्न तृप्तिं ययौ ॥ ३१ ॥

ततः प्रतिलब्धचेतना ब्रह्मादयः, पक्षिण इव सुप्तोत्थिताः प्रातरुच्चावचैः कोलाहलैरुद्यन्तमिव सहस्रकिरणमुपतिष्ठन्ते यावदुमारमणं, तावदस्य भवसागरनिमग्नभक्तजनोद्धार-दर्शितानुराग इव, परिणामकर्कशपशुपाशग्रन्थिविश्लथनाया-

प्रबोधं प्रापेत्यर्थः। देवासुरा उत्तस्थुः उत्थानं चक्रुरित्यर्थः। अम्भोजसम्भवश्चतुराननोऽपि शनैस्संज्ञां प्रज्ञामुपलभ्य आश्रित्य चन्द्रशेखरं चन्द्रमौळीश्वरं ददर्श अपश्यत् ॥ **परीति** ॥ असौ ब्रह्मा पर्याप्ताः परिपूर्णा ये इन्दवः राकाचन्द्राः तेषां यानि शतानि तेषां द्युतिः कान्तिः यस्य स तथाभूतम्। शुकवत् श्यामा श्यामला तथाभूतया सत्या पतिव्रतया परिचितमाश्लिष्टं शुकश्यामलाम्बयेति यावत्। सतीदव्येति वार्थः। शुकश्यामलाम्बास्वरूपं वर्णितमस्मत्तातपादैः। 'वपुषा वचसा शुकायमानामधरे वाससि किंशुकायमानाम्। शिवकायशुभां शुकायमानां गजचित्तात्मविदां शुकायमानां' इति। आकूतं कर्तव्यार्थविनिश्चयः तेन सहितं साकूतं यस्मितं तेन सुन्दरं दर्शनीयं अधरपुटमधरप्रदेशः यस्य स तथाभूतं शार्दूलचर्म व्याघ्राजिनं तस्य धरं धर्तारं परशिवमित्यर्थः। सावज्ञं सावहेळनं यथा तथा अग्रकरस्य प्रसारणं तस्मिन् यो महासंरम्भः महानुद्योगः स एव सम्भावना बहुमाननं महारम्भस्य उद्योगस्य सम्भावना श्लाघनेति वार्थः। तया संहृष्यन् हर्षं प्राप्नुवन् यः कमलेक्षणः श्रीहरिः यस्य स तथाभूतं तमपि पश्यन् तृप्तिं अलम्बुद्धिं न ययौ न प्राप ॥ **तत इति** ॥ ततो भगवद्दर्शनानन्तरं प्रतिलब्धा प्राप्ता चेतना प्रज्ञा यैस्ते तथाभूता ब्रह्मादयः सुप्तोत्थिताः प्रसुप्ताः पश्चादुत्थिता इति स्नातानुलिप्तवत्समासः। पक्षिण उच्चावचैरनेकविधैः कोलाहलैः कलकलध्वनिभिः प्रातरुद्यन्त उद्भवन्तं सहस्रकिरणमादित्यमिव उमारमण पार्वतीपतिं यावदुपतिष्ठन्ते सेवन्ते ॥ **तावदिति** ॥ तावद्भवः जननमरणप्रवाहलक्षणसंसारः स एव सागरः तस्मिन्निमग्नाः ये भक्ता जनाः तेषामुद्धारः उद्धरणं तस्मिन् दर्शितः अनुरागः येन स तथाभूत इव स्थिते परिणामः परिपाकः तेन कर्कशाः कठिनाः ये पशूनां पशुरूपप्राणिनां पाशानां संसारपाशानां अविद्यापरपर्यायाणां ग्रन्थयः किणानि पर्वे

ससम्भृतारुण्य इव, पार्वतीकुचकुम्भकुंकुमालेपपरिचयपाटल इव, तामरसोदरसोदरत्विषि पाणितले, पल्लव इव मधुव्रतः, पद्मरागकरण्ड इव कस्तूरिका, जाम्बवमात्रपरिमाणजातसङ्कोचमपि दुराधर्षमूष्मणा, दुर्दर्शमतिदारुणेन तेजसा च, समालक्ष्यत तरळमिव साध्वसेन तद्गरळम् ।

आश्चर्यस्तिमितत्रिविष्टपमतिप्रेमाहितात्याहित-
प्रक्षुभ्यद्गिरिजागृहीतपुनरुद्धूताग्रहस्ताम्बुजम् ।
मह्यं मह्यमिति प्रतिस्वमसकृत् क्ष्वेळार्पणप्रार्थना-
सन्नह्यद्गणदर्शितस्मितलवं शम्भोः स्थितं पातु नः ॥

पर्यायाणि । 'ग्रन्थिर्ना पर्वपरुषी' इत्यमरः । भ्रमा एव ग्रन्थय इति तात्पर्यार्थः । तेषां विश्लथनं विमोचनं तस्मिन् य आयासः तेन सम्भृतं सम्पादितं आरुण्यं येन तत्तथाभूत इव स्थिते पार्वत्याः यौ कुचकुम्भौ तयोर्यत्कुङ्कुमं तस्य परिचयः संबन्धः तेन पाटलेऽरुणिते तामरसेन सोदरी सदृशी त्विट् यस्य स तथाभूत इव स्थिते । अस्य परशिवस्य पाणितले हस्तप्रदेशे पल्लवे किसलये मधुव्रतः भ्रमर इव पद्मरागश्शोणरत्नम् । 'शोणरत्नं लोहितकं पद्मरागोऽथ मौक्तिकं' इत्यमरः । तन्मयं यत्करण्डं भाजनं तस्मिन् कस्तूरिकेव मृगमद इव । जाम्बवं जम्बूफलं मात्रं प्रमाणं यस्य तज्जाम्बवमात्रम् । प्रमाणे द्वयसजित्यादिना मात्रच्प्रत्ययः । 'बार्हतं च फले जम्ब्वा जम्बू स्त्री जम्बुजाम्बवं' इत्यमरः । अत एव परिमाणेन इयत्तया जातः प्राप्तः सङ्कोचः पूर्वापेक्षया ह्रासो यस्य तत्तथाभूतं ऊष्मणा उष्णांशेन दुराधर्षं निग्रहीतुमशक्यमित्यर्थः । अतिदारुणेन अत्यन्तभयङ्करेण तेजसा प्रभावेन । 'तेजः प्रभावे दीप्तौ च' इत्यमरः । दुर्दर्शं कृच्छ्रेण द्रष्टुं शक्यमित्यर्थः । ईषद्दुःसुषुकृच्छ्राकृच्छ्रार्थेषु खलिति खल्प्रत्ययः । साध्वसेन भयेनेव तरळं चञ्चलं तद्गरळं विषं आलक्ष्यत दृष्टमित्यर्थः । सर्वैरित्यस्य गम्यमानत्वादप्रयोगः ॥ आश्चर्येति ॥ आश्चर्यं विस्मयरसः तेन स्तिमितानि आर्द्राणि । 'आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तं च' इत्यमरः । त्रीणि विष्टपानि भुवनानि यस्मिन् तत् अतिप्रेम्णा अत्यन्तस्नेहेन । 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ दोहदं' इत्यमरः । आहितं यदत्याहितं महाभीतिः तेन प्रक्षुभ्यन्ती व्यथया सहिता या गिरिजा पार्वती तया गृहीतं पुनरुद्धूतं पुनस्त्यक्तं अग्र्यं श्रेष्ठं हस्ताम्बुजं यस्मिन् तत्तथाभूतम् । 'त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टं' इत्यमरः । प्रतिस्वं प्रत्येकं वीप्सायामव्ययीभावः । प्रातिव्यक्तीति यावत् । मह्यं मह्यमिति असकृद्वारं वारं क्ष्वेळस्य अर्पणं समर्पणं तस्य प्रार्थना याचना तस्यां सन्नह्यन्तस्सन्नाहं कुर्वन्तः ये गणाः प्रमथाः । 'कणोऽतिसूक्ष्मे धान्यांशे सङ्घाते प्रमथे

ततः प्रकृतिस्थे जगति, प्रबुद्धेषु देवासुरेषु, परिष्टुवति पद्मविष्टरे पद्मनाभे च, निषेद्धुमनुवर्तितुमप्यपारीणतया निश्चलार्पितदृष्टिषु नन्दिमुखेषु पारिषदेषु, अन्तरेव मङ्गळमाशासानया सर्वमङ्गळया समालिङ्गितो दृढं 'हालाहलो नाम विषराजोऽयमाचम्यतेऽस्माभिर्मा बिभीत, विज्वरा भवत' इति प्रतिबोध्य पश्यतो जनान्, माधव इव नवनीतमुमाधवो गरळमुपयुयुजे । यस्य शिष्यवर्गे बडबानलः, भुजिष्यवर्गे भुजगविषाणि, वनीपकवर्गे वज्रनिष्पेषः, गणनीय एव गगनमणिः, तादृशि कालकूटे तादृशीमपि दारुणतामुपसंगृह्य, ज-

गणे' इत्यमरः । तेषु विषये दर्शितः स्मितस्य लवो लेशो यस्मिन् तत्तथाभूतं शम्भोश्शिवस्य स्थितं स्थितिः । भावे क्तः । नः अस्मान् पातु रक्षत्वित्यर्थः ॥

**तत इति** ॥ ततोऽनन्तरं जगति लोके प्रकृतिः स्वभावः तया तिष्ठतीति प्रकृतिस्थं तथाभूते सति देवासुरेषु प्रबुद्धेषु जागरूकेषु सत्सु पद्मविष्टरे अरविन्दासने ब्रह्मणि पद्मनाभे च नारायणे च परिष्टुवति स्तुतिं कुर्वाणे सति निश्चलं यथा तथा अर्पिताः विन्यस्ताः दृष्टयो यैस्तथाभूतेषु नन्दिमुखेषु नन्दीश्वरमुखेषु पारिषदेषु प्रमथेषु । 'प्रमथाः स्युः पारिषदाः' इत्यमरः । निषेद्धुं निरोद्धुं अनुवर्तितुमनुसर्तुं वा अपारीणेषु असमर्थेषु अन्तरे हृदय एव मङ्गळं कल्याणं आशंसमानया कामयमानया सर्वमङ्गळया उमादेव्या दृढं गाढम् । 'गाढबाढदृढानि च' इत्यमरः । आलिङ्गितो देवो महादेवः उमाधवः पार्वतीपतिः हालाहलो नाम हालाहल इति प्रसिद्धः विषराजः विषसार्वभौमः अस्माभिः आचम्यते अद्यते । यूयामत्यस्य गम्यमानत्वादप्रयोगः । मा बिभीत भयं मा स्म भजतेत्यर्थः । विज्वरा विगतसन्तापाः भवत । इतीत्थं पश्यतः दृष्टून् जनान् प्रति प्रबोध्य बोधयित्वा माधवः श्रीपतिः नवनीतं हय्यङ्गवीनमिव । हैय्यङ्गवीनं संज्ञायामिति निपातनात्साधुः । 'नवनीतं नवोद्धृतं । तत्तु हय्यङ्गवीनं यत्' इत्यमरः । गरळं विषं उपयुयुजे बुभुज इत्यर्थः । तथाचोक्तं देवीभागवते । 'इति सम्प्रार्थितो देवैर्भाव्यमानैर्महर्षिभिः । तत्राविरास भगवान्महादेवः स्वयं प्रभुः ॥ सुराणां साध्वसं दृष्ट्वा संस्मरन्नमृतेश्वरीम् । त्रैलोक्योद्भटभूतं तत्कालकूटं महेश्वरः ॥ हस्तेनाकर्षयद्वेगात् खाद्यसारसमप्रभम् । मुखे जग्राह भगवान् जम्बूफलमिवाशु तत् ॥' इति ॥ **यस्येति** ॥ यस्य विषराजस्य शिष्याः अन्तेवासिनः । 'छात्रान्तेवासिनौ शिष्यौ' इत्यमरः । तेषां वर्गे समूहे शिष्यकोटाविति यावत् । बडबानलः वाडबाग्निः । भुजिष्याः परिचारकाः । 'नियोज्यकिङ्करप्रेष्यभुजिष्यपरिचारकाः' इत्यमरः । तेषां वर्गेषु भुजगानां विषाणि वनीपकाः याचनकाः । 'वनीपको या-

म्बूफल इव, जीर्णामलक इव, खर्जूरपिण्ड इव, खदिरसा-रखण्ड इव, विशति निश्शङ्कमाननं विषमलोचनस्य, जठर-स्थजगत्प्लोषमाशङ्कमाना दयामयी भगवती दाक्षायणी पल्लव-कोमलेन पाणिना परामममर्श कण्ठपद्मम्।

निर्मर्यादभवज्वरज्वलनसीदज्जीवजीवातुना
संस्पृष्टं करपल्लवेन जगतां मातुस्सुधास्यन्दिना।
सद्यश्शीतलितं शरत्परिणतज्योत्स्नामृतस्यन्दव-
त्तत्सम्भे गरळं गळे भगवतश्चन्द्रार्धचूडामणेः ॥ ३२ ॥

---

चनको मार्गणो याचकार्थिनौ' इत्यमरः। तेषां वर्गे वज्रनिष्पेषः अशन्याघातः गगनमणिः रविः गणनीयः संख्यातुं योग्य एव तादृशे तथाविधे कालकूटे विषराजे तावतीं तत्तादृशीमपि दारुणतां भयङ्करत्वं उपसंहृत्य उपसंहृत्य जम्बूफल इव जीर्णमातपादिशुष्कं यदामलकं धात्रीवृक्षफलं तस्मिन्निव। खर्जूरकं खर्जूरफलम्। 'खर्जूरः केतकी ताळी खर्जूरी च तृणद्रुमाः' इत्यमरः। तस्य पिण्डके गोळके पिष्टघनीभूतखर्जूर इति यावत्। खदिरसारः खदिरवृक्षनिर्यासः तस्य खण्ड इव शर्कराखण्डे इत्यपि केचित्। निश्शङ्कं निर्भयं यथा तथा आननं विषमलोचनस्य त्रिणेत्रस्य स्वामिनो मुखं विशति प्रविशति सति जठरस्थानि यानि जगन्ति लोकाः तेषां प्लोषः दाहः तमाशङ्कमाना तं प्रति बिभ्यती तेषामपि स्वपुत्रत्वादिति भावः। दयामयी कृपारूपा दाक्षायणी उमादेवी जगन्माता पल्लवः किसलयः तद्वत्कोमलेन मृदुना पाणिना हस्तेन कण्ठपद्मं कण्ठस्य पदं स्थानं परामममर्श पस्पर्शेत्यर्थः। तथोक्तं देवीभागवते। 'वामभागस्थिता गौरी लोकानां हितकाम्यया। ग्रीवां जग्राह सहसा शिवस्य परमेशितुः॥ अन्तर्गाळिते कालकूटे दग्धं जगद्भवेत्' इति। श्रीमहाभागवतेऽपि। 'ततः करतलीकृत्य व्यापि हालाहलं विषम्। अभक्षयन्महादेवः कृपया भूतभावनः॥' इति॥ निर्मर्यादेति॥ निष्क्रान्ता मर्यादाया इति निरादयः क्रान्ताद्यर्थे पञ्चम्येति समासः। तथा च निर्मर्यादः निस्सीमः यो भवज्वरः संसाररोगः स एव ज्वलनोऽग्निः तेन सीदन्तः खिन्नाः ये जीवाः जीवन्तीति जीवाः इति व्युत्पत्त्या प्राणिन इत्यर्थः। तेषां जीवातुः जीवनौषधम्। 'जीवातुर्जीवनौषधं' इत्यमरः। तथाभूतेन सुधाया अमृतस्य स्यन्दि स्रावि ... भूतेन जगतां लोकानां मातुः जनन्याः उमादेव्याः करपल्लवेन कराकिसलयेन संस्पृष्टं परामृष्टं अत एव शरदि शरत्काले परिणता कालवशात्परिपाकं प्राप्ता या ज्योत्स्ना चन्द्रिका तस्याः स्यन्दः स्रवणं स्रुतिरिति यावत्। तेन तुल्या स्यन्दवत्। तेन तुल्यं क्रिया चेद्वतिरिति वतिप्रत्ययः। सद्यः तत्क्षणं शीतळितं शीतळीकृतं सदित्यर्थः

यच्छैलेषु यदम्बुराशिषु यदुद्भिज्जेषु यज्जन्तुषु
क्वापि क्वापि हृतस्य तस्य सहसा लेपात्मना शेषितम्।
तत्सौराष्ट्रिकदारदादिभिदया विख्यातमद्याप्यहो
कीटायापि न मन्यते खगपतिं धन्वन्तरिं चाश्विनौ॥
अन्तर्निगीर्णमपि तेन तदाविरासीत्
कालोन्मिषत्कुवलयच्छवि कण्ठमूले।
आयस्य गुप्तमपि खल्वनृतं कदापि
सद्यः स्फुटीभवति साधुषु निर्मलेषु॥ ३५॥

अथ भगवन्तं अनायासकबळीकृतकालकूटं आविष्कृत-

गरळं विषं चन्द्रार्धचूडामणेः अर्धेन्दुशिरोमणेः परमेश्वरस्य गळ एव तस्तम्भे स्तम्भमभूदित्यर्थः। बहिर्न निस्ससार उदरं च नाविशदिति भावः॥ यदिति॥ सहसा अतर्कितं यथा तथेत्यर्थः। 'अतर्किते तु सहसा स्यात्' इत्यमरः। एतस्य परमेश्वरापहृतस्येत्यर्थः। तस्य विषराजस्य यद्योऽङ्श इत्यर्थः। शैलेषु पर्वतेषु लेपात्मना लेपनस्वरूपेण अवशेषितं अवशिष्टं कृतमभूदित्यर्थः। यत् योंऽशः उद्भिज्जेषु तरुगुल्मादिषु। 'उद्भिज्जास्तरुगुल्माद्या' इत्यमरः। यदम्बुराशिषु उदकसमूहेषु यज्जन्तुषु वृश्चिकादिप्राणिषु क्वापि क्वापि यत्र यत्र चेत्यर्थः। लेपात्मना शेषितमवशेषितमित्यर्थः। सौराष्ट्रिकश्च दारदश्च सौराष्ट्रिकदारदौ तावादी येषां तेषां भिदया भेदेन। तथा चोक्तममरसिंहेन। 'पुंसि क्लीबे च काकोलकालकूटहलाहलाः। सौराष्ट्रिकश्शौक्लिकेयो ब्रह्मपुत्रः प्रदीपनः॥ दारदो वत्सनाभश्च विषभेदा अमी नव' इति। विख्यातं प्रसिद्धं तत् अवशिष्टविषांशः अद्यापि खगपतिं गरुडं धन्वन्तरिं अश्विनौ स्वर्वैद्यौ च कीटायापि क्रिमिविशेषवदित्यर्थः। न मन्यते न मनुते। त्वां तृणायापि न मन्य इत्यत्रेव चतुर्थी बोध्या अहो आश्चर्यं॥ अन्तरिति॥ तदा तस्मिन् समये तेन परमेश्वरेण अन्तः हृदये निगीर्णं गळितमपि तद्गरळं काले उन्मिषद्विकसत् कुवलयं नीलोत्पलं तस्य छविः कान्तिरिव छविर्यस्य तत्तथाभूतं सत् कण्ठस्य मूले मूलदेशे आविरासीत् प्रकटीबभूवेत्यर्थः। तथाहि युक्तमेतत् आयस्य आयासं प्राप्य गुप्तं रक्षितमपि। 'अवितं गोपायितं च गुप्तं' इत्यमरः। खर्वाः अल्पाः तैः कृतं कर्म। खल्वनृतमित्येकः पाठः। निर्मलेषु निष्कल्मषेषु साधुषु सद्यः स्फुटीभवति प्रकाशीभवतीत्यर्थः। अत्र प्रस्तुतेन शिवकण्ठे गरळप्रकाशेन सह अप्रस्तुतस्य निर्मलसज्जनेषु फल्गुजनकृतगुप्तकर्मप्रकाशीभवनस्योक्तेरर्थान्तरन्यासालङ्कारः। 'उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः' इति लक्षणात्॥ अथेति॥ अथानन्तरं अनायासेन अश्रमेण ईषत्प्रयत्नेनेति वार्थः। कबळीकृतः प्रासीकृतः

मन्दस्मितसुन्दरमाश्वस्तया भवान्या मुहुर्मुहुराश्लिष्य परिचुम्बन्त्या परामृश्यमानकन्धरापदं, आनन्दतुन्दिलतया किमप्यज्ञातकरणीयैरालिङ्गद्भिरितरेतरं, अन्योन्यमास्फोटयद्भिः अपहसद्भिरन्योन्यममरगणैरसकृदुपसंगृह्यमाणचरणारविन्दमालक्ष्य चन्द्रशेखरं, आनन्दनिर्भरा गोविन्दविधिपुरन्दरादयो देवाः, बलिविरोचनादयो दानवाः, ब्रह्मर्षयश्च सनकादयः, यथामति स्तोतुमारेभिरे।

'दिष्ट्या विषेण भग्नाः स्मो दिष्ट्या पीतमिदं त्वया।
दिष्ट्या च नीलकण्ठं त्वां गृणती साधिता श्रुतिः ॥ ३६ ॥

---

कालकूटो येन स तथाभूतं आविष्कृतं प्रकटितं यन्मन्दस्मितं तेन सुन्दरं दर्शनीयं किञ्च आश्वस्तया समाश्वासं कुर्वन्त्या आश्लिष्य आलिङ्ग्य चुम्बन्त्या चुम्बनं कुर्वन्त्या भवान्या उमादेव्या मुहुर्मुहुरसकृत् परामृश्यमानं संस्पृश्यमानं कन्धरायाः कण्ठस्य। 'कण्ठो गळोऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि' इत्यमरः। पदं स्थानं यस्य स तथाभूतम्। आनन्देन तुन्दिलाः पिचण्डिलाः। 'तुन्दिलस्तुन्दिभस्तुन्दी बृहत्कुक्षिः पिचण्डिल' इत्यमरः। तेषां भावस्तत्ता तया किमपि अज्ञातकरणीयैः अविदितकार्यैरितरेतरमन्योन्यमालिङ्गद्भिः आश्लिष्यद्भिः अन्योन्यं। कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये इति द्विर्भावः। असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्य इति सुपः सुरादेशः। आस्फोटयद्भिः अङ्गुळस्फोटं कुर्वद्भिः अन्योन्यमपहसद्भिः अमराश्च गणाश्चेति द्वन्द्वः तैः देवैः प्रमथैश्चेत्यर्थः। उपसङ्गृह्यमाणे निपीड्यमाने चरणारविन्दे यस्य स तथाभूतं भगवन्तं चन्द्रशेखरमालक्ष्य दृष्ट्वा आनन्देन निर्भराः भरिताः गोविन्दो हरिः ब्रह्म पुरन्दर इन्द्रः एते आदयो येषां ते तथाभूताः देवास्सुराः बलिविरोचनादयः दानवाः असुराः सनकादयः सनकप्रभृतयः ब्रह्मर्षयः महर्षयश्च यथामति स्वस्य मतिमनतिक्रम्येत्यर्थः। स्तोतुं स्तुतिं कर्तुं आरेभिरे उपचक्रमिरे इत्यर्थः॥ **दिष्ट्येति** ॥ विषेण कालकूटेन भग्नाः भङ्गं प्राप्ताः वयं अद्येति शेषः। दिष्ट्या आनन्देन स्मः वर्तामहे। त्वया पीतं गळितं इदं गरळं दिष्ट्या आनन्देन वर्तते दिव्यस्थानलाभादिति भावः। त्वां भवन्तं नीलः कण्ठो यस्य स तथाभूतं गृणती अभिदधाना श्रुतिः। 'नमो नीलग्रीवाय च शितिकण्ठाय च' इति। 'त्रिलोचनं नीलकण्ठं प्रशान्तं' इत्यादिवेदविभागस्सार्थता अमृषाभूतार्था सती दिष्ट्या आनन्देन वर्तते। 'दिष्ट्या समुपजोषं चेत्यानन्देऽथान्तरेऽन्तरा' इत्यमरः। तथाचोक्तं देवीभागवते। 'ग्रीवां जग्राह जननी लोकानां हितमिच्छती। नीला ग्रीवा तदा जाता नीलग्रीवस्ततोऽभवत्' इति ॥ **पाषाणानिति** ॥ वैडूर्यमणिः वज्रमणिश्चेत्ये-

पाषाणान् सितनीलपीतहरितान् वैडूर्यवज्रादिकान्
कण्ठे वक्षसि मूर्ध्नि वा निदधतां का नाम तेन स्तुतिः ।
एतद्भूषणमेतदेव जगतां दुस्साधमुज्जीवनं
कण्ठे यद्भगवन्नियच्छसि सुखं काकोलमुच्छृङ्खलम् ॥ ३७ ॥

अद्याहं परिपालकोऽस्मि जगतामद्यैव धातात्मभूः
अद्येमे हरिदीश्वरा भुजबलैरद्योद्भटा दानवाः ।
अद्यैते चिरजीविनो मुनिवरास्तन्त्रैश्च मन्त्रैरपि
स्वामिन्नाकलयामहे तव यदा कण्ठं घनश्यामलम् ॥ ३८ ॥

शैलादिकृतनिषेवण कैलासशिखरभूषण तत्त्वार्थगोचर चन्द्रार्धशेखर शापायुधकुलार्थ्यसस्मितापाङ्ग कोपारुणकटाक्ष-

तौ आदी येषां ते तथा सितनीलपीतहरितान् श्वैत्यादिरूपतयेति भावः । मूर्ध्नि शिरोमणितयेति भावः । निदधतां दधानानां तेन का नाम स्तुतिः का वा स्तुतिरित्यर्थः । हे भगवन् साम्बमूर्ते उच्छृङ्खलं दुर्निरोधं काकोलं विषं । 'पुंसि क्लीबे च काकोलकालकूटहलाहला' इत्यमरः । कण्ठे गळे नियच्छसि निगृह्णासीति यत् धरसीति यावत् । एतत्कण्ठविषधारणं जगतां बाह्यान्तरलोकानामुज्जीवनं प्राणधारणं एतदेव इतरैरित्यादि । दुस्साधं सम्पादयितुमशक्यं भूषणमिति जानीम इति भावः ॥ अद्येति ॥ हे स्वामिन् अप्रच्युतैश्वर्यशालिन् परमेश्वर । स्वामिन्नैश्वर्ये इति निपातनात्साधुः । तव कण्ठं यदा घनो मेघः तद्वच्छ्यामलं नीलं । 'कालश्यामलमेचका' इत्यमरः । आकलयामहे ददृशिम । वर्तमानसामीप्ये वर्तमानवद्वेति लिडपवादोऽत्र लट्प्रत्ययः । तदादीत्यस्य अध्याहारः अद्येदानीमहं विष्णुः जगतां लोकानां परिपालकः अस्मि संवृत्तः अद्य एष आत्मभूः ब्रह्मा धाता निर्माता इमे एते इन्द्रादयः अद्य हरिदीश्वराः दिक्पतयः दानवाः बलिप्रभृतयः असुरा अद्येदानीं भुजबलैः बाहुबलैः उद्भटाः मत्ता इत्यर्थः । मुनिवराः व्यासादयः अद्य चिरजीविनः अथैकेन गद्येन सर्वविरचितस्तुतिप्रकारं बहुभिस्संबोधनान्तैः प्रदर्शयति ॥ शैलादीति ॥ शिलमुञ्छमत्तीति शिलादः । 'शिलमुञ्छः शिला प्रोक्त' इति भास्करः । तस्यापत्यं शैलादिः । अत इञिति इञ्प्रत्ययः । तेन कृतमनुष्ठितं निषेवणं सेवा यस्य स तस्य सम्बुद्धिः । कैलासस्य पर्वतविशेषस्य यच्छिखरं शृङ्गं तस्य भूषण अलङ्कारभूत । तत्त्वं परमात्मा अर्थः अभिधेयं येषां तान्युपनिषद्वाक्यानि तेषां गोचर विषयेत्यर्थः । वेदान्तवेद्यत्वादिति भावः । 'तत्त्वं विलम्बमानेऽर्थे स्वरूपे परमात्मनि' इति नानार्थमाला । 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति श्रुतेः । चन्द्रार्धं शेखरमापीडं यस्य तस्य सम्बुद्धिः । शापः आयुधं येषां ते शापायुधा ऋषयः तेषां यत्कुलं यूथं तेन अर्थ्यौ

**भस्मितानङ्ग ऊरीकृतविभूतिदिव्याङ्गराग गौरीपरिगृहीतसव्याङ्गभाग अङ्गानुषङ्गपावितनराखिलेश गङ्गातरङ्गभावितजटाप्रदेश वन्दनाभिरताखण्डल स्यन्दनायितभूमण्डल अक्रीतदासतापसकदम्ब चक्रीकृतार्कशीतकरबिम्ब आदृतपुराणवेतण्ड स्वीकृतसुमेरुकोदण्ड खर्वीकृतासुरमदानुपूर्वीविकास दर्वीकरेश्वरगृहीतमौर्वीविलास वीणामुनीन्द्रख्यापितगरिमपौरुष**

---

सम्प्रार्थ्यौ स्मितापाङ्गौ यस्य स तथाभूत। त्रिपुरसंहारार्थं हासस्य कामविनाशार्थं अपाङ्गस्य च प्रार्थनादिति भावः। कोपेन क्रोधेन अरुणौ रक्तौ यौ कटाक्षौ ताभ्यां भस्मितः विनाशितः अनङ्गः कामो यस्य स तथाभूतेति सम्बोधनान्तः। विभूतिः भस्मैव दिव्यः श्लाघ्योऽङ्गरागः गात्रविलेपनं ऊरीकृतः अङ्गीकृतः भस्मदिव्याङ्गरागो येन स तथाभूतेति पूर्ववत्सम्बोधनम्। तथाचोक्तं स्कान्दे 'भस्मोद्धूळितसर्वाङ्गं' इति। गौरी गिरिजा देवी तया परिगृहीतः स्वीकृतः सव्याङ्गभागः वामशरीरार्धं यस्य स तथाभूतेति पूर्ववत्। 'वामं शरीरे सव्यं स्यात्' इत्यमरः। तथा चोक्तम्। 'उमालङ्कृतवामाङ्गः किङ्किणीकृतवासुकिः' इति। अङ्गानुषङ्गोऽवयवसम्बन्धस्तेन पाविता पवित्रीकृता नरास्थिमयी माला स्रक् यस्य स तथाभूतेति पूर्ववत्। गङ्गायास्तरङ्गाः तैः भावितः अध्युषितः जटाप्रदेशः सटादेशो यस्य स तथाभूत। वन्दनं नमनं तस्मिन् अभिरत आसक्तः आखण्डल इन्द्रो यस्य स तथाभूतेति पूर्ववत्। स्यन्दनायितं रथवदाचरत् महीमण्डलं यस्य स तथाभूत। तथा चोक्तं वेदपादस्तवे। 'रथो भूः' इति। अक्रीताः वेतनादिभिः असम्भृताः दासाः कर्मकराः ये तापसा व्यासादयः तेषां कदम्बस्समूहः सोऽस्यास्तीति अर्श आदिभ्योऽजिति अच्प्रत्ययः। तस्य सम्बुद्धिः। तथा चोक्तम्। 'व्यासप्रष्ठा भुवनविदिता यस्य वाहाभिवाहा' इति। चक्रीकृतौ रथाङ्गीकृतौ अर्कशीतकरयोर्बिम्बौ मण्डलौ यस्य स तथाभूत। तदुक्तं जैमिनिस्तवे। 'रथाङ्गे चन्द्रार्कौ ब्रह्मा भवति सारथिः' इति। आदृतः पुराणवेतण्डः गजश्रेष्ठः गणपतिरिति यावत्। येन स तथाभूत। पुत्रत्वात्तस्येति भावः। स्वीकृतः विधृतः मेरुरेव कोदण्डः धनुर्येन स तथाभूत। तथा चोक्तम्। 'श्रीकण्ठो मेरुकोदण्डश्चण्डरापहरो हर' इति। खर्वीकृतः ह्रस्वीकृतः असुराणां शूरपद्मतारकप्रभृतिदानवानां सम्बन्धिनी या मदानुपूर्वी मदसन्ततिः तस्याः विकासो येन स तथाभूत। दर्वीकरेश्वरेण वासुकिना गृहीतः अङ्गीकृतः मौर्व्याः शिञ्जिन्याः विलासः यस्य स तथाभूत। तदुक्तं तत्रैव स्तोत्रे। 'रथो भूज्या फणी शौरिः शरश्चापो गिरिर्हयः। त्रयी रथाङ्गे चन्द्रार्कौ ब्रह्मा भवति सारथिः' इति। वीणापाणिश्चासौ मुनीन्द्रश्चेति शाकपार्थिवादित्वात्समासः। नारदस्तुम्बुरुरिति वा तेन ख्यापिते प्र-

**बाणाधिकारस्थापितपरमपूरुष अनिलाशनविहितनैपथ्य कमलासनविहितसारथ्य विश्वाधिकत्वपदालम्ब अश्वायिताद्यवचोगुम्भ कुन्दस्मयहरकान्तिप्रकर मन्दस्मितलवशान्तत्रिपुर नादबिन्दुकलाभिज्ञास्पदभूरिभद्र स्वेदबिन्दुलवाविर्भावितवीर-**

---

स्थापिते गरिम गौरवं च पौरुषं वीर्यं चेत्येते यस्य स तथाभूत । बाणस्य अधिकारः कृत्यं तस्मिन् स्थापितः परमपूरुषः श्रीहरिः येन स तथाभूत । अनिलाशनास्सर्पाः तैः विहितं नैपथ्यं प्रसाधनं यस्य स तथाभूत । 'आकल्पवेषो नैपथ्यं प्रतिकर्म प्रसाधनं' इत्यमरः । कमलासनो ब्रह्मा तेन विहितं अनुष्ठितं सारथ्यं सारथिकृत्यं यस्य स तथाभूत । त्रिपुरसंहारकाल इति भावः । विश्वेभ्यस्सर्वेभ्योऽधिक उत्तमः विश्वाधिकः तस्य भावः विश्वाधिकत्वं तदेव पदं लक्षणम् । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । तस्यालम्ब आश्रयः तस्य सम्बुद्धिः । सर्वोत्तमलक्षणलक्षितत्वात्तस्येति भावः । तथा चोक्तं पराशरपुराणे । 'अथातस्संप्रवक्ष्यामि देवताधिक्यमादरात् । यस्य स्मरणमात्रेण प्रसीदति महेश्वरः ॥ अचेतनेभ्यस्सर्वेभ्यश्चेतनाधिकता मुने । चेतनेषु मनुष्याश्च मनुष्येष्वधिका द्विजाः । द्विजेषु ब्राह्मणास्तेषु कुलीना अधिकाः स्मृताः ॥ तेभ्यो मनुष्यगन्धर्वा अधिका वेदवित्तम ॥ तेभ्योऽपि देवगन्धर्वाः पितरश्च ततः परं । कर्मदेवसमाह्वयाश्च तथा देवास्ततः परम् ॥ तेभ्य इन्द्रोऽधिकस्तस्मादधिकस्तु बृहस्पतिः । बृहस्पतेरधिप्राज्ञः प्रजानाथोऽधिकस्ततः ॥ प्रजापतेरपि ब्रह्मा ब्रह्मणो विष्णुरास्तिकाः । विष्णोरपि हरस्तस्मान्मायी साक्षान्महेश्वरः ॥ ततोऽधिकतरस्साक्षाच्छिवस्साम्बस्सनातनः । तदन्यद्विश्वमीशानस्स तु विश्वाधिकश्शिवः' इति । श्रुतिश्च । 'विश्वाधिको रुद्रो महर्षिः' इति । अधिकं ग्रन्थविस्तरभयान्न लिख्यते । अश्वायिताः आद्यवचोगुम्भाः यस्य स तथाभूत । इदमपि त्रिपुरसंहारकाल इति भावः । कुन्दानां कुन्दकुसुमानाम् । 'कुन्दं माध्ये च कुन्दो ना निधिभेदमुरद्विषोः' इति भास्करः । यः स्मयः गर्वः तस्य हरः अपहर्ता तस्य सम्बुद्धिः धावल्यातिशयादिति भावः । मन्दस्मितं मन्दहासः तस्य यो लेशः तेन शान्ताः त्रिपुरासुरा यस्य तथाभूत । हासमात्रेण त्रिपुरविनाशादिति भावः । नाद इति बिन्दुरिति कलेति अन्तःप्रणवस्यावयवविशेषा नादबिन्दुकलाः अभिजानन्तीति ते तथा तेषामास्पद प्राप्यस्थानभूत इत्यर्थः । अत्रायं विवेकः । ब्रह्मप्रणवो द्विविधः सृष्टिप्रणवः संहारप्रणवश्चेति । ततो द्विविधः स एव ब्रह्मप्रणवः पुनः अन्तःप्रणवः बहिःप्रणवः उभयात्मकप्रणवश्चेति त्रिविधः । स चान्तःप्रणवोऽष्टविधः अकारः उकारः मकारः अर्धमात्रा नादो बिन्दुः कला कलातीता चेति । सर्वमेतन्नारदपरिव्राजकोपनिषदि स्पष्टम् । द्वितीयाश्वासोपयोगितया कलाविभागोऽत्र लिख्यते अकारः प्रथमा कला उकारो द्वितीया कला मकारस्तृतीया कला अर्धमात्रा चतुर्थी नादः पञ्चमी बिन्दुष्षष्ठी क-

भद्र त्रस्तरक्षापरतन्त्र ध्वस्तदक्षाध्वरतन्त्र किरीटानीतविविधवेधःकपाल चपेटाघातशिथिलभास्वत्कपोल जृम्भितविक्रमोद्दण्ड स्तम्भितचक्रिदोर्दण्ड ब्रह्मस्तवोपचितमहाहर्ष जिह्मस्वभावजनदुराधर्ष वसुन्धराधरसुतोपलालन जरन्धरासुरशिरोनिपातन कोपाहतपतितान्तक व्यापादितसमदान्धक वर-

ला सप्तमी कलातीता अष्टमी कलाशान्तिः नवमी शान्त्यतीता दशमी उन्मनीकला एकादशी मनोन्मनी द्वादशी पुरी त्रयोदशी मध्यमा चतुर्दशी पश्यन्ती पञ्चदशी परा षोडशी वैखरीत्येतत्सर्वं नारदपरिव्राजकोपनिषदुक्तं लिखितं मयेति । तत्स्वरूपस्य गुरुमुखादेव अवगन्तव्यत्वाद्विस्तरस्तु न कृतः सर्वमेतत् प्रणवनादबिन्दूपनिषदि स्पष्टम् । भूरीणि अनेकानि भद्राणि मङ्गलानि यस्य स तस्य सम्बुद्धिः । 'श्वश्रेयसं शिवं भद्रं' इत्यमरः । स्वेदः स्वेदोदकं तस्य बिन्दोर्यो लवः तेनाविर्भूतः वीरभद्रः यस्य स तथाभूत । श्रीभगवतो जटाघाताद्वीरभद्रः सञ्जात इति वर्तते । तथापि देवीभागवतानुरोधात्कविनेत्थमुक्तमित्यनुसन्धेयम् । त्रस्ताः संसारत्रस्ताः अस्मदादयः तेषां रक्षा रक्षणं तस्यै परतन्त्रः पराधीनः तस्य सम्बुद्धिः । 'परतन्त्रः पराधीन' इत्यमरः । ध्वस्तं नाशितं दक्षस्य प्रजापतेः अध्वरतन्त्रं यागतन्त्रं येन स तथाभूत । किरीटे निहितानि विविधानि बहुविधानि वेधःकपालानि कर्पराः शिरोस्थिशकलानीत्यर्थः । 'स्यात्कर्परः कपालोऽस्त्री कीकसङ्कुल्यमस्थि च' इत्यमरः । तानि यस्य तस्य सम्बुद्धिः । चपेटः विस्तृताङ्गुलिकरः तेनाघातः प्रहारः तेन शिथिलौ पतद्दन्तौ भास्वतस्सूर्यस्य कपोलौ गण्डदेशौ यस्य तस्य सम्बुद्धिः । 'अधस्ताच्चिबुकं गण्डकपोलौ तत्परा हनुः' इत्यमरः । तदुक्तं दक्षोपाख्याने । 'पूष्णो दशनरेखां सुदीप्तां मुक्तावलीमिव । जघान धनुषः कोट्या स तेनास्पष्टवागभूत्' इति । जृम्भितः विजृम्भितः प्रकटीकृत इति यावत् । विक्रमः पराक्रमो यैस्ते तथाभूताः दोर्दण्डा भुजदण्डा यस्य स तस्य सम्बुद्धिः । स्तम्भितः स्तब्धीकृतः चक्रिणः श्रीहरेः दोर्दण्डो भुजदण्डो येन स तथाभूत । तथा चोक्तं देवीभागवते । 'स ननाद करं तस्य प्रोद्धृतं मधुविद्विषः । पश्यतां दिवि सिद्धानां स्तम्भयामास हुङ्कृतिः' इति । ब्रह्मविरचितः यः स्तवः स्तुतिः तेनोपचितः अभिवृद्धः महान् हर्षो यस्य स तथाभूत । जिह्मः कुटिलः स्वभावो येषां ते जिह्मस्वभावास्तथाविधा ये जनाः तैः दुराधर्ष धर्षयितुमशक्येत्यर्थः । दुष्टासुरप्रयुक्ताभिभवरहित इति भावः । वसुन्धराधरः हिमवान् तस्य सुता उमा तद्विरचितं उपलालनं यस्येति शाकपार्थिवादित्वादुत्तरपदलोपबहुव्रीहिः । जलन्धर इति कश्चनासुरः तस्य शिरः उत्तमाङ्गं तस्य विनिपातन पातयितरित्यर्थः । कोपेन क्रोधेन आहतः सन्ताडितः अत एव प-

**संहननजटासम्भूतपरभागगौर नरसिंहनियमनालम्बितशरभावतार प्रपन्नभयमोचन विभिन्नभगलोचन प्रपञ्चदहनकारक विरिञ्चवदनहारक सञ्चारपूतमन्दर पञ्चायुधातिसुन्दर अपनीतदक्षानन अभिनीतभिक्षाटन धारितमेरुकाननकुसुममालिकालङ्कार दारितदारुकावनकुलपालिकाहङ्कार समावर्जितभक्तमानसानुसार परावर्तितदृप्ततापसाभिचार वैयासिकोक्तिगोचर वैयाघ्रकृत्तिभासुर गतपरिकर्मगणस्पृह कृतकरिचर्मपरिग्रह स्व-**

---

तितः निपतितः अन्तको यमः यस्य स तथाभूत ! व्यापादितः विहिंसितः समदः मदसहितः अन्धकासुरो येन स तथाभूत । परमुत्कृष्टं यत्संहननं शरीरम् । 'गात्रं वपुस्संहननं शरीरं वर्ष्म विग्रहः' इत्यमरः । तेन जटाभ्यस्सकाशात् सम्भूतः सम्पादितः परभागः वर्णोत्कर्षः यस्य स तथाभूतश्चासौ गौरश्चेति कर्मधारयः तस्य सम्बुद्धिः । नृसिंहस्य नृसिंहमूर्तेर्नियमनं निग्रहः तदर्थमवलम्बितः गृहीतः शरभस्यावतारो यस्य स तथाभूत । प्रपन्नानां भयं तस्य मोचन मोचक । विभिन्ने उत्पाटिते भगस्य सूर्यमूर्तिभेदस्य विलोचने येन स तथाभूत । वीरभद्रावतार इति भावः । तथा चोक्तं दक्षोपाख्याने । 'भगस्य नेत्रे विपुले शतपत्रसमप्रभे । प्रसह्योत्पाटयामास वीरभद्रः प्रतापवान्' इति । प्रपञ्चस्य दहनं भस्मीभवनं तस्य कारकः कर्ता तस्य सम्बुद्धिः प्रळयकालरुद्रादिरूपेणेति भावः । विरिञ्चेः वदनं पञ्चमवक्त्रं तस्य हारकः अपहर्ता छेत्तेति यावत् । तस्य सम्बुद्धिः । पञ्चायुधः मदनः तद्वदतिसुन्दर मोहन श्रीविष्णुमोहिन्यवतारे कामकोटिसौन्दर्यं दधारेति भावः । सञ्चारेण पूतः पवित्रः मन्दरो यस्य स तथाभूत । अपनीतं अपहृतं दक्षस्य प्रजापतेराननं यस्य स तथाभूत । कामेश्वरावतार इति भावः । अभिनीतं अभिनयं कृतं भिक्षार्थं अटनं सञ्चारः येन स तथाभूत । धारितः धृतः मेरुकाननं मेरुस्थितोद्यानं तस्य कुसुममालिकालङ्कारः येन स तथाभूत । दारितो विदारितः दारुकासंज्ञिकवने याः कुलपालिकाः कुलस्त्रियः पतिव्रता इति यावत् । तासामहङ्कारो येन स तथाभूत । सुन्दरेश्वरावतारेणेति भावः । समावर्जितानि विषयेभ्यः प्रत्याहृतानि यानि भक्तमानसानि तेषामनुसारः अनुसरणं यस्य स तथाभूत । परावर्तितः अभिनिवर्तितः दृप्ततापसानां दारुकावनस्थतपोमदमत्तऋषीणां अभिचारः आभिचारिकं येन स तथाभूत । इदं कूर्मपुराणप्रसिद्धम् । सुन्दरेश्वरावतारे मोहितानां स्वस्त्रीणां पतिव्रतात्वशैथिल्यात्कुपिताः दारुकावनवासिनो दृप्ततापसाः महेश्वरं प्रत्याभिचारिकयागं चक्रुरिति । वैयासिकोक्तयः ब्रह्मसूत्राणि तेषां गोचर विषयीभूत । तत्प्रतिपाद्यत्वादिति भावः । वैयाघ्री च सा कृत्तिश्चेति कर्मधारये स्त्रियाः पुंवदित्यादिना पुंवद्भावः । 'अजिनं

ध्यानशमितपातकप्रसङ्ग विध्यादिविबुधपूजितस्वलिङ्ग शान्तमानसानुरोध क्षान्ततापसापराध फालानलवलनभीषण हालाहलगरळभूषण अरुणांशुकन्दळमणिसुन्दरफणिकुण्डल चरणाग्रयन्त्रितदशकन्धरभुजमण्डल आनन्दताण्डवनटनानुबन्ध गोविन्दपूजितचरणारविन्द विनयानतामृताशनसहस्राहितप्रमोद तनयाभिलाषिमाधवतपस्याकृतप्रसाद दिव्यास्त्रदानतोषितभृगुसूनुनम्य सव्यार्धभागभावितहरिरूपरम्य वन्दितागतश्रुति-

चर्म कृत्तिः स्त्री' इत्यमरः। तया भासुर प्रकाशमानेत्यर्थः। अत एव गता याता परिकर्मणि आभरणादिधारणे स्पृहेच्छा यस्य स तथाभूत। अत एव कृतः रचितः करिचर्मणः परिग्रहः स्वीकारो येन स तथाभूत। स्वध्यानेन शमितः विनाशितः पातकानां प्रसङ्गो यस्य स तथाभूत। विध्यादयो ब्रह्मादयो ये विबुधाः देवाः तैः पूजितानि स्वलिङ्गानि यस्य स तथाभूत। तथा चोक्तं सारसङ्ग्रहदीपिकायाम्। 'ब्रह्मादयस्सुरास्सर्वे मुनयो यक्षराक्षसाः। गन्धर्वाश्चारणास्सिद्धा दैतेया दानवास्तदा॥ पूजयित्वा महालिङ्गं भक्त्या सर्वार्थसिद्धिदम्। प्राप्ताः कामानभीष्टांश्च तांस्तान्सर्वजनप्रियान्' इति। शान्तमानसाः उपशान्तचित्ताः तेषामनुरोधः अनुसरणं यस्य स तथाभूत। क्षान्तः मर्षितः तापसानां अवरोधो येन स तथाभूत। फालानलः फालनयनाग्निः तस्य यद्वलनं चलनं तेन भीषण भयङ्करेत्यर्थः। हालाहलः गळभूषणं कण्ठाभरणं यस्य स तथाभूत। अरुणानि अंशूनां दीप्तीनां कन्दळानि येषां ते तथाभूताः मणयः येषां तथाभूता ये फणिनः सर्पाः त एव कुण्डलानि कर्णभूषणानि यस्य स तथाभूत। चरणाग्रेण यन्त्रितं निगृहीतं दशकन्धरस्य रावणस्य भुजानां मण्डलं यस्य स तथाभूत। कैलासोद्धरणसमय इति भावः। आनन्देन निरतिशयसुखेन यत्ताण्डवं नटनं नृत्तानुकृतिस्तस्यानुबन्धस्सम्बन्धो यस्य स तथाभूत। गोविन्देन वासुदेवेन पूजिते चरणारविन्दे यस्य स तथाभूत। तथा चोक्तं देवीभागवते। 'प्रायशश्शम्भुभक्तेषु विष्णो त्वं प्रोच्यसे भवान्। एकोनेऽब्जसहस्रे स्वं ददौ नेत्राम्बुजं भवान्' इति। श्रीहरिं प्रति वीरभद्रवचनमेतत्। विनयेन आनताः प्रणता ये अमृताशनाः देवास्तेषां यानि सहस्राणि तैराहितः सम्पादितः प्रमोदः आनन्दः यस्मात्स इति तथाभूत। तनयाभिलाषी पुत्रार्थी यो माधवः श्रीकृष्णः तस्य या तपस्या तपः तया कृतः प्रसादः अनुग्रहो यस्य स तथाभूत। तथा चोक्तम्। 'शिवानुग्रहसञ्जातः पुत्रस्साम्ब इति स्मृतः' इति। दिव्यास्त्रस्य कुठाररूपस्य प्रदानेन वितरणेन तोषितो हर्षितः यो भृगुसूनुः परशुरामः तस्य नम्यः प्रणामभाजनं तस्य सम्बुद्धिः। सव्यार्धभागे वामशरीरार्धभागे भावितं स्थापितं यद्धरिरूपं तेन

सार नन्दिपालितप्रतिहार बुद्धनानार्थरहस्यशतमन्युमुख्यामर-भक्तिगोचर दुग्धपानार्थतपस्यदुपमन्युविश्राणितदुग्धसागर अ-धिकसञ्चालितदुष्टपीडाचरण हरिविरिञ्चापरिदृष्टचूडाचरण अ-ञ्चद्धर्मवृषाधार पञ्चब्रह्ममयाकार वेदाश्ववरोपहितस्वाम्य श्वे-ताश्वतरोपनिषद्गम्य चापल्यरहितरम्यस्वभाव कैवल्यवचनग-म्यप्रभाव अखर्वमखाधिराज्यप्रताप अथर्वशिखानुवाद्यस्वरूप अगर्वनरस्तुतिमुदित अथर्वशिरःश्रुतिविदित नादान्तविभाव-

रम्य रमणीयेत्यर्थः । हरिहरक्षेत्रे अद्यापि शिवः हरिहरात्मनैव वर्तत इति प्रसि-द्धिः । वन्दिनां स्तुतिपाठकानां भावो वन्दिता । 'वन्दिनः स्तुतिपाठकाः' इत्यम-रः । तया आगता याः श्रुतयः ऋगादयः ताः धरतीति धरः तस्य सम्बुद्धिः । श्रुतीनां वन्दित्वं श्रुतिगीतासु भागवते उक्तम् । नन्दी नन्दीश्वरस्तेन पालितः रक्षितः प्रतीहारः गृहद्वारं यस्य स तथाभूत । बुद्धं विदितं नानार्थानां नानाप-दार्थानां रहस्यं येन स तथाभूत । सर्वज्ञत्वात्तस्येति भावः । शतमन्युरिन्द्रः मु-ख्यो येषां तथाभूताः ये अमराः देवाः तेषां भक्तेरनुरागविशेषस्य गोचर आस्प-दभूत इत्यर्थः । दुग्धपानार्थं तपस्यन् यः उपमन्युः गन्धर्वबालः तस्मै विश्राणि-तः वितीर्णः क्षीरसागरः येन स तथाभूत । अधिकमत्यन्तं चालिताः । णिज-न्तात्कर्तरि क्तः । सन्मार्गाज्जनान् चालयन्त इत्यर्थः । ये दुष्टास्तेषां पीडाकरण उपद्रवकारिन् । हरिविरिञ्चाभ्यां विष्णुब्रह्मभ्यां अपरिदृष्टौ चूडाचरणौ यस्य स तथा-भूत । महालिङ्गोद्भवसमय इति भावः । अञ्चन् सञ्चरन् यो धर्मरूपो वृषो वृष-भः स आधारो यस्य स तथाभूत । अधर्मस्य पापस्य प्रक्षाळनमपनोदनं तस्मै आदर प्रसीद । महादेवमन्तरा पापापनोदनं न भवतीति भावः । पञ्चब्रह्ममयाः सद्योजातवामदेवादिस्वरूपाः आकारं यस्य स तथाभूत । वेदा एवाश्ववराः तै-रुपहितं विधृतं स्वाम्यं यस्य स तथाभूत । श्वेताश्वतरसंज्ञिका या उपनिषत् तया गम्य ज्ञेय । चापल्यं इन्द्रियलौल्यं तद्रहिताः ये मुनयः तैर्गम्यः वेद्यः स्वभावो यस्य स तथाभूत । कैवल्यवचनानि कैवल्योपनिषद्वचांसि उमासहायमित्यादीनि तैर्ग-म्यः प्रभावः स्वरूपं यस्य स तथाभूत । अखर्वौ अनल्पौ मखाधिराज्यं यागा-धिपत्यं तच्च प्रतापश्चेत्येतौ यस्य स तथाभूत । 'आ वो राजानमध्वरस्य रुद्रं होतारं' इति श्रुतेः । अथर्वशिखा नाम काचिदुपनिषत् तया प्रतिपाद्यं स्वरूपं यस्य स तथाभूत । अविद्यमानो गर्वो यस्य स तथाभूतो यो नरोऽर्जुनः तत्कृत-या स्तुत्या मुदित हृष्ट । अर्जुनस्य पाशुपतास्त्रलाभावसर इति भावः । अथर्वशि-खा नाम पञ्चरुद्रान्तर्गता काचन उपनिषत् तन्नामिका या श्रुतिः तया विदित ज्ञात । नादो नाम प्रणवचरमावयवस्तस्यान्तेऽवसाने विभावनीय ध्येयस्वरूपेत्य-

**नीय वेदान्तविबोधनीय प्रणतार्तिहर प्रणवार्थसार मुग्धलावण्याधार शुद्धचैतन्याकार आशीविषधारक काशीपुरनायक हृदम्बुजकृतविलास चिदम्बरकृतनिवास आकर्णचलितापाङ्ग गोकर्णरचितासङ्ग घोरासुरपुरधूमकेतुस्मित वाराकरगतरामसेतुस्थित रक्षणलीलाविलास दक्षिणकैलासवास आताम्रलोलनयन एकाम्रमूलभवन आभीलविधुरसेवन श्रीशैलशिखरपावन आद्राक्षमधुरवाग्गुम्भ रुद्राक्षरुचिरदोःस्तम्भ कालकण्ठरुचिघटितलावण्य नीलकण्ठमखिनिहितकारुण्य सेवापरत-**

र्थः। वेदान्तैरुपनिषद्भिः विबोधनीय विज्ञेयेत्यर्थः। प्रणतानामस्मदादीनां आर्तिहर पीडाविनिवारकेत्यर्थः। प्रणवस्य ओङ्कारस्य अर्थभूतश्चासौ सारश्चेति कर्मधारयः तस्य सम्बुद्धिः। मुग्धस्सुन्दरश्चासौ लावण्यस्याधारश्चेति समानाधिकरणसमासः। तस्य सम्बुद्धिः। शुद्धः रजस्तमोभ्यामसंमिश्रः चैतन्यस्याकारः स्वरूपं यस्य स तथाभूत। आशीविषाणां सर्पाणां धारको धर्ता तस्य सम्बुद्धिः। आभरणत्वेनेति भावः। काशीपुरस्य वाराणस्याः नायक नाथ। हृदम्बुजे हृदयकमले गतः प्राप्तः विलासः अभिव्यक्तिर्यस्य स तथाभूत। चिदम्बरं चिदम्बरक्षेत्रं तस्मिन् कृतः रचितः निवासः आवासः यस्य स तथाभूत। आकर्णं कर्णावधि चलितावपाङ्गौ यस्य स तथाभूत। गोकर्णं पश्चिमसमुद्रतीरवृत्तिगोकर्णक्षेत्रं तस्मिन् रचितः आसङ्गः आसक्तिर्येन स तथाभूत। तत्र महाबलिस्वामिरूपेणावस्थानादिति भावः। घोराः भयङ्कराः येऽसुराः तेषां पुरं तस्य धूमकेतुरूपं उत्पातरूपं स्मितं हासो यस्य स तथाभूत। 'अग्न्युत्पातौ धूमकेतू' इत्यमरः। वाराशिः दक्षिणसमुद्रः तं गतः प्राप्तः रामकृतो यः सेतुः तस्मिन् स्थितः तस्य सम्बुद्धिः। रामेश्वररूपेणेति भावः। रक्षणलीलाया विकासो यस्य स तथाभूत। दक्षिणकैलासः काळहस्तिक्षेत्रं तस्मिन् वासः आवासः यस्य स तथाभूत। आताम्रे ईषदरुणे लोले चञ्चले नयने यस्य स तथाभूत। चन्द्रसूर्यरूपत्वान्नयनयोश्चाञ्चल्यमिति भावः। एकमत्यन्तं आम्रस्य चूतस्य मूलं भवनं निकेतनं यस्य स तथाभूत। काञ्चीक्षेत्रे चूतवृक्षमूले एकाम्रेश्वररूपेणावस्थानादिति भावः। अभिलषितमपेक्षितं विधुना विष्णुना सेवनं यस्य स तथाभूत। 'विधुर्विष्णौ चन्द्रमसि परिच्छेदे बलेऽवधिः' इत्यमरः। श्रीशैलः श्रीशैलसंज्ञको गिरिः तच्छिखरं पावयति पवित्रयतीति तथाभूत। द्राक्षावन्मधुराः वाग्गुम्भाः वाक्सन्दर्भाः यस्य स तथाभूत। रुद्राक्षाः रुद्राक्षमणयः तैः रुचिराः मनोहराः दोःस्तम्भाः बाहुदण्डा यस्य स थाभूत। काला श्यामला या कण्ठस्य रुचिः कान्तिः तया घटितं सम्बद्धं लाव

न्त्रपालक शैवागमतन्त्रकारक सर्गस्थितिसंहृतिकार्यत्रयस्थेय भर्गश्रुतियन्त्रितगायत्र्यनुसन्धेय अध्यासितवरनिकुञ्जगृहहिमाहार्य अध्यापितहरिविरिञ्चिमुखशिवाचार्य अर्चितानन्तविहार सच्चिदानन्दशरीर विजयी भव विजयी भव ।

भुञ्जीथा न हलाहलं यदि महादेव त्वमेवंविधं
भुञ्जीरन् किमिमे सुराश्चरुपुरोडाशादिहव्यं मखे ।
आसीथा न यदि स्वयं त्रितृवणे भूतानि सम्मोहयन्
आसीरन् किमिमे जनास्सुकृतिनो हर्म्येषु सौधेषु च ॥

ण्यं सौन्दर्यं यस्य स तथाभूत । नीलकण्ठमखी एतद्ग्रन्थकर्तृनीलकण्ठयज्वा तस्मिन्निहितं आहितं कारुण्यं करुणा येन स तथाभूत । सेवापरतन्त्रः पावकः अग्निः यस्य स तथाभूत । अग्निस्त्वागत्य नेत्ररूपेण स्थित्वा शिवं सेवत इति भावः । शैवानि शिवसम्बन्धीनि ये आगमाः यानि तन्त्राणि च सिद्धान्ताश्च । 'तन्त्रं प्रधाने सिद्धान्त' इत्यमरः । तयोः कारक. निर्माता तस्य सम्बुद्धिः । तथा चोक्तं कूर्मपुराणे । 'तस्माद्वै वेदबाह्यानां रक्षणार्थं च पापिनाम् । विमोहनाय शास्त्राणि करिष्यावो वृषध्वज ॥ एवं सञ्चोदितो रुद्रः माधवेन मुरारिणा । चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ॥' इति । सर्गस्थितिसंहृतयः सृष्टिस्थितिप्रळयाः एव कार्याणि तेषां त्रये त्रितये स्थेय स्थिरतरेत्यर्थः । 'स्थास्नुस्थिरतरस्थेयानि' इत्यमरः । श्रूयत इति श्रुतिरिति व्युत्पत्त्या भर्गश्रुतिः भर्गपदं तया यन्त्रिता या गायत्री सूर्यदेवताकगायत्री तया अनुध्येय ध्यातव्येत्यर्थः । अध्यासितः आश्रयीकृतः वरनिकुञ्जगृहयुक्तः हिमाहार्यो हिमवत्पर्वतो येन स तथाभूत । 'अहार्यधरपर्वताः' इत्यमरः । अध्यापिताः हरिविरिञ्चिप्रमुखाः विष्णुब्रह्मप्रभृतयः शैवाचार्याः शैवशास्त्रव्याख्यातारः येन स तथाभूत । 'मन्त्रव्याख्याकृदाचार्यः' इत्यमरः । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मा' इति श्रुतेः । अनन्ताः असङ्ख्येया विहाराः विहृतयो यस्य सः अर्चितश्चासौ अनन्तविहारश्चेति कर्मधारयः । तस्य सम्बुद्धिः । सन्तौ अबाध्यौ यौ चिदानन्दौ तावेव शरीरं यस्य स तथाभूत । विजयस्सर्वोत्कर्षस्सोऽस्यास्तीति विजयी भव विजयी भवेति द्विरुक्तिः सकलपुराणार्थसङ्ग्राहकग्रन्थसमाप्तिद्योतनाय ॥ **भुञ्जीथा इति** ॥ हे महादेव त्वं एवंविधं इत्थंप्रकारं जगद्विनाशकारणमिति भावः । हालाहलं विषं न भुञ्जीथा यदि भोजनं कुरुष्व न यदीत्यर्थः । इमे परिदृश्यमानाः इन्द्रादयस्सुराः मखेषु यागेषु । 'सप्ततन्तुर्मखः क्रतुः' इत्यमरः । चरुपुरोडाशादिकं हव्यं होमद्रव्यं भुञ्जीरन् भोजनं कुर्वीरन् किमित्यर्थः । यजमानदेवयजनयोरुभयोर्गरळेन विनाशो भवेदिति भावः ।

किं बहुना।

त्वत्प्रसूतास्त्वया गुप्तास्त्वया व्यापारिता वयम्।
त्वां विदन्तोऽविदन्तो वा त्वामेव प्रीणयामहे॥ ४०॥'

इति स्तुवतो देवान् पुरशासनः पुनरित्थमनुशशास।

'पुत्रा यूयं भुवनविदिता ब्रह्मनारायणेशाः
दासा देवाश्शतमखमुखा दानवेशास्ततोऽपि।
कस्यान्यस्य व्यसनमहरं कालकूटं निगृह्णन्
लज्जे भूयः स्तुतिषु भवतां व्यापृतः स्वे कुटुम्बे॥

---

स्वयं त्वमित्यस्यानुषङ्गः। भूतानि। 'भूतं न्याये समे प्राप्ते यथार्थातीतयोरपि। क्लीबे त्वयं पिशाचादौ' इति नानार्थमाला। भेताळादिगणान् संमोहयन् मोहं प्रापयन्। पितृवणे श्मशाने। 'श्मशानं स्यात्पितृवणं' इत्यमरः। नासीथा यदि न वर्तसे चेदित्यर्थः। सुकृतिनः पुण्यवन्तः इमे सुरादयः इन्द्रादयः रम्येषु रमणीयेषु हर्म्येषु प्रासादेषु आसीरन् वर्तेरन् किमित्यर्थः। यद्येवं त्वं न कुर्यास्तदा भेताळादयः पुरग्रामादीन् प्रविश्य सर्वान् भक्षयेयुरिति भावः॥ **किं बहुनेति**॥ वयं त्वत्प्रसूताः त्वया उत्पादिताः पूर्वमिति भावः। त्वया गुप्ताः संरक्षिताः इदानीमिति भावः। त्वया भवता व्यापारिताः भविष्याम इति शेषः। त्वां विदन्तः जानन्तः अविदन्तः। तत्त्वतः प्रीणयामह इति पाठे नमोभिरिति शेषः। अजानन्तो वा त्वमेव प्रणमामः नमस्कुर्महे सर्वथापि त्वच्चरणे न्यस्तात्मान इति भावः॥ **इतीति**॥ इतीत्थं स्तुवतः स्तुतिं कुर्वतो देवान् ब्रह्मविष्ण्वादीन् पुनः इत्थं पुरशासनः त्रिपुरान्तकः अनुशशास शिक्षितवानित्यर्थः॥ **पुत्रा इति**॥ ब्रह्मनारायणाद्याः यूयं भुवनेषु लोकेषु विदिताः प्रख्याताः ममेत्यादिः। पुत्रास्तनया इत्यर्थः। तथा चोक्तं वायवीयसंहितायाम्। 'त्रयस्ते कारणात्मानस्साक्षाज्जाता महेश्वरात्। विष्णुर्जातोऽस्य वामाङ्गे ब्रह्मा त्वस्य तु दक्षिणे॥ पृष्ठदेशे महेशानः त्रीन् पुत्रानसृजत् प्रभुः' इति। शतमखमुखा देवा इन्द्रादयः देवाः सुराः दासाः भृत्याः। तथा चोक्तम्। 'शाठीपालाश्शतमखमुखाश्चन्दनद्रुमनोभूः' इति। दानवेशाः बलिबाणप्रभृतयः असुरश्रेष्ठाः ततोऽपि देवेभ्योऽपीत्यर्थः। दासाः अतिशयितभृत्या इत्यर्थः। 'भृत्ये दासेरदासेयदासगोप्यकचेटकाः' इत्यमरः। बाणरावणबलिविभीषणादीनां पारिषदकोटिप्रविष्टत्वाद्दासतरत्वमिति भावः। कालकूटं विषराजं निगृह्णन् निग्रहं कुर्वन्नहम्भावेनेति भावः। अन्यस्य स्वीयव्यतिरिक्तस्य कस्य व्यसनं दुःखं अहरं अपहृतवानस्मीति भावः। परकीयस्य एतमुपकारं न कृतवानिति भावः। स्वे स्वीये कुटुम्बे पोष्यवर्गे व्यापृतः व्यग्रः अहं भवतां स्तुतिषु भवत्कर्तृकस्तो-

तदलमतिक्रामति कालो मथनस्य । वत्सा देवासुराः, वत्स भो-श्चतुरानन, शृणुतावहिताः परमुपदेशमिमम् ।

अमुं यं वीक्षध्वे पुरुषमरविन्देक्षणमसौ
सवित्री सर्वेषामपि च भवतां मत्प्रियतमा ।
मदाज्ञामस्याज्ञां मम भजनमेतस्य भजनं
विजानन्तो यूयं विनमत तथास्मिन्मयि यथा ॥ ४२ ॥

भगवन्नरविन्दलोचन जानामि भवतो मयि प्रीतिमन्यादृशीम् । काममग्रे सहैवास्वहे । कालस्त्वयमेषामत्येति सुधाप्रदानस्य तदद्य वियोगेन मे नार्हसि वैक्लव्यमधिगन्तुम् ।

भवानिति भवानीति पश्य भेदः कियानयम् ।
विग्रहं प्राप्तयोरेकं विश्लेषः क इवावयोः ॥ ४३ ॥'

---

त्रेष्वित्यर्थः । भूयः अधिकं लज्जे जिह्रेमीत्यर्थः ॥ **तदिति** ॥ तत्तस्मात् मथनस्य कालः अवसरः अतिक्रामति अतिगच्छतीत्यर्थः । अलं स्तवनेन साध्यं नास्तीत्यर्थः ॥ **वत्सा इति** ॥ वत्साः किशोराः हे देवासुराः वत्स भो चतुरानन हे विरिञ्च इत्यर्थः । यूयं अवहिताः अवधानसहिताः परमुत्कृष्टं इमं मदीयमिति भावः । उपदेशं हितवचनं श्रोतव्यं शृणुध्वमित्यर्थः ॥ **अमुमिति** ॥ अरविन्दे इव ईक्षणे नेत्रे यस्य स तथाभूतममुं परिदृश्यमानं यं विष्णुं पुरुषं पुरुषाकृतिं वीक्षध्वे पश्यथेत्यर्थः । असौ विष्णुः मत्प्रियतमा ममात्यन्तदयिता सर्वेषां च भवतामपि सवित्री जनयत्रीत्यर्थः । तथा चोक्तम् । 'योऽयं चकास्ति गगनार्णवरत्नकान्तिर्योऽयं सुरासुरगुरुः पुरुषः पुराणः । यद्वा ममार्धमिदमन्तकमूदनस्य देवि त्वमेव स इति प्रतिपादयन्ति' इति । 'कदाचिल्लालिता देवी धृतश्रीविष्णुविग्रहा । वेणुनादविनोदेन करोति विवशं जगत्' इत्यादिवचनैः पार्वतीविष्ण्वोरभेदादिति भावः । ततः कारणाद्यूयं चतुराननप्रभृतयः भवन्तः अस्य श्रीविष्णोः आज्ञां मदाज्ञां मन्निदेश इति एतस्य हरेर्भजनं मम परशिवस्य भजनं सेवनं अथवा अस्याज्ञां अस्य भजनं मम भजनमित्यन्वयः । विजानन्तः विदन्तस्सन्तः मयि नमनादि यथा कुरुथ तथा अस्मिन् विष्णौ विनमत विशेषेण नमस्कुरुतेत्यर्थः ॥ **भगवन्निति** ॥ हे भगवन् अरविन्दलोचन पुण्डरीकाक्ष अन्यादृशीं असदृशीं भवतो मयि प्रीतिं भक्तिं जानामि वेद्मीत्यर्थः ॥ **काममिति** ॥ अग्रे समुद्रमथनानन्तरं काममत्यन्तं सहैव मिळित्वैव आस्वहे वर्तावहे ॥ **काल इति** ॥ एषां देवानां सुधाप्रधानस्य अमृतप्रधानस्य मथनस्य कालः समयस्तु अत्येति अतिगच्छतीत्यर्थः । तत्तस्मादद्य मे वियोगेन विश्लेषेण वैक्लव्यं खेदमधिगन्तुं नार्हसि वियोगखेदस्य अनवसर इति भावः ॥ **भवानिति** ॥

इति प्रसादयन्निन्दुशेखरः, प्रदक्षिणीकृत्य सहस्रशः, पादावाधाय मूर्ध्नि, परिरभ्य निर्भरं बाहुभ्यां, विसृष्टः कथञ्चिदपि विश्वम्भरेण, पश्यत्सु देवासुरेषु, पार्वतीसहितस्तिरोदधे। तदनु च।

स्तुवन्तो दिव्याभिः स्तुतिभिरभिसङ्गम्य शतशः
स्पृशन्तः कोटीरैश्चरणकमलं कैटभभिदः।
स्मरन्तः श्रीकण्ठं सममसुरवीरैर्दिविचराः
प्रहृष्यन्तः सिन्धुं प्रमथितुमुपाक्रंसत पुनः॥ ४४॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकशतप्रबन्धनिर्वाहकश्रीमन्महाव्रतयाजिश्रीमदप्पयदीक्षितसोदर्यश्रीमदाचान्दीक्षितपौत्रेण नारायणदीक्षितात्मजेन श्रीभूमिदेवीगर्भसंभवेन श्रीनीलकण्ठदीक्षितेन विरचिते श्रीनीलकण्ठविजयनाम्नि चम्पुकाव्ये चतुर्थ आश्वासः॥

भवानिति विष्णुरिति भवानीति पार्वतीत्येवम्प्रकारः अयं भेदः वैरूप्यं कियान् ईकारमन्तरा भवान्भवानीतिशब्दानुपूर्व्योस्सर्वतस्साम्यादिति भावः। एकविग्रहं शरीरं प्राप्तयोरावयोः विश्लेषः वियोगः कः क्केत्यर्थः॥ **इतीति**॥ इति इत्थं प्रसादयन् अनुग्रहं कुर्वन् इन्दुशेखरः चन्द्रचूडः विश्वम्भरेण विष्णुना सहस्रशः प्रदक्षिणीकृत्य मूर्ध्नि स्वशिरसि पादौ शिवचरणौ आधाय स्थापयित्वा बाहुभ्यां निर्भरं दृढं परिरभ्य आलिङ्ग्य कथञ्चित्कृच्छ्रेणेत्यर्थः। विसृष्टः उज्झितस्सन् देवासुरेषु पश्यत्सु दर्शनं कुर्वत्सु सत्सु पार्वती गिरिजा देवी तया सहित एव तिरोदधे अन्तर्दधे॥ **तदन्विति**॥ दिव्याभिः अबाधितार्थाभिः स्तुतिभिः स्तोत्रैः स्तुवन्तः गुणान्कथयन्तः शतशः अनेकशः सङ्घीभूयेति यावत्। अभिसङ्गम्य आगत्य कोटीरैर्मकुटैः कैटभभिदः श्रीविष्णोश्चरणकमलं पादारविन्दं स्पृशन्तः स्पर्शनं कुर्वन्तः श्रीकण्ठं नीलकण्ठं स्मरन्तः ध्यायन्तः प्रहृष्यन्तः हर्षं प्राप्नुवन्तस्सन्तः असुरवीरैस्समं दिविचरा देवाः सिन्धुं समुद्रं पुनः प्रमथितुं मथनं कर्तुं उपाक्रंसत उपचक्रमुरित्यर्थः। अन्तरायनिवृत्तौ श्रेयस्साधनोद्योगं के वा विवेकिनः त्यजेयुरिति भावः॥

इति श्रीमद्भारद्वाजवेङ्कालमहादेवसूरिविरचिते नीलकण्ठविजयव्याख्याने विबुधानन्दाख्याने चतुर्थाश्वासविवृतिः॥

# अथ पञ्चमाश्वासः ॥

आलोड्यमानः पुनरेकतानैः
आमूलमब्धिस्सुरदैत्यसङ्घैः ।
प्रादुष्करिष्यन् परमामृतं तत्
प्रासीददीशान इव क्रमेण ॥ १ ॥

अथ ततः क्षोभ्यमाणात्सजातीयमन्दरसङ्घर्षमसहमानतया नुत्थित इव मैनाकभूधरः, परिगळत्कलुषमदजलासारपरिहीर्षया निर्वासित इव भुवि नैर्मल्यैकमत्यस्थितैरान्तरैर्जन्तुः, सलिल एव सन्ततवप्रक्रियाशीलनेन संसक्तैर्दुग्धसागरसजनाळैरिव वज्रवलयैरावेष्टितचतुर्दन्तः, सन्ततभूभारपरिान्तदिगन्तदन्तावळराजदृष्टिपथान्निलीय विष्टिग्रहणशङ्कया

विद्यावितरणशीलं विद्याधीशं विरिञ्चिहरिवन्द्यम् ।
विश्वाधिकविबुधेड्यं विजयोपास्यं विनौमि विषकण्ठम् ॥

आलोड्येति ॥ एकतानाः अनन्यवृत्तयः । 'एकतानोऽनन्यवृत्तिः' अमरः । तथाभूतैः सुरदैत्यसङ्घैः आमूलं मूलावधि आलोड्यमानः मथ्यमानः अब्धिः पुनः समुद्रस्तु तत्परमामृतं उत्कृष्टामृतं प्रादुष्करिष्यन् उत्पादयिष्यन् ान् क्रमेण ईशानः परमेश्वर इव प्रासीदत् प्रससादेत्यर्थः । पाघ्रेत्यादिना सदेः ीदादेशः कर्तरि लङ् ॥ तत इति ॥ ऐरावत उद्बभूवेत्याह । ततः क्षुभ्यमाणान्मथ्यमानात् अर्णवात् समुद्रात् सजातीयः पर्वतत्वरूपैकजातेर्विशिष्टः यो मन्दरः तस्मात्सङ्घर्षणं मथनरूपाभिभवं असहमानः अनङ्गीकुर्वाः तस्य भावस्तत्ता तया समुत्थितः समुद्गतः मैनाकभूधर इव स्थितः । नैर्मल्यं नैर्मलत्वं तस्मिन् विषये यदैकमत्यं एकविधत्वेनावस्थानबुद्धिरित्यर्थः । तेनास्थिताः विद्यमानाः तथाभूतैः आन्तरैः समुद्रान्तर्गतैः जन्तुभिः प्राणिभिः परिगळन्ति परितः स्खलन्ति यानि मदजलानि तेषामासारः धारासम्पातः तस्य परिजिहीर्षा परिहर्तुमिच्छा तया भुवि निर्वासितः निष्कासित इव स्थितः सलिले उदक एव सन्ततमनवरतं या वप्रक्रिया तिर्यग्दन्तप्रहाररूपा तस्यां परिशीलनमभ्यासः तेन संसक्तैः लग्नैः दुग्धसागरे यानि सरोजानि तेषां नाळैरिव । वज्रवलयैः वज्रमणिखचितकटकैः वलयिताः वेष्टिताश्चत्वारो दन्ताः स्य स तथाभूतः । विष्टिः बलात्कारः । 'मास्यां मूले लग्नकचे विष्टिर्नरकपातने

विनिर्गतः स्वयमेव बहिरिव केनापि पथा विस्मयनीयविग्रहो महानैरावतो नाम मतङ्गजः प्रादुरभूत् ।

परिचलितदुग्धवेलापरिचयविमलस्य मन्दरस्य गिरेः ।
अभ्यर्णमुपसरन्नयमर्भक इव तस्य सन्ददृशे ॥ २ ॥
आजिघ्रन्निव पुष्करेण जलधेरर्धं पिबन् शीकरैः
आसिञ्चन्नभितस्तनूमिव सुरान् स्रोतोभिराप्लावयन् ।
वप्राघातमिवाचरन् शिथिलयन्मन्थानमेवाचलं
हर्षायाजनि पश्यतां दिविषदामैरावणो वारणः ॥ ३ ॥

---

बलात्कारे च भद्राख्यकरणे कर्मवेतने' इति नानार्थरत्नमाला । तया ग्रहणं स्वीकारः तस्माच्छङ्का भयं तया । सन्ततं भुवो भारः भरणं तेन परिश्रान्ताः परिश्रमं प्राप्ता ये दिगन्तदन्तावळाः दिग्गजाः तेषां राजिः पङ्क्तिः तस्याः दृष्टिपथात् दृङ्मार्गात् । ल्यब्लोपे पञ्चमी । केनापि अज्ञातेनेत्यर्थः । पथा मार्गेण निलीय दृगविषयीभूय स्वयमेव अप्रेरित एवेत्यर्थः । बहिः विनिर्गतः समागत इव स्थितः । विस्मयनीयः आश्चर्यकरः विग्रहश्शरीरं यस्य स तथाभूतः । 'शरीरं वर्ष्म विग्रह' इत्यमरः । महानुरुः ऐरावतो नाम प्रसिद्धो मतङ्गजो गजः प्रादुरभूत् प्रादुर्बभूवेत्यर्थः ॥ **परिचलितेति** ॥ अयमैरावतो नाम गजः। परिचलिता सेविता या दुग्धवेला क्षीरसमुद्रतटं तस्याः परिचयः सम्बन्धः तेन विमलः मलरहितः तथाभूतस्य । पाठान्तरे परिचलिता या दुग्धवेला दुग्धविकृतिः फेनमिति यावत् । तस्याः परिचय इत्यर्थः । 'अब्ध्यम्बुविकृतौ वेला' इत्यमरः । मन्दरस्य गिरेः मन्दराद्रेरित्यर्थः । अभ्यर्णमन्तिकदेशे । 'उपकण्ठान्तिकाभ्यर्ण' इत्यमरः । परिचरन् सञ्चरन् तस्य गिरेरर्भकः डिम्भ इव । 'पोतः पाकोऽर्भको डिम्भ' इत्यमरः । सन्ददृशे जनैर्दृष्ट इत्यर्थः ॥ **आजिघ्रन्निति** ॥ ऐरावणः ऐरावणसंज्ञकः वारणो गजः पुष्करेण शुण्डया । 'पुष्करं करिहस्ताग्र' इत्यमरः । आजिघ्रन्निव गन्धग्रहणं कुर्वन्निव जलधेस्समुद्रादर्धं पिबन् पानं कुर्वन् तनूमभितः शरीरस्य सर्वत इत्यर्थः । अभितः परित इत्यादिना द्वितीया । शीकरैः अम्बुकणैरासिञ्चन् सेचनं कुर्वन्निव सुरानिन्द्रादिदेवान् स्रोतोभिः अम्बुसरणैः । 'स्रोतोऽम्बुसरणं स्वतः' इत्यमरः । आप्लावयन् आप्लवनं कारयन्नित्यर्थः । शीतलयन्निति यावत् । वप्रः तीरं । 'वप्रोऽस्त्रियां तीरसेतुप्राकारेष्वेव वाचकः' इति भास्करः । तस्मिन् आघातं दन्तप्रहारं चरन् अनुतिष्ठन् अत एव मन्थानं मन्थनदण्डसदृशमचलं मन्दराद्रिमेव शिथिलयन् शिथिलं कुर्वन् सन् पश्यतां द्रष्टॄणां दिविषदां देवानां हर्षाय परितोषाय अजनि बभूवेत्यर्थः । रमणीयविग्रहः केषां वा हर्षाय न भ-

स च बहिर्निस्सरन्नशिक्षिताधोरणनियन्त्रणतया मनागप्यगणयन् देवासुरान्, अमृतोपयोगसुहिततया किमप्यनालोकयन्नुपनीयमानानिक्षुलताभारानुपह्रियमाणानि कदळीकाण्डानि सम्भ्रियमाणानि पिप्पलपल्लवानि च, सर्वतः परामम्रर्श यादांसि। तमित्थमतर्कितोपनिष्क्रान्तमालक्षयन्तः पुनरपि यावदाविलयाम्बभूवुरर्णवं देवासुराः, तावदुद्वेलहेषाहलाहलोन्मेषपोषितकल्लोलकोलाहलः, चटुलखुरपुटाविद्धदुग्धसागरशीकरासारदुर्दिनदुर्दर्शदिङ्मण्डलः, सन्ततसलिलनिमज्जनोन्मज्जनक्लेशसहनाक्षमतया सैन्धव इव कुमुदबान्धवस्यन्दनसन्दानि-

---

वतीति भावः ॥ **स चेति** ॥ बहिर्निस्सरन् निर्गच्छन् अशिक्षितमनभ्यापितमाधोरणैः हास्तिपकैः नियन्त्रणं नियमनं प्रह्वीभवनं वा दीनलक्षणं येन स तस्य भावस्तत्ता तया मनागपि देवासुरानगणयन् गणनमकुर्वन्नित्यर्थः । अमृतोपयोगः क्षीरस्य अमृतस्य वा भोजनं तेन सुहिततया आप्ततया उपनीयमानानानीयमानानिक्षुलतानां भारान् सङ्घातानिति यावत्। किमपि किञ्चिदपि अनालोकयन् अपश्यन् उपह्रियमाणानि उपहारीकृतानि कदळीकाण्डानि रम्भास्तम्बान् सम्भ्रियमाणानि संपाद्यमानानि पिप्पलानामश्वत्थानां पल्लवानि किसलयान्यनालोकयन्नित्यन्वयः। स चैरावतः सर्वतः परितः यादांसि जलजन्तून् परामम्रर्श पस्पर्शेत्यर्थः । स्वभावस्य दुरतिक्रमत्वादिति भावः ॥ **तमिति** ॥ इत्थं अतर्कितः अचिन्तित एव उपनिष्क्रान्तं तमैरावतं आलक्षयन्तः पश्यन्तः देवासुराः पुनरर्णवं यावत् आविलयाम्बभूवुः आविलयाञ्चक्रुरित्यर्थः ॥ **तावदिति** ॥ उत्सृष्टा वेलामुद्वेलाः निर्मर्यादा इत्यर्थः । ये हेषासंज्ञिकाः हलाहलेत्येवंप्रकारा ध्वनयः । 'धैवतं हेषते वाजी' 'कश्यं तु मध्यमश्वानां हेषा ह्रेषा च निस्वनः' इति चामरः । तेषामुन्मेषो विकासः तेन पोषितः वर्धितः कल्लोलानां तरङ्गाणां कोलाहलः कलकलध्वनिर्यस्य स तथाभूतः । 'कोलाहलः कलकलः' इत्यमरः । चटुलैः चपलैः खुरपुटैश्शफदेशैः । 'शफं क्लीबे खुरः पुमान्' इत्यमरः । आविद्धः आहतः यः दुग्धसागरः क्षीरार्णवः तस्य यानि पयांसि तेषां शीकराः कणाः तेषामासारैः धारासम्पातैः तैरेव दुर्दिनैः मेघच्छन्नदिवसैर्दुर्दर्शं द्रष्टुमशक्यं दिङ्मण्डलं यस्य स तथाभूतः । सलिले निमज्जनोन्मज्जनाभ्यां यः क्लेशः दुःखं उदयास्तमयकालयोरिति भावः । तस्य सहनं तस्मिन् अक्षमतया असमर्थतया बन्धनमुन्मुच्य विस्रंसयित्वा बहिरुच्चलितः उद्गतः कुमुदबान्धवस्य चन्द्रस्य स्यन्दनं रथः तस्मिन् सन्दानितः बद्धः । 'बद्धे सन्दानितं मूतमुद्दितं सन्दितं सितं' इत्यमरः । सैन्धवः अश्व इव स्थितः । 'हयसैन्धवसप्तय' इत्यमरः । कोऽपि अदृष्टपूर्व इत्यर्थः । स-

तः, कोऽपि समुन्मुच्य बन्धनमुच्चलितो वहिरुच्चैःश्रवा नाम यथार्थनामा समुन्ममज्ज सज्जीकृतो वाजी।

आप्योऽपि रंहसा गच्छन्ननाप्यो मारुतेन यः।
सैन्धवस्सैन्धवाद्गर्भादुत्ततार स पाण्डरः॥४॥

स च किञ्चिदुदञ्चिताग्रपादतया मुहुर्मुहुराधित्सन्निव शिरसि पदमनलसारथेः, अपहसन्निव हेषारवैरवनितलमात्रसञ्चारशिक्षिता इत्यारट्टजवनायुजान्, सलिलमात्रसञ्चारशीलिनो मत्स्यमण्डूककर्कटका इवेति वाजिनो वरुणस्य, तैलयन्त्रनियन्त्रिता बलीवर्दा इव सन्ततभ्रमणमात्रगर्विता इति न्धवानम्भोजबान्धवस्य, मारुतविजयादेव मनांसि जिगाय

ज्जीकृतः आरोहणार्हीकृतः यथार्थमनुगतार्थं नाम यस्य सः उच्चैःश्रवा नाम प्रसिद्धो वाजी अश्वः समुन्ममज्ज उत्तस्थावित्यर्थः॥ आप्य इति॥ यः उच्चैःश्रवा नामाश्वः गच्छन् आप्योऽपि आप्तुं शक्योऽपि मारुतेन वायुना रंहसा वेगेन अनाप्यः आप्तुमशक्यः इत्युक्तविरोधः। तदाभासस्तु आप्योऽपीत्यत्र अप्सु भवोऽपीत्यर्थाश्रयणादिति बोध्यम्। पाण्डरः धवळः स तथाभूतः। सैन्धवः अश्वः सैन्धवात्समुद्राद्गर्भात् कुक्षिदेशात् उत्ततार विनिर्ययावित्यर्थः॥ स चेति॥ किञ्चिदुदञ्चितौ ईषदुत्क्षिप्तौ अग्रपादावग्रचरणौ येन स तस्य भावस्तत्ता तया। अनलस्य अग्नेः सारथिरिव सारथिः अनुकूल इत्यर्थः। तस्य वायोरिति यावत्। शिरस्युत्तमाङ्गे पदं पादं मुहुर्मुहुः आधित्सन्निव निधातुमिच्छन्निवेत्यर्थः। हेषारवैः स्वीयध्वनिभिः आरट्टजाः आरट्टजाताः। सप्तम्यां जनेर्ड इति डप्रत्ययः। तथाभूतानश्वान्। वनायुदेशे जाताः वनायुजाः। पूर्ववत्प्रत्ययः। तानप्यश्वानित्यर्थः। 'वनायुजाः पारशीकाः काम्भोजा बाह्लिका हयाः' इत्यमरः। 'आरट्टजा जानपदा' इति अश्वनाममालायामुक्तम्। अवनितलमात्रे भूतलमात्रे सञ्चारः तस्मिन् शिक्षिता इति अपहसन्निव अपहासं कुर्वन्निव स्थितः। किञ्च वरुणस्य पश्चिमदिगधिपतेर्वाजिनोऽश्वान्। मत्स्यमण्डूककर्कटा इव मीनभेककुळीरा इवेत्यर्थः। 'भेके मण्डूकवर्षाभू' 'स्यात्कुळीरः कर्कटकः' इति चामरः। सलिलमात्रे सञ्चारः तच्छीलिनः तदेकचतुरा इत्यर्थः। इतीत्थमपहसन्। तैलयन्त्रं तैलसम्पत्तिसाधनं अधस्तिलघातकनिखातदारुविशेष इत्यर्थः। तस्मिन् नियन्त्रिताः बद्धाः ये बलीवर्दाः वृषभाः त इव। 'उक्षा भद्रो बलीवर्दः' इत्यमरः। सन्ततमनवरतं भ्रमणमात्रं सञ्चारमात्रं तेन गर्विताः उद्धता इति अम्भोजबान्धवस्य सूर्यस्य सैन्धवानपहसन् स च उच्चैःश्रवाः मारुतविज-

अपि च । बाडबानामाज्ञानसिद्धो मनोजयः कस्तत्र यत्न इति कथयितुकाममिव चलप्रोथतया, वालविक्षेपनिर्धूतमेघमण्डलतया वाहनं प्राचीनमभिभवन्तमिवाखण्डलस्य पश्यन्नुच्चैःश्रवसमनिमेषेण चक्षुषा, पद्मनाभः स्वयमङ्गीकृतहयग्रीवतनुरध्यापनमात्रनिर्वृतस्सर्वतोऽपि विस्मयनीये तदीये गतिचातुर्ये सासूय इव बभूव ।

यावद्यावत्सागरं ते ममन्थुस्तावत्तावत्सोऽर्पयन्नेकमेकम् ।
भूयो भूयः क्षोभमेवाप देवैः दृष्टास्वादास्तत्र किं ते दयन्ते ॥

ततश्च ।

यादेव मनांसि जिगाय पराबभूवेत्यर्थः ॥ **अपि चेति** ॥ चल चञ्चले प्रोथे घोणे यस्य स तस्य भावस्तत्ता तया । 'घोणा तु प्रोथमस्त्रियाम्' इत्यमरः । बाडबानामश्वानां ब्राह्मणानामिति व्यज्यते । 'वाम्यश्वबडबा बाडबं गणे' 'द्विजात्यग्रजन्मभूदेवबाडबा' इत्यमरश्च । मनोजयः मनोविजयः मनोनिग्रह इति च व्यज्यते । आजन्म जननमारभ्येत्यर्थः । सिद्धः प्राप्तः सहज इति यावत् । तत्र मनोजयविषये को यत्नः प्रयास इत्यर्थः । इतीत्थं कथयितुं वक्तुं कामो यस्य स तथाभूतमिव स्थितम् । लुम्पेदवश्यमः कृत्ये तुङ्काममनसोरपीति मकारलोपः । वालधिः लाङ्गूलम् । 'पुच्छोऽस्त्री लोमलाङ्गूले बालहस्तश्च बालधिः' इत्यमरः । तस्य विक्षेपः उत्क्षेपः वीजनमिति वार्थः । तेन निर्धूतं निरसितं मेघमण्डलं यस्य तस्य भावस्तत्ता तया । आखण्डलस्य इन्द्रस्य प्राचीनं पुरातनं वाहनं मेघरूपं यानम् । 'सर्वं स्याद्वाहनं यानं' इत्यमरः । मेघवाहनत्वादिन्द्रस्येति भावः । अभिभवन्तं तिरस्कुर्वन्तमिव स्थितं उच्चैःश्रवसं अनिमेषेण पक्ष्मविक्षेपरहितेन चक्षुषा पश्यन् पद्मनाभः स्वयमङ्गीकृता विधृता हयग्रीवतनुर्मूर्तिर्येन स तथाभूतः । अध्यापनमात्रेण केवलवेदप्रवचनेन निर्वृतः सुखितः पद्मनाभः श्रीविष्णुः सर्वतोऽपि सर्वप्रकारैरपि विस्मयनीये चित्रीये तदीये उच्चैःश्रवस्सम्बन्धिनि गतयः पञ्चधाराः । 'गतयोऽमूः पञ्चधारा' इत्यमरः । तासु चातुर्यं नैपुण्यं तस्मिन् सासूयः असूयापरः उत्कर्षासहिष्णुत्वं तया सहित इव बभूव स्थितवानित्यर्थः । असूयालक्षणं तु प्राचीनैः । 'परोत्कर्षासहिष्णुत्वमसूया परिकीर्तिता' इत्युक्तम् ॥ **यावदिति** ॥ ते देवासुराः यावद्यावत् यत्कालपर्यन्तमित्यर्थः । सागरं समुद्रं ममन्थुः मन्थनञ्चक्रुः तावत्तावत् तत्कालपर्यन्तं सः समुद्रः एकमेकं श्लाघ्यं वस्तु अर्पयन् वितरन् भूयो भूयः पुनः पुनः देवैः इदमुपलक्षणं असुरैरित्यर्थः । क्षोभं मथनक्लेशमेव आप प्रापेत्यर्थः । दृष्टास्वादाः अनुभूतस्वादमानः ते देवासु-

साध्वी गौस्सुरभिर्नाम सागरादुदभूत् स्वयम् ।
गोप्रसूता हि गावी स्यामसाधुश्चेति जानती ॥ ६ ॥
स्नातुं वाञ्छति शङ्करोऽपि पयसा स्तन्येन यस्याः स्वयं
तोयं पावनमुत्तमं त्रिजगतां यद्गात्रनिष्यन्दजम् ।
यद्रूपां समुपासते शमधना वाचं पुराणीं परां
सा दिव्या सुरभीकरोतु सुरभिर्वाचं कवीनामपि ॥ ७ ॥

---

राः अत्र समुद्रविषये दयन्ते किं अनुगृह्य त्यजन्ति किमिति यावत् । कामधेनुरुदभूदित्याह ॥ **साध्वीति** ॥ साध्वी साधुन्वगुणवती । वोतो गुणवचनादिति वा ङीष् । सुरभिर्नाम सुरभिरिति प्रसिद्धा गौः धेनुः स्वयं गोप्रसूता हि गवा सूता चेदित्यर्थः । 'हि हेतावधारणे' इत्यमरः । असाधुः अपभ्रंशभूतः गावी च गाविशब्दवाच्यं च स्यां भवेयं इतीत्थं जानती जानाना सती सागरात्समुद्रादुदभूदुत्पन्ना बभूवेत्यर्थः । नन्वत्र गोशब्दात्तस्य पत्यमिति सूत्रेण अण्प्रत्यये कृते गावीति शब्दः निष्पन्नो भवेत् । सचासाधुः श्रीभाष्यकारैः पस्पशाह्निके एकैकस्य शब्दस्य बहवोऽपभ्रंशा इत्युपक्रम्य यथा गोशब्दस्य गावी गोणी गोता गोपूतलिकेत्यादिना गोशब्दापभ्रंशेषु तस्य पाठात् । एवं च गाविपदार्थे असाधुपदार्थः कथमिति चेन्न । तथाहि 'देवपूर्वं गिरिं ते' इति भारविप्रयोगे 'धनुरुपपदं वेदमन्वादिदेश' इति कालिदासप्रयोगे 'हिरण्यपूर्वं कशिपुं प्रचक्षते' इति माघप्रयोगे च यथाक्रमं देवशब्दपूर्वत्वस्य गिरिशब्दवृत्तित्वेऽपि धनुरुपपदत्वस्य वेदशब्दवृत्तित्वेऽपि हिरण्यशब्दपूर्वत्वस्य कशिपुशब्दवृत्तित्वेऽपि अर्थलक्षणामाश्रित्य देवशब्दपूर्वगिरिशब्दवाच्यमित्याद्यर्थ इति तद्व्याख्यातृभिर्व्याख्यातम् । तथा प्रकृतेऽपि असाधुर्यो गावीशब्दः तद्वाच्यमित्यर्थाश्रयणान्न कोऽपि दोषः ॥ **स्नातुमिति** ॥ शङ्करश्शवः । शमि धातोस्संज्ञायामित्यच्प्रत्ययः । स्वयं यस्याः कामधेनोः स्तनयोर्भवं स्तन्यम् । शरीरावयवाद्यादिति यत्प्रत्ययः । तथाभूतेन पयसा क्षीरेण । 'पयः क्षीरं पयोऽम्बु च' इत्यमरः । स्नातुं स्नानं कर्तुं वाञ्छति भक्तेः पूजाकरणसमय इति भावः । यस्याः धेनोः गात्रं शरीरं । 'गात्रं वपुस्संहननं' इत्यमरः । तस्मान्निष्यन्दः स्रवणं तेन जातं यद्वा निष्यन्दः मूत्रं तदात्मना जातं तोयं गोमूत्रं त्रिजगतां त्रयाणां लोकानां निर्मलं च तत्पावनञ्चेति विशेषणयोरपि मिथोविशेषणविशेष्यभावविवक्षया विशेषणसमासः । निर्मलं सत् पापविशोधकमित्यर्थः । शमः अन्तरिन्द्रियनिग्रहः धनं धनवद्गोप्यं येषां ते तथाभूताः ऋषय इति यावत् । पुराभवां पुराणीं अनादिमित्यर्थः । तथा पुराणप्रोक्तेष्वित्यादिटयुलन्ते निपातः । टिड्ढेत्यादिना ङीप् । अत एव परामुत्कृष्टां वाचं श्रुतिगिरम् । 'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा । आदौ वेदमयी दिव्या यतः

प्रथमसमुद्गतामखिलकामदुघामनघां
सुरभिमभिप्रपद्य सुरसिद्धमहर्षिगणे ।
स्तुवति धृताक्षमा इव वदान्यशिखामणयः
सममुदयाम्बभूवुरथ पञ्च महातरवः ॥ ८ ॥

अमीषां च पुनरखिलभुवनाद्भुतानां किसलयान्येव कनकांशुकानि, जीर्णपर्णान्येव चीनाम्बराणि, मुकुळा एव मुक्ताफलानि, निर्यासा एव वैडूर्याणि, फलपाका एव पद्मरागाः, परागा एव पटवासाः, मधुकरा एव महेन्द्रोपलाः, प्ररोहा

---

इसर्वाः प्रकृतयः' इति शास्त्रादिति भावः । यस्याः धेनोः रूपमिव रूपं यस्यास्तथाभूतामुपासते ध्यायन्तीत्यर्थः । 'वाचां धेनुमुपासिता' इति श्रुतेः । दिव्या सर्वोत्कृष्टा सा सुरभिः कामधेनुः । 'क्षत्रियेऽपि च नाभिर्नां सुरभिर्गवि च स्त्रियां' इत्यमरः । कवीनां पण्डितानाम् । 'सङ्ख्यावान् पण्डितः कविः' इत्यमरः । वाचं गिरं सुरभीकरोतु मनोहरयत्वित्यर्थः ॥ प्रथमेति ॥ सुराणां सिद्धानां ऋषीणां च गणः सङ्घः तस्मिन् प्रथमं पूर्वं समुद्गतां समुद्भूतां अखिला ये कामाः अपेक्षितार्थाः तेषां दुघा दोग्ध्रीत्यर्थः । दुहः कप् घश्चेति कप्प्रत्ययः घश्चान्तादेशः अजाद्यतष्टाप् । तथाभूतां सुरभिं धेनुम् । 'सुरभिर्गवि च स्त्रियां' इत्यमरः । अभिप्रतिपद्य अभिप्राप्य स्तुवति स्तोत्रं कुर्वति सति । धृता अक्षमासहनं यैस्तथाभूताः । वदान्या बहुप्रदाः । 'स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे' इत्यमरः । तेषां शिखामणयः श्रेष्ठाः पञ्चसङ्ख्याका महातरवः सन्तानमन्दारादयो वृक्षाः स्वयं उदयाम्बभूवुरुत्पन्ना बभूवुरित्यर्थः । ये वदान्यशिखामणयः पञ्च महातरवः धृताक्षमा इव स्वयमुदयाम्बभूवुरिति वान्वयः ॥ अमीषामिति ॥ अखिलानि यानि भुवनानि चतुर्दशापि लोकाः तेष्वद्भुतानि आश्चर्यकराणि । 'विस्मयोऽद्भुतमाश्चर्यं' इत्यमरः । तथाभूतानाममीषां सन्तानादिवृक्षाणां किसलयानि पल्लवान्येव । 'पल्लवोऽस्त्री किसलयं' इत्यमरः । कनकमयानि अंशुकानि वस्त्राणि पीताम्बराणीति यावत् । 'चेलं वसनमंशुकं' इत्यमरः । जीर्णानि यानि पर्णानि । 'दलं पर्णं छदः पुमान्' इत्यमरः । तान्येव चीनाम्बराणि जीर्णवस्त्राणीत्यर्थः । मुकुळाः कुड्मला एव । 'कुड्मलो मुकुळोऽस्त्रियां' इत्यमरः । मुक्ताफलानि मुक्तामणय इत्यर्थः । 'मुक्ताथ विद्रुमः पुंसि' इत्यमरः । निर्यासाः स्रुतद्रवीभूतसारांशा एव वैडूर्याणि वैडूर्यमणयः फलानां पाकाः परिपाका एव पद्मरागाः । 'शोणरत्नं लोहितकं पद्मरागोऽथ मौक्तिकं' इत्यमरः । परागाः पुष्परजांस्येव । 'परागस्सुमनोरज' इत्यमरः । पटवासाः गन्धद्रव्यचूर्णानि । 'प्रसाधिनी कङ्कतिका पिष्टातः पटवासक' इत्यमरः । मधुकराः भ्रमरा एव । 'मधुव्रतो

एव हारलताः, प्रसवासवा एव परिणामाः सुधारसस्ये-त्याचक्षते।

किं कर्म दुष्कृतमिदं तरुजन्महेतुः
किं वा महत्सुकृतमीदृशकीर्तिमूलम्।
किं वा तृतीयमिदमीदृशमन्यदेवे-
त्यद्यापि शाम्यति न वादकथा मुनीनाम्॥ ९॥

अवस्थाप्य च तानानुपूर्व्येण परिहृतजरारोगपरिश्रमासु पञ्चेन्द्रियसमुज्जीविनीषु छायासु तेषामायासमवधूय पुनरपि ते ममन्थुरमृतार्णवम्।

अभ्युद्यतीं मथनतः किल निष्कळङ्कां
आनन्दकन्दळमयीममृतांशुरेखाम्।
उत्तंसपुष्पकलिकेयमुमापतेरि-
त्यालोचयन्नुपददे मनसा मुकुन्दः॥ १०॥

---

मधुकर' इत्यमरः। महेन्द्रोपलाः इन्द्रनीलमणयः प्ररोहा एव लम्बमानजटा एव हारलताः मुक्ताहारादयः प्रसवा एव फलपुष्पाण्येव सुधायाः अमृतस्य रसः स्वादिमा तस्य परिणामाः परिणतय इत्याचक्षते आहुरित्यर्थः॥ **किमिति**॥ तरुजन्मनः हेतुः कारणं। 'हेतुर्ना कारणं बीजं' इत्यमरः। दुष्कृतं पापरूपं कर्म किं भवेत् ईदृशी च सा कीर्तिश्चेति कर्मधारये स्त्रियाः पुंवदित्यादिना पुंवद्भावः। तस्याः मूलं कारणभूतं महत् उत्कृष्टं सुकृतं कर्म वा किं भवेत्। 'श्रेयसी सुकृतं वृष' इत्यमरः। ईदृशं यशस्विवृक्षजन्महेतुभूतं तृतीयमिदं कर्म अन्यदेव पुण्यपापव्यतिरिक्तमेव किं वा भवेत् किंवित्यर्थः। इतीत्थं मुनीनां वादकथा संवादः अद्यापि न शाम्यति शान्तं न भवतीत्यर्थः। दिवादित्वाच्छमिधातोः श्यनि शमामष्टानामिति दीर्घः। अतिविलक्षणं तेषां जन्मेति भावः॥ **अवस्थाप्येति**॥ तान् सन्तानादिकल्पवृक्षान् आनुपूर्व्येण अनुगताः पूर्वं अनुपूर्वाः तेषां भावः आनुपूर्व्यं तेन क्रमेणेति यावत्। अवस्थाप्य स्थापयित्वा परिहृतः परिहापितः जरारोगाभ्यां परिश्रमो याभिस्तास्तथाभूतासु। पञ्च यानि चक्षुरादीनीन्द्रियाणि तेषां समुज्जीविन्यः उज्जीविकाः हर्षप्रदा इति यावत्। तथाभूतासु तेषां कल्पकादीनां छायासु अनातपेषु। 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातप' इत्यमरः। आयासं श्रममवधूय परिहार्य पुनरपि ते देवासुराः अमृतार्णवं क्षीरसमुद्रं ममन्थुः विलोडयामासुरित्यर्थः॥ **अभ्युद्यतीमिति**॥ मुकुन्दः श्रीविष्णुः मथनतस्समुद्रमथनादभ्युद्यतीमाविर्भावित्रीं निष्कलङ्कां अपगतक-

ततश्चिन्तित एव सन्निहितो नन्दी शिव इव सभाजितो देवासुरैः समर्पितां मधुसूदनेन शशाङ्करेखामाददानः सादरमिदमवादीत् ।

'किमिव दयितं शम्भोः केन प्रसीदति देव इ-
त्यविरतसमासक्तं चित्तं तवैव हरे हरे ।
तदिह भगवन्माहाभाग्यं तव प्रणुमः कथं
त्वमसि शरणं शैवानां नस्त्वमेव महागुरुः ॥ ११ ॥

जानीषे ननु नाम केशव जगन्नाथस्य नाथस्य नः
प्रीतिं पारमिकीमनन्यसुलभां पुष्पेषु नीलोत्पले ।

लङ्कां अत एव आनन्दस्य यत्कन्दळं तस्येमां तन्मयीं तत्स्वरूपामित्यर्थः । विकारार्थे मयटि टिड्ढेत्यादिना ङीप् । अमृतांशुरेखां चन्द्ररेखां इत्यमुमापतेः परमेश्वरस्य उत्तमपुष्पकलिका शेखरीभाविकोरक इत्यर्थः । 'पुंस्युत्तंसावतंसौ वा कर्णपूरेऽपि शेखरे' इत्यमरः । 'कलिका कोरकः पुमान्' इति च । इतीत्थमालोचयन् परिभावयन् मनसा उपददे उपायनं चकारेत्यर्थः । उपपूर्वस्य दाधातोरुपायनार्थत्वे शक्तिग्राहकप्रमाणं तु 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः । इन्द्रीभूतामृतस्य देवभागत्वेऽपि धर्मीभूतामृतांशुस्तु परमेश्वरस्यैव समर्पणीयामिति भावः ॥ तत इति ॥ ततश्चन्द्राविर्भावानन्तरं चिन्तितः चिन्ताविषय एव सन् सन्निहितः अन्तिकगतः नन्दी नन्दीश्वरः शिवः परमेश्वर इव देवासुरैस्सभाजितस्सन् मधुसूदनेन हरिणा समर्पितामुपहारीकृतां शशाङ्करेखां चन्द्ररेखामादधानः स्वीकुर्वाणः सादरं यथा तथा इदं वचनमवादीत् उवाच ॥ किमिति ॥ हे हरे श्रीविष्णो तव भवत एव चित्तं शम्भोः परमेश्वरस्य किं वस्तु दयितमिव भवेत् । वस्तुगत्या तस्य हेयोपादेययोरभावादिति भावः । देवः परमेश्वरः केन वा कया वा सेवयेत्यर्थः । प्रसीदति प्रसन्नो भवति । पाघ्रेत्यादिना सदेस्सीदादेशः । इतीत्थं हरे परमेश्वरे । 'हरः स्मरहरो भर्गः' इत्यमरः । अविरतं सन्ततं समासक्तं सङ्क्रान्तमित्यर्थः । तत्तस्मादिहेदानीं तव महाभागस्य भावो माहाभाग्यं सुकृतमिति यावत् । कथं प्रणुमः स्तुतिं कुर्म इत्यर्थः । अत्यन्तसुकृतशालिन एव शिवभक्तेस्सम्भवादिति भावः । शैवानां शिवभक्तानां नः अस्माकं त्वमेव शरणं रक्षकः । 'शरणं गृहरक्षित्रोः' इत्यमरः । असि भवसि । पालनांशस्य विष्णुकार्यत्वादिति भावः । त्वमेव गुरुः उपदेष्टा । 'गुरू गीष्पतिपित्राद्यौ' इत्यमरः । नेत्रकमलसहितसहस्रकमलादिना शिवपूजाकरणात् शिवभक्त्यावश्यकसन्मार्गप्रदर्शकत्वादिति भावः ॥ जानीष इति ॥ हे केशव वासुदेव नः अस्माकं नाथस्य स्वामिनः जगन्नाथस्य जगदी-

अस्मिन्नुत्पलबन्धुरित्यतितनूभूतेऽपि भूतेशितुः
प्रीतिं चिन्तय तावतीमुपचितामिन्दौ ततो वाधिकाम् ॥

तदहमेव प्रसाधयन्ननेन भगवतः कपर्दपदमाराधयामि हस्तेन ते परमात्मानम्। अग्रभुजे च विश्वेषामग्रपूजनमेतदुचितमाचरितम्। तदितो यथाभिमतमिमानि वस्तून्युपयुज्यन्ताम्' इत्यभिधाय तिरोभवति शिलादनन्दने, पुनरपि सञ्चुक्षोभ सा·

---

श्वरस्य शिवस्येत्यर्थः। पुष्पेषु कुसुमानां मध्य इत्यर्थः। नीलोत्पले कुवलये। 'स्यादुत्पलं कुवलयं' इत्यमरः। अन्यैः पुष्पैः सुखेन लब्धुमशक्यामित्यर्थः। इतर-पुष्पदुष्प्रापामिति यावत्। परमैव पारमिकी। स्वार्थे ठक्प्रत्ययः। टिड्ढेत्यादिना ङीप्। तथाभूतां प्रीतिमनुरागं हर्षं वेत्यर्थः। 'मुत्प्रीतिः प्रमदो हर्षः' इत्यमरः। जानीषे ननु जानासि खल्वित्यर्थः। भूतानामीशिता अधिपतिः तस्य शिवस्येत्यर्थः। 'भूतेशः खण्डपरशुः' इत्यमरः। अतितनूभूते अत्यन्तकृशेऽपीत्यर्थः। बालत्वादिति भावः। अस्मिन्निन्दौ चन्द्रे उत्पलानां कुवलयानां बन्धुः प्रिय इति हेतोः उपचितामभिवृद्धिं प्राप्तां तावतीं नीलोत्पले यावती प्रीतिस्तावतीमित्यर्थः। प्रीतिं प्रेमविशेषं चिन्तय पश्येत्यर्थः। ततो नीलोत्पलप्रीतेः अधिकां वा प्रीतिं हर्षं चिन्तय जानीहीत्यर्थः। स्वप्रेमास्पदस्यापि यत्प्रेमास्पदं तत्र कस्य वा प्रेम न भवेदिति भावः॥ **तदिति**॥ तत्तस्मादनेन चन्द्रेण भगवतः परमेश्वरस्य कपर्दो जटाजूटः तस्य पदं स्थानं प्रसाधयन् अलङ्करिष्यमाण इत्यर्थः। वर्तमानसामीप्ये वर्तमानवद्वेति लट्। तस्य स्थाने शत्रादेशः। ते तव हस्तेन परमात्मानं साम्बशिवं आराधयामि। अत्रापि वर्तमानवद्भावेन लट्। अहमेव पराशिवं सम्पूज्य तदा तव हस्तेन पूजा समजनीति भावयामीति भावः॥ **अग्र इति**॥ विश्वेषां देवानां मध्ये अग्रे भुजे प्रथमभोक्त्रे क्रतुष्विति शेषः। सूर्याग्निरूपत्वात्तस्येति भावः। अथवा अग्रे भुजे प्रथमतो विषभोक्त्रे अग्रभुक् ईश्वरः इति शास्त्रादिति भावः। यद्वा अग्रे भुजे प्रथमतो विषभयात्पालयित्रे इत्यर्थः। शिवायेति शेषः। भुज पालनाभ्यवहारयोरिति धातोः क्विप्। परिपालकपूजाकरणस्य प्रथमतो युक्तत्वादिति भावः। अग्रपूजनमिति यत् प्रथमसपर्येति यदित्यर्थः। एतत्पूजनं उचितं अर्हं यथा तथा आचरितं अनुष्ठितमित्यर्थः। अथवा अग्रे भुजे अग्रभुगीश्वर इति प्रथमभोक्त्रे अग्रपूजनं प्रथमतः पूजाकरणमिति यत् एतदाचरितं पूजानुष्ठानं। भावे क्तः। उचितमर्हमित्यर्थः। इति वान्वयो बोध्यः॥ **तदिति**॥ तत्तस्मात् इतोऽन्यानीति शेषः। इदानीमुत्पन्नानि उत्पद्यमानानि चेत्यर्थः। वस्तूनि यथाभिमतं भवतो यथारुचीत्यर्थः। उपयुज्यन्तां उपयुक्तानि क्रियन्तामित्यर्थः। इतीत्थमभिधाय

रस्वतो गर्भः ।

नैर्मल्यादुपसम्भृताः फणधरस्त्रैणानुबिम्बाश्शतं
स्वस्थानक्षुभितोद्गतामृतरसस्यन्दोपमन्दानतः ।
प्राप्तप्राणसमागमा इव ततः प्रादुर्बभूवुः स्त्रियो
नासीराग्रपताकिका रतिपतेर्नानाजयाङ्का इव ॥ १२ ॥

ततश्च विद्रुमलता इव वीचीभिराहृताः, तटित इव तत्तत्समयोपनम्रपयोधरोत्सङ्गपरिभ्रष्टाः, कौस्तुभरत्नपाञ्चालि-

---

उक्त्वा शिलादनन्दने नन्दीश्वरे तिरोहिते अन्तर्हिते सति पुनरपि सरस्वतः समुद्रस्यायं सारस्वतः समुद्रसम्बन्धीत्यर्थः । तस्येदमित्यण् । गर्भः कुक्षिः । 'कुक्षिभ्रूणार्भकौ गर्भौ' इत्यमरः । सुचुक्षोभ मथित इत्यर्थः ॥ नैर्मल्यादिति ॥ नैर्मल्यान्निर्मलत्वाद्धेतोः उपसम्भृतास्सम्पादिताः स्वं स्वकीयं यत् स्थानं तस्मात् क्षुभितः चालितः अत एव उद्गतः निर्गतो योऽमृतरसः । अथवा स्वस्थानस्य क्षुभितं क्षोभः । भावे क्तः । तेन उद्गतः विनिर्गतः यः अमृतरसः तस्य स्यन्दः प्रसृतिः तस्योपमन्दानं सम्बन्धः तस्मात्ततः इत्यर्थः । पञ्चम्यास्तसिः । प्राप्तः संप्राप्तः प्राणानां समागमः आगमनं यैस्तथाभूताः शतं शतसङ्ख्याकाः फणाधराणां नागानां याः स्त्रियः तासां सम्बन्धिनः स्त्रैणाः । स्त्रीपुंसाभ्यां नञ्स्नञौ भवनादिति नञ्प्रत्ययः । तथाभूतानुबिम्बाः प्रतिबिम्बा इव स्थिताः । नाना अनेके । विनञ्भ्यां नानाञौ नसहेति नञ्शब्दान्नाञ्प्रत्ययः । जयाङ्काः विजयचिह्नानि यासां तास्तथाभूताः । रतिपतेः मन्मथमहाराजस्य नासीरं सेनामुखभागः । 'सेनामुखं तु नासीरं' इत्यमरशेषः । तस्मिन् याः अग्राः पराध्याः । 'पराध्याग्रप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियं' इत्यमरः । पताकिकाः वैजयन्त्य इव स्थिताः । 'पताका वैजयन्ती स्यात्' इत्यमरः । स्त्रियो नार्यः ततस्समुद्रात् प्रादुर्बभूवुः प्रादुरासाम्बभूवुरित्यर्थः ॥ तत इति ॥ वीचयस्तरङ्गाः तैः । 'स्त्रियां वीचिरथोर्मिषु' इत्यमरः । आहृता आनीता विद्रुमाणां प्रवालानि । 'अथ विद्रुमः पुंसि प्रवाळं पुन्नपुंसकं' इत्यमरः । तेषां लता इव स्थिताः । 'वल्ली तु व्रततिर्लता' इत्यमरः । ते च ते समयाश्च तत्समयाः वर्षाकाल इत्यर्थः । तेषु उपनम्राः उपनता ये पयोधराः मेघाः । 'स्त्रीस्तनाब्दौ पयोधरौ' इत्यमरः । तेषामङ्कस्समीपदेशः । 'अङ्को नाटकविच्छेदे सङ्ख्यायां युधि भूषणे । समीपे रूपके स्थाने मतावुत्सङ्गचिह्नयोः' इति भास्करः । तस्मात्परिभ्रष्टाः च्युताः पतिता इत्यर्थः । 'स्रस्तं ध्वस्तं भ्रष्टं' इत्यमरः । तटितः विद्युत इव स्थिताः । केनापि येनकेनचित्पुंसेत्यर्थः । कौतूहला- 'कौतूहलं कौतुकञ्च' इत्यमरः । विकासाय विरचिताः निर्मिताः कौ-स्तुभे क्षिकानि यानि रत्नानि तन्मयाश्च ताः याः पाञ्चालिकाः पुत्रिका इत्यर्थः ।

का इव कौतूहलाय विनिर्मिताः केनापि, पञ्चशरराज्यलक्ष्मीविभूतीरिव परिगृहीतविग्रहाः, तुल्यवयोरूपविभ्रमाः, तुल्याम्बरविभूषणाः, हंसीरिव मानसादम्भोदविगमे समुत्तरन्तीः ताः बहिरालक्ष्य सर्वेऽपि सुरासुराः विरम्य सागरमथनवृथाक्लेशादुत्तरमप्यमृतमुपेक्ष्य सन्निहिते अधरामृत एव दृष्टिमादधिरे। तापसा अपि तद्दर्शनक्षुभितहृदयाः मन्त्रजपादुपरम्य मणितभेदानधिजिज्ञासाञ्चक्रिरे। पञ्चाग्निमपि विमुच्य प

---

'पाञ्चालिका पुत्रिका स्यात्' इत्यमरः। ता इव स्थिताः। यद्वा केनापि ब्रह्मणापीत्यर्थः। सजीवा इति शेषः। 'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोम्बुनोः' इत्यमरः। शिष्टं प्राग्वदित्यवस्थेयम्। परिगृहीता विधृताः विग्रहाः शरीराणि यासां ताः। 'शरीरं वर्ष्म विग्रह' इत्यमरः। ता इव स्थिताः पञ्चशरो मदनः तस्य या लक्ष्मीः तस्या विभूतयः अंशाः ता इव स्थिताः तुल्याः एकविधा वयः कालो रूपं सौन्दर्यं विभ्रमो विलासश्चैते यासां ताः तथाभूताः। तुल्ये अम्बरं वस्त्रं आभरणं चेत्येते यासां ताः तथाभूताः। अम्भोदानां मेघानां विगमोऽपसरणं तस्मिन् शरत्काल इति भावः। मानसात् मानससरोवरं विहायेत्यर्थः। ल्यब्लोपे कर्मणि पञ्चमीयम्। 'चित्ते सरसि मानस' इति भास्करः। उत्तरन्तीः उद्गच्छन्तीः हंसानां स्त्रियो हंस्यः। पुंयोगादाख्यायामिति ङीप्। ता इव स्थिताः ततस्तस्मात्समुद्राद्बहिः बाह्यदेशं प्रतीत्यर्थः। उत्तरन्तीः उद्गच्छन्तीः ताः अप्सरसः सर्वेऽपि सुरासुरा देवासुराः आलक्ष्य दृष्ट्वा सागरस्य यन्मथनं तार्हि तन्निमित्तो यः क्लेशः सर्पराजाकर्षणरूपप्रयास इत्यर्थः। तस्माद्विरम्य तत्क्लेशं विहाय तूष्णीं भूत्वेत्यर्थः। उत्तरं उत्पद्यमानं अमृतं सुधाम्। 'पीयूषममृतं सुधा' इत्यमरः। उपेक्ष्य अनादृत्येत्यर्थः। सन्निहितं समीपस्थं यदधरामृतं अप्सरसां सम्बन्धीति भावः। तस्मिन् दृष्टिं बुद्धिं। 'दृष्टिर्ज्ञानेऽक्ष्णि दर्शने' इत्यमरः। आदधिरे निदधिरे निहितवन्त इति यावत्। 'बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति' इति न्यायादिति भावः॥ **तापसा इति**॥ अप्सरसां दर्शनमवलोकनं तेन क्षोभितानि सञ्जातक्षोभाणि हृदयानि येषां ते तथाविधास्तापसा अपि तपस्विनोऽपीत्यर्थः। 'तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः' इत्यमरः। मन्त्राणां जपः अर्थानुसन्धानमित्यर्थः। तस्माज्जपधातोरर्थानुसन्धानार्थकत्वे प्रमाणं तु तज्जपस्तदर्थभावनमिति पातञ्जलसूत्रमिति बोध्यम्। उपरम्य तूष्णींभूत्वेत्यर्थः मणितानि रतिकालिकनादाः। 'मणितं रतिकूजितं' इत्यमरः। तेषां भेदाः प्रभेदाः तान् अधिजिज्ञासाञ्चक्रिरे विविदिषाञ्चक्रुरित्यर्थः। तेषामपि यद्येवं इतरेषां तु किं वक्तव्यमिति भावः॥ **पञ्चेति**॥ परमर्षयोऽपि पञ्चास्त्रस्य मदनस्

शास्त्रविद्यामेव परमर्षयोऽपि बहुमेनिरे । किं बहुना । श्रुतिन्यायविदोऽपि सूक्ष्मदर्शिनः, तासामालोकनं अग्निष्टोमस्य, द्वारोपसर्पणं द्वादशाहस्य, गानानिषेवणं गवामयनस्य, नाट्यावलोकनं नक्षत्रसत्रस्य, वाङ्मिश्रणं वाजपेयस्य, परिष्वङ्गं पौण्डरीकस्य, वदनास्वादनं वाजिमेधस्य, दन्तक्षतं दाक्षायणयज्ञस्य, नखलेखनं नानाविधानां संस्थानां, कुचमर्दनं कुण्डपायिनामयनस्य, रसनावमर्शनं राजसूयस्य, विपरीतरतं विश्वसृजामयनस्य, चरणताडनं चान्द्रायणस्य, परिभाषणं च

---

या विद्या कला शास्त्रमिति तात्पर्यार्थः । तामेव बहु मेनिरे श्लाघयामासुरित्यर्थः ॥ श्रुतीति ॥ श्रुतीनां न्यायः अधिकरणापरपर्याया युक्तिपूर्वमीमांसा शास्त्रमिति भावः । तद्विदस्तच्छास्त्रवेत्तारः सूक्ष्मदर्शिनः पण्डिता अपि । 'दूरदर्शी दीर्घदर्शी सूक्ष्मदर्शी बुधे पुमान्' इति नानार्थमाला । अग्निष्टोमस्य तत्संज्ञिकयागस्य तासामप्सरसामवलोकनं दर्शनं फलमाचक्षते वदन्तीत्येवमुत्तरत्रान्वयो बोध्यः । द्वादशाहस्य द्वादशाहस्साध्यक्रतुविशेषस्य द्वारोपसर्पणं तद्गृहद्वारोपगमनमित्यर्थः । गवामयनस्य एकसंवत्सरसाध्यगवामयनसंज्ञिकयागविशेषस्य गानानिषेवणं आलापश्रवणमिति यावत् । नक्षत्रसत्रस्य नक्षत्रेष्टियागस्य तासां नाट्यावलोकनम् । वाजपेयस्य बहुपशुकरणकवाजपेयसंज्ञिकयागस्य तासां वाङ्मिश्रणं प्रश्नोत्तररूपं वाङ्मेळनमित्यर्थः । पौण्डरीकस्य सोमसंस्थाविशेषस्येत्यर्थः । तासां परिष्वङ्गः आलिङ्गनं । वाजिमेधस्य अश्वमेधयागस्येत्यर्थः । वदनास्वादनं मुखचुम्बनमित्यर्थः । दाक्षायणसंज्ञको यो यज्ञः तस्य दन्तानां क्षतं अङ्कनमित्यर्थः । नानाविधानामनेकप्रकाराणां संस्थानां सोमसंस्थानां हविस्संस्थानां चेत्यर्थः । अत्रेदं बोध्यम् । सामान्यतः संस्थाः त्रिविधाः पाकयज्ञसंस्था इति हविर्यज्ञसंस्था इति सोमयज्ञसंस्था इति भेदेन । तत्र पञ्चमहायज्ञाष्टकापार्वणश्राद्धश्रावण्याग्रहायणीचैत्र्याश्वयुजीति सप्तपाकयज्ञसंस्थाः । अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धस्सौत्रामणीति सप्तहविर्यज्ञसंस्था इति । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यष्षोडशी वाजपेयः अतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्था इति । एतास्त्रिविधसंस्थानामिति यावत् । तासां स्तनयोः नखलेखनं नखक्षतमित्यर्थः । कुण्डपायिनामयनस्यानेकसंवत्सरसाध्यस्य यागविशेषस्येत्यर्थः । तासां कुचमर्दनं स्तनानपीडनमित्यर्थः । राजसूयस्य सार्वभौमानुष्ठितराजसूययागस्येत्यर्थः । तासां रसनयावमर्शनं रसनावमर्शनं तत्संज्ञकः चुम्बनविशेषः तं । विश्वसृजामयनस्य विपरीतरतमुपरिसुरतमित्यर्थः । चान्द्रायणस्य चन्द्रकलावृद्धिह्रासानुरोधेन कबळवृद्धिह्रासीकरणरूपव्रतविशेषस्य

पराकमान्तपनयोः फलमाचक्षते ।

सौहार्दं परमेयुषामपि तदा सन्नह्यतां विग्रहे
तासामेव कृते शनैस्सुमनसां दैत्येश्वराणामपि ।
सद्यः क्षालयितुं विवादमनतिप्रौढं सरोजेक्षणः
संगृह्णन्नुभयानिमानभिदधे तथ्यं च पथ्यं वचः ॥ १४ ॥

'हन्त भो देवासुराः किमिदमजानतामिव भवतामपि वैमत्यम् । तुल्ये परिश्रमे, तुल्ये चाभिजने, तुल्येनैव वो भवितव्यं फलेनापि । तदिमास्समुद्रसम्भवा अप्सरसो नाम तरुण्यस्साधारण्यो भवन्तु भवताम् ।

चरणताडनं चरणसम्बन्ध इति तात्पर्यार्थः । पराकसान्तपने प्रायश्चित्तार्थकृच्छ्रे तयोः तासामप्सरसां परिभाषणं सनिन्ददुर्वादमित्यर्थः । 'यस्सनिन्द उपालम्भस्तत्र स्यात्परिभाषणं' इत्यमरः । तात्कालिकताम्बूलादिवर्जनादेः वासनावशादद्यापि अनुज्झितत्वादिति भावः । फलं फलरूपमाचक्षते आहुरित्यर्थः ॥ **सौहार्दमिति** ॥ तदा तत्काले परमुत्कृष्टं सौहार्दं स्नेहम् । 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ दोहदं' इत्यमरः । ईयुषामुपेयुषामित्यर्थः । अमृतसम्पादनार्थमिति भावः । तासामेव कृते अप्सरस्स्त्रीनिमित्तमेवेत्यर्थः । विग्रहे युद्धे । 'रणाः कलहविग्रहौ' इत्यमरः । शनैस्सन्नह्यतां यतमानानामित्यर्थः । सुमनसां देवानां दैत्येश्वराणामपि अनतिप्रौढं ईषदुल्बणं विवादं विसंवादं सद्यः क्षाळयितुं परिहारयितुं सरोजेक्षणो भगवान् पुण्डरीकाक्षः उभयानिमान् देवासुरान् सङ्गृह्णन् आमन्त्र्य उपवेशयन्नित्यर्थः । तथ्यं सत्यभूतं । 'सत्यं तथ्यमृतं सम्यक्' इत्यमरः । पथ्यं हितकरं वचः अभिदधे जगादेत्यर्थः ॥ **हन्तेति** ॥ हन्तेति विषादे वाक्यारम्भे वा । 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः' इत्यमरः । भो देवासुराः भवतामपि गुरुभार्गवशिष्याणामपीत्याशयः । अविवेकिनां सदसद्विवेकरहितानामिव विमतानां भावो वैमत्यं अन्योन्यविद्वेष इत्यर्थः । हन्तेति खेदे ॥ **तुल्य इति** ॥ परिश्रमः मथनप्रयुक्तखेदः तस्मिन् तुल्ये समाने सति । उभयेषामपि मथने प्रवृत्तत्वादिति भावः । अभिजने वंशेऽपि । 'कुलान्यभिजनान्वयौ' इत्यमरः । उभयेषामपि काश्यपसम्भूतत्वादिति भावः । तुल्येनैव एकेनैव फलेनापि भवितव्यं अमृतैकफलोद्देशेनैव उभयेषां प्रवृत्तेरिति भावः ॥ **तदिति** ॥ तत्तस्मात्समुद्रसम्भवाः समुद्रोत्पन्नाः अप्सरसो नाम प्रसिद्धाः । 'स्त्रियां बहुष्वप्सरसः' इत्यमरः । तरुण्योऽपि युवत्योऽपि भवतामुभयेषामपीत्यर्थः । साधारण्यः अविशेषतो वर्तमाना इत्यर्थः । भवन्तु सन्त्वित्यर्थः । मुख्यफलवन्न्यायत आनुषङ्गिकगौणफलस्याप्युभयगामित्वादिति बोध्यम् ॥ गज

गजमेकमश्वमेकं गामेकां पञ्च च द्रुमान् दत्वा।
सम्भावयत विनाशितसर्वस्वं वासवं यदि प्रीतिः॥ १५ ॥'

इत्यभिहितमात्र एव सादरमाधाय शासनं शिरसि 'किं प्रतिभ्रमो भवच्छासने, किन्तु स्वामिने किमप्यनुपहृत्य न युक्तमस्माभिरियदासेवितुं, तदग्रे यदुत्पत्स्यते तद्भवाननुमन्यतां' इति प्रार्थ्यमानस्सुरासुरैरन्तरेव कृतस्मितः किञ्चिदन्वमन्यत रमारमणः।

अथ पुनरपि यावदाविलं ते
व्यधुरुदधिं विबुधाश्च दानवाश्च।
सममखिलजनुष्मतां मनोभिः
समजनि तावदनाविला त्रिलोकी॥ १६ ॥

अभ्यग्रावतरिष्यदर्णवसुताहस्ताग्रसम्भावना-
संहृष्यत्कनकारविन्दकलिकासौरभ्यसारस्पृशः।

---

मिति ॥ अनुजे इति शेषः। प्रीतिर्यदि अनुरागः अस्ति चेदित्यर्थः। एकं गजमेकमश्वं एकां गां धेनुं पञ्च पञ्चसङ्ख्याकान् द्रुमान् वृक्षांश्च दत्वा विनाशितं सर्वस्वं सर्वसौभाग्यं येन स तथाभूतं वासवं सम्भावयत बहुमानं कुरुतेत्यर्थः। सोदरे दत्तमक्षय्यमिति शास्त्रादिति भावः॥ **इतीति** ॥ इतीत्थमभिहितमात्रा एव ते देवासुराश्शासनं श्रीवासुदेवाज्ञां सादरं यथा तथा शिरसि आधाय भवतश्शासनमाज्ञा तस्मिन्विषये प्रतिभ्रमः किं प्रतिकूलोत्तरं वदामः किमित्यर्थः। किन्तु स्वामिने ईश्वराय भवते किमपि किञ्चिदपि अनुपहृत्य उपायनमकृत्वेत्यर्थः। अस्माभिः आमन्त्रं उपयोक्तुं अयुक्तं युक्तं न भवतीत्यर्थः। यद्वस्तु समुद्रादिति शेषः। अग्रे उत्तरमुहूर्तेषु उत्पत्स्यते जनिष्यतीत्यर्थः। तद्वस्तु भवाननुमन्यतां अङ्गीकुरुष्वेत्यर्थः। इतीत्थं सुरासुरैः प्रार्थ्यमानः अन्तरेव कृतं स्मितं मन्दहासो येन स तथाभूतं तत्त्वज्ञत्वादिति भावः। रमारमणः लक्ष्मीपतिः किञ्चिदीषदन्वमन्यत अङ्गीचकारेत्यर्थः॥ **अथेति** ॥ अथैकमत्यानन्तरं पुनरपि विबुधाश्चेति दानवाश्चेति त उभये उदधिं समुद्रं यावत् आविलं अस्वच्छम्। 'त्रिष्वागाधात् प्रसन्नोऽच्छः कलुषोऽनच्छ आविल' इत्यमरः। व्यधुः चक्रुरित्यर्थः। तावदखिला ये जनुष्मन्तः प्राणिन इत्यर्थः। जनुश्शब्दादुत्पत्तिवाचकात् तदस्यास्त्यस्मिन्निति मतुबिति मतुप्प्रत्ययः। तेषामाशयैर्मनोभिस्सममम्। 'भावोऽभिप्राय आशयः' 'साकं सत्रा समं सह' इति चामरः। त्रिलोकी त्रिभुवनमनाविला अत्यन्तस्वच्छनिर्मला समजनि समभूदित्यर्थः। उत्पत्स्यमानायाः भगवत्याः महालक्ष्म्याः प्र-

मन्दंमन्दममन्दचन्दनकिरः पस्पन्दिरे मारुताः
कालोन्निद्रकदम्बडम्बरमभूद्येनाङ्गमङ्गं हरेः ॥ १७ ॥

ततश्च समसमयसमुन्मिषत्कनकारविन्दकाननश्रीरिव नयनानन्दसन्दायिनी, समभागयोजितशरदिन्दुकन्दळबालारुणप्रविलापनचाकचक्यलक्ष्मीरिव चमत्कारकारिणी, सागरावर्तवि-

भावादिति भावः ॥ अभ्यग्रेति ॥ अभ्यग्रमन्तिकं 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययं' इत्यमरः। तस्मिन् अवतरिष्यन्ती उत्पत्स्यमाना याऽर्णोभिता लक्ष्मीः तस्याः यद्धस्ताग्रं कराग्रं तेन या सम्भावना स्वीकाररूपसम्माननमित्यर्थः। तया संहृष्यन्ती हर्षमापद्यमाना या कनकारविन्दकलिका सुवर्णकमलकुड्मलमित्यर्थः। 'कलिका कोरकः पुमान्' इत्यमरः। तस्याः यत्सौरभ्यं गन्धपरिमळः तस्याः सारः स्थिरांशः। 'सारो बले स्थिरांशे च' इत्यमरः। तं स्पृष्टवन्तः सारस्पृश इत्यर्थः। स्पृशोऽनुदके क्विनिति क्विन्प्रत्ययः धारणमहिम्ना लक्ष्म्याः करस्थकमलकुड्मलं विकसितमभूत् तत्कमलस्थगन्धसारग्राहिण इति भावः। अमन्दं यथा चन्दनद्रवशैत्यं किरन्तीति अमन्दचन्दनकिरः। अत्र चन्दनशब्दः लक्षणया चन्दनद्रवशैत्यवाचक इति बोध्यम्। एवंविधा ये मारुता वायवः मन्दं मन्दं पस्पन्दिरे ववुरित्यर्थः। तैः शैत्यसौरभ्यमान्द्यलक्षणत्रिविधगुणविशिष्टवायुभिरित्यर्थः। हरेर्वासुदेवस्य अङ्गमङ्गं प्रत्यवयवमित्यर्थः। 'अङ्गं प्रतीकोऽवयवः' इत्यमरः। कालस्समुचितकाल इत्यर्थः। तेन उन्निद्रः पुष्पितः यः कदम्बः अर्जुनवृक्षः तस्य डम्बर इव डम्बरो गर्वो यस्य तत्तथाभूतं। 'तथा पुष्पितमुन्निद्रं हसितोन्मीलितानि च' इत्यमरः। 'कदम्बः ककुभोऽर्जुन' इति च आसीदभूदित्यर्थः। यथा कदम्बवृक्षः क्रमेण शाखोपशाखासु पुष्पितो भवति तथा हरिः निखिलाङ्गेषु रोमाञ्चितोऽभूदिति भावः। तैरङ्गमङ्गं हरेरिति सुपाठः ॥ तत इति ॥ ततः अनन्तरं समसमयः एककालः तस्मिन् समुन्मिषन्ति विकासमानानि कनकारविन्दानि सुवर्णपद्मानि यस्मिन् तत्तथाभूतं यत्काननं वनं तस्य श्रीरिव नयनानामानन्दसन्दायिनी हर्षजनकेत्यर्थः। काचन इदमिति वक्तुमशक्येत्यर्थः। अनिर्वाच्येति यावत्। समौ कळङ्करहितत्वेन सदृशौ भागाववयवौ यस्मिन् कर्मणि तत्तथा समभागं यथा तथा योजिते शरावकपालद्वयवत्सङ्घटिते ये शरदिन्दुकन्दळे ये शरत्कालबालचन्द्रौ तयोर्मध्यदेश इति भावः। बालारुणस्य प्रातःकालसूर्यस्य यत् प्रविलापनं मूषानिष्टप्तद्रवीभूतकांस्यसीसादेरिव निष्टप्य द्रवीकृत्य प्रक्षेपणमित्यर्थः। तेन या चाकचक्यलक्ष्मीरिव थाळथळयरूपकान्तिरिवेत्यर्थः। चमत्कारः चमत्कृतिः विजातीयाह्लाद इति यावत्। तं कर्तुं शीलं यस्यास्सा तथाभूता फणिराजस्य शेषस्य साग-

वरसमुत्थितफणासहस्रमणिप्रभेव फणिराजस्य, काचन कान्तिधोरणी, सम्मूर्च्छिता दुग्धकल्लोलेषु सन्ध्येव चन्द्रातपे, सफलीचकार कमलाक्षतां कमलाक्षस्य। तत्र च ताळवृन्तचामरताम्बूलकरङ्ककनकालुकादिपरिकरपाणयो भावानुभावदेवता इव परिणताः शरीरबन्धेन शृङ्गारस्य, रम्भादिरामणीयकमात्रनिर्वर्णननिर्वृतानि लज्जयन्त्यो नयनानि नाकसदां, प्रादुर्बभूवुरग्रतः परिवारशक्तयः कमलालयायाः। तदनु च परमानन्दघनीभावपरिणाममयी मातृकावर्णसम्पन्नमकुटादिच-

रस्समुद्रस्तस्मिन् ये आवर्ताः अम्भोभ्रमाः त एव विवराणि रन्ध्राणि। 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः। 'सुषिरं विवरं बिलं' इति च। तेभ्यस्समुत्थिता फणानां सहस्रं ये मणयो रत्नानि तेषां या प्रभा दीप्तिस्सैवेत्यर्थः। दुग्धकल्लोलेषु क्षीरतरङ्गेषु संमूर्च्छिता सम्यक् प्रसृता। मूर्च्छा मोहसमुच्छ्राययोरिति धातोः कर्तरि क्तप्रत्ययः। काचन कान्तिधोरणी कान्त्यतिशयः कमलाक्षस्य कमले इव अक्षिणी यस्य स तस्य भावस्तत्ता इयमुक्तकमलाक्षता पूर्वमेव महेश्वरसाक्षात्कारात्सफला सञ्जाता इदानीन्तु कमलायां महालक्ष्म्यां अक्षिणी यस्य स इति विग्रहः। तस्य भावस्तत्ता तामेतामपि कमलाक्षतामद्य सफलीचकारेत्यर्थः। श्रीहरेः तत्कान्तिदर्शनानन्तरं महालक्ष्म्यां दृष्टिरभूदिति भावः॥ **तत्रेति**॥ तत्र तस्मिन् काले ताळवृन्तं व्यजनं तच्च चामरं प्रकीर्णकं तच्च ताम्बूलं च करकः कमण्डलुर्विशेषः स च कनकालुका भृङ्गारुः सा च ता एव आदयो येषां ते तथाभूताः ये परिकराः उपकरणानि तैस्सहिताः सताळवृन्तचामरताम्बूलकरककनकालुकादिपरिकराः तथाभूताः पाणयो यासां तास्तथाभूताः। 'व्यजनं ताळवृन्तकं' 'चामरन्तु प्रकीर्णकं' 'कमण्डलौ च करकः' इति सर्वत्रामरः। ताम्बूलकरङ्कताम्बूलकरण्डेति पाठे ताम्बूलदानोचितवर्तुलपात्रविशेष इत्यर्थो बोध्यः। किञ्च शरीरबन्धेन देहबन्धेन परिणताः कालविशेषादेवंरूपतामापन्ना इत्यर्थः। मूर्तिमत्य इति भावः। शृङ्गारस्य शृङ्गाररसस्येत्यर्थः। विभावानुभावौ स्थायिभावोपचायकभावविशेषौ तयोर्या देवताः अभिमानिदेवताः ता इव स्थिताः रम्भादीनां अप्सरसां यद्रामणीयकं सौन्दर्यं तन्मात्रस्य निर्वर्णनं दर्शनस्मरणादिकम्। 'निर्वर्णनन्तु निध्यानं' इत्यमरः। तेन निर्वृतानि सुखितानि नाकसदां देवानां नयनानि लज्जयन्त्यः लज्जितानि कुर्वन्त्यः कमलालयाया महालक्ष्म्याः परिवारशक्तयः आवरणदेवताः अग्रतः प्रथमतः प्रादुर्बभूवुः। यस्याः कटाक्षमात्रादेव पुंसः परिवारा भवन्ति तस्याः लक्ष्म्याः परिवारसद्भावे किं वक्तव्यमिति भावः॥ **तदनु चेति**॥ परमस्सर्वोत्कृष्टो य आनन्दः तस्य घनीभावः कठिनीभवनमित्यर्थः। 'कठिनाधिक-

रणान्तसर्वाङ्गसुन्दरी पतिदेवता धर्मनियन्त्रणेन पतिमुखलक्ष्यैकपातिनीभिरपि कटाक्षवृत्तिभिः परिसरनिष्यन्दमात्रपरिपोषितजगत्त्रयी, जातजायमानजनिष्यमाणरूपापि जातरूपैकमयीव लक्ष्यमाणा, धर्ममयी धार्मिकेषु, विज्ञानमयी विप्रेषु, पराक्रममयी बाहुजेषु, सम्पन्मयी राजसु, साहसमयी शरारुषु, कारुण्यमयी भक्तेषु, कामकलामयी परिणेतरि, विजयपताकिका जनार्दनस्य, जीविका मकरध्वजस्य, माता चराचरा-

---

चन्द्रेषु वाद्यमध्यमनृत्तयोः । मुस्तामुद्गरमेघेषु त्रिषु क्लीबे पुमान् घनः' इति भास्करः । तस्य यः परिणामः परिणतिः परिपाक इति यावत् । तन्मयी तत्स्वरूपेत्यर्थः । आनन्दमूर्तिरिति भावः । मातृकावर्णाः अकाराद्यक्षराणि मन्त्रशास्त्रे एतेषामक्षराणां तथा व्यवहारात् तैस्सम्पन्ना च सा मकुटादिचरणान्तसर्वाङ्गेषु शिर आरभ्य पादान्तावयवेषु सुन्दरी चेति कर्मधारयः । पञ्चाशद्वर्णमयसुन्दरमूर्तिरिति भावः । तथा चोक्तम् । 'पञ्चाशद्वर्णमयी परदेवता हि मे स्फुरति' इति । पतिर्देवता उपास्यमूर्तिर्यस्यास्सा तथाभूता धर्मेण नियन्त्रणं नियमनं सन्मार्गानुल्लङ्घनमिति यावत् । तेन पत्युर्मुखमेव लक्ष्यं तस्मिन् एकपातिनीभिः अत्यन्तं पतन्तीभिरपि कटाक्षाणां वृत्तयः ताभिः । परिसरः समीपदेशः । 'पर्यन्तभूः परिसर' इत्यमरः । तस्मिन्निष्यन्दमात्रं तेन परिपोषिता अभिवर्धिता जगतां लोकानां त्रयी त्रितयं यस्यास्सा तथाभूता । जातान्युत्पन्नानि जायमानानि इदानीमुद्भवन्ति जनिष्यमाणानि कालान्तरे भविष्यन्ति च यानि वस्तूनि तेषां स्वरूपापि जातरूपैकमयी जातैकवस्तुमयीव लक्ष्यमाणा परिदृश्यमाना । त्रिविधवस्तुरूपायाः एकविधवस्तुरूपत्वे विरोधः तदाभासस्तु जातरूपं सुवर्णं तदेकमयी वेति न विरोधः । 'चामीकरं जातरूपं' इत्यमरः । धार्मिकेषु धर्मनिष्ठेषु धर्ममयी सुकृतमयीत्यर्थः । 'स्याद्धर्ममस्त्रियां पुण्यः श्रेयसी सुकृतं वृष' इत्यमरः । विप्रेषु ब्राह्मणेषु विज्ञानमयी शास्त्रशिल्पादिज्ञानरूपेत्यर्थः । 'मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः' इत्यमरः । बाहुजाः क्षत्रियाः 'बाहुजः क्षत्रियो विराट्' इत्यमरः । तेषु पराक्रममयी शौर्यस्वरूपेत्यर्थः । राजसु प्रणताशेषसामन्तेषु अधीश्वरेष्वित्यर्थः । 'राजा तु प्रणताशेषसामन्तः स्यादधीश्वर' इत्यमरः । सम्पन्मयी । शरारुषु घातुकेषु । 'शरारुर्घातुको हिंस्र' इत्यमरः । साहसं दण्डोपायस्तन्मयीत्यर्थः । 'साहसं तु दमो दण्ड' इत्यमरः । भक्तेषु भक्तिमत्सु कारुण्यमयी कृपारूपेत्यर्थः । 'कारुण्यं करुणा घृणा' इत्यमरः । परिणेतरि विवाहविधिना स्वीकर्तरीत्यर्थः । कामस्य कला शीलं तन्मयीत्यर्थः । जनार्दनस्य श्रीहरेः जयपताकिका जयध्वजरूपेत्यर्थः । 'पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियां' इत्यमरः । मकरध्वजस्य मन्मथस्य जीविका जीवनौषध-

णां, महिषी नारायणस्य, समालक्ष्यत सौभाग्यदेवता ।

विरहासहेव सततं विहितस्थितिराननेन्दुना सविधे ।
कुवलयवनीव रेजे कुटिला कचसंहतिस्तस्याः ॥ १८ ॥

कपोलौ निर्मातुं किल शकलमेकं हिमरुचेः
यदादायात्याक्षीदसममिदमस्या इति विधिः ।
तदासीदाश्चर्यं परममखिलानां दिविषदां
तदुत्तंसीभूतं पुरमथितुरद्यापि मकुटे ॥ १९ ॥

अपिच कमलासनपदप्रदस्य कमलोपमां मीनकेतनजन-

मित्यर्थः । चराचराणां स्थावरजङ्गमानां माता जननी मूलप्रकृतित्वात्तस्या इति भावः । नारायणस्य वासुदेवस्य महिषी । 'कृताभिषेका महिषी भोगिन्योऽन्या नृपस्त्रियः' इत्यमरः । एवंविधा सौभाग्यदेवता महालक्ष्मीः समालक्ष्यत दृष्टा बभूवेत्यर्थः । तथा चोक्तं देवीभागवते । 'ततः स्फुरत्सहस्रांशुशीतांशुसदृशप्रभा । महालक्ष्मीस्समुदभूद्विकासिकमलेक्षणा ॥ श्रियावलोकिता देवा हर्षनिर्भरमानसाः । मुनिशापविनिर्मुक्ता गोविन्दस्य कृपावशात् । दूर्वासाः प्राह यत्पूर्वं शापान्तं लोकरीतितः । कारिष्यत्येव गोविन्दः कुशलानि सुरासुराः ॥' इति । अथ महालक्ष्मीं वर्णयति ॥ **विरहासहेति** ॥ तस्या महालक्ष्म्याः कुटिला अङ्गुळीयकवत् वक्रतासहिता कचानां शिरोरुहाणां संहतिः समूहः । 'कचः केशशिरोरुह' इत्यमरः । 'स्त्रियां तु संहतिर्वृन्दं' इति च । विरहः वियोगः तस्यासहा असहमानेव आननेन्दुना मुखचन्द्रेण सह सविधे विहिता विरचिता स्थितिरवस्थानं यया सा तथाभूता कुवलयवनीव नीलोत्पलवनमिव रेजे प्रचकाशे ॥ **कपोलाविति** ॥ विधिर्ब्रह्मा तदा तत्काले अस्याः कपोलौ गण्डदेशौ । 'अधस्ताच्चुबुकं गण्डकपोलौ तत्परा हनुः' इत्यमरः । निर्मातुं किल निर्माणं कर्तुमिवेत्यर्थः । हिमरुचेः चन्द्रस्य यदेकं शकलं खण्डमादाय गृहीत्वा इदमस्याः असममननुरूपं इति मत्वा अत्याक्षीत् विससर्जेत्यर्थः । अखिलानां दिविषदां देवानामाश्चर्यं विस्मयकरं परमं तच्चन्द्रशकलमद्यापि पुरमथितुः परमेश्वरस्य मकुटे शिरसि उत्तंसीभूतं अवतंसभूतं सद्वर्तते किल । 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेऽपि शेखरे' इत्यमरः ॥ **कमलासनेति** ॥ कवयः पण्डिताः 'संख्यावान् पण्डितः कविः' इत्यमरः । कमलासनपदं ब्रह्मलक्षणपदं प्रददातीति कमलासनपदप्रदं । यद्वा कमलासनस्य पदप्रदं संरक्षणप्रदं तथाभूतस्य । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । ब्रह्मणो मातृत्वात्तस्या इति भावः । मीनकेतनो मदनः । 'प्रद्युम्नो मीनकेतनः' इत्यमरः । तज्जनकस्य कामसञ्जीविनीत्वात्तस्या इति भावः ।

**कस्य मीनसादृश्यमपि कथयितुमपत्रपन्ते कवयोऽपि तन्नयनस्य। करगतकमलाघ्राणसंसक्तं तत्रत्यमौक्तिकमेव तस्या नासामणिः परिणेमे।**

**कस्यां श्रुतावधिगता मणिकर्णिकेति**
**मूढात्मनां प्रलपतां मुखमुद्रणाय।**
**आसीदशेषजनताभवतापहन्त्री**
**मातुः श्रुतावधिगता मणिकर्णिकैव॥ २०॥**

तन्नयनस्य लक्ष्मीनेत्रयुग्मस्येति तात्पर्यार्थः। कमलोपमां पद्मसाम्यं मीनसादृश्यं मत्स्योपमानमपि कथयितुं निगदितुं अपत्रपन्ते लज्जन्त इत्यर्थः। अत्रेदं बोध्यम्। कमलमासनं पीठादिरूपं यस्य स कमलासनः। 'पीठाद्यमासनं' इत्यमरः। तत्पदप्रदस्यैकत्र मीनात्केतनं भृत्यकृत्यं यस्य सः मीनकेतनः तज्जनकस्येत्येकत्र विग्रहः। एवञ्च यन्नयनावलोकितो ब्रह्मा पीठवत्कमलमधःकृत्य तदुपरि तिष्ठति एवं यन्नयनावलोकितो मदनः मीनमपि किङ्करीकृत्य जीवति तादृशलक्ष्मीनयनस्य कमलमीनाभ्यां साम्यं कथयितुं पण्डितानां महालज्जेति निगूढाशय इति। 'मन्देऽथ केतनं कृत्ये केतावुपनिमन्त्रण' इत्यमरः॥ **करेति**॥ करः हस्तः तं गतं यत्कमलं तस्य यदाघ्राणं गन्धग्रहणं तेन संसक्तं सङ्क्रान्तं मौक्तिकं मुक्ताफलं इवकारो भिन्नक्रमः तस्याः श्रीदेव्याः नासामणिः नासिकालङ्कारमणिस्सन् परिणेम इव परिणतो बभूवेत्यर्थः। विधृतनासाभरणेति भावः॥ **कस्यामिति**॥ मणिकर्णिका मणिमयकर्णभूषणमित्यर्थः। कस्यां श्रुतौ कस्मिन् कर्णे। 'कर्णिका ताळपत्रं स्यात्कुण्डलं कर्णवेष्टनं' 'कर्णशब्दग्रहौ श्रोत्रं' इति चामरः। मणिकर्णिका मणिकर्णीतीर्थम्। 'मणिकर्णिकासमं तीर्थं नास्ति ब्रह्माण्डगोळके' इति काशीरहस्यवचनात्। कस्यां श्रुतौ कस्मिन् वेद इति च व्यज्यते। 'श्रुतिः स्त्री वेद आम्नायः' इति कोशाभिधानात्। अधिगता विज्ञातेत्यर्थः। इतीत्थं प्रलपतामनर्थकवचांसि कथयतामित्यर्थः। 'प्रलापोऽनर्थकं वचः' इत्यमरः। मूढाः सदसद्विवेकरहिताः आत्मानो येषां तेषां मुखानि वदनानि तेषां मुद्रणं वाक्स्तम्भनं तस्मा इत्यर्थः। अशेषास्समस्ताः जनताया जनसमूहस्य ये भवे संसारे तापाः आध्यात्मिकाधिदैविकाधिभौतिकाख्याः तेषामपहन्त्री निहन्त्रीत्यर्थः। 'ग्रामता जनता धूम्या' इत्यमरः। 'भवस्संसाररुद्रयोः' इति भास्करः। मणिकर्णिका मणिमयकर्णभूषेत्यर्थः। पूर्ववत्तीर्थमिति च व्यज्यते। एवकारो भिन्नक्रमः। मातुः अखिललोकजनन्याः श्रुतावेव श्रोत्र एवेत्यर्थः। मातुः त्रिविक्रमावतारे जगन्निर्माणकर्तुर्वासुदेवस्येति च व्यज्यते। श्रुतावेव वेद एवेति च व्यज्यते। आसीत् बभूवेत्यर्थः। 'छन्दांसि जज्ञिरे तस्मात् तस्मात्तपानात्त्रयो वेदा

पद्महस्तायाश्च तस्याः पाणिकमलयोर्विवेकाय कल्पितानि चिह्नतयेव कङ्कणानि प्रचकाशिरे। आजानसरळमस्या हृदयमावृण्वतोरनवशेषमेव कुचकुम्भयोः कोपारुणाः कटाक्षा इव पुण्डरीकाक्षस्य कुंकुमपत्रभङ्गा ददृशिरे।

वक्त्राक्षिपाणिचरणासनधारणानि
पद्मानि यानि षडिमानि हरिप्रियायाः।
उद्बुद्धमेकमपि तेषु किल व्यनक्ति
संसारमोहरजनीमणुमात्रशेषाम् ॥ २१ ॥

---

अजायन्त अस्य निश्वसितमेवैतदृग्वेदो यजुर्वेद' इत्यादिश्रुतिभिर्यस्मात्परमपूरुषाद्वेदा जाता इति श्रूयन्ते तादृशपरमपूरुषसम्बन्धिन्यामेव श्रुतावधिगतेत्युत्तरमिति निगूढाशयः॥ **पद्महस्ताया इति** ॥ पद्मं हस्ते यस्यास्सा तथाभूतायास्तस्या महालक्ष्म्याः कङ्कणानि करभूषणानि। 'साक्षराङ्गुलिमुद्रा सा कङ्कणं करभूषणं' इत्यमरः। करश्च कमलं चेति द्वन्द्वः तयोः करकमलयोर्विवेकाय अयं हस्त इति इदं कमलमिति च भेदज्ञानायेत्यर्थः। चिह्नतया लक्षणत्वेन। 'चिह्नं लक्ष्म च लक्षणं' इत्यमरः। कल्पितानीव बद्धानीव विभान्तीति शेषः। प्रचकाशिरे बभुरित्यर्थः। काशृ दीप्ताविति धातोर्लिटि धातोरनभ्यासस्येति द्वित्वे कुहोश्चुरित्यभ्यासककारस्य चकारः हलादिश्शेषः॥ **आजानेति** ॥ जनिमारभ्य आजानं सरळं मृदुळमित्यर्थः। अस्या महालक्ष्म्याः हृदयं निरवशेषं निश्शेषमेव कृत्स्नमेवेति यावत्। आवृण्वतोः व्याप्नुवतोरित्यर्थः। कठिनयोरिति शेषः। कुचकुम्भयोः कोपः रोषः तेन अरुणा रक्ताः पुण्डरीकाक्षस्य श्रीहरेः कटाक्षाः अपाङ्गदर्शनानीव। 'अपाङ्गौ नेत्रयोरन्तौ कटाक्षोऽपाङ्गदर्शनं' इत्यमरः। कुङ्कुमं सुवासिनीभिर्निटिलदेशे धार्यमाणः काश्मीरजन्माख्यचूर्णविशेषः तेन विरचितानि पत्राणीति शाकपार्थिवादित्वान्मध्यमपदलोपी समासः। तेषां मकरिकादिपत्राणां भङ्गाः शकलानि। 'अथ कुङ्कुमं काश्मीरजन्माग्निशिखं वरं बाह्लीकपीतने। अनुबोधः पत्रलेखा पत्राङ्गुळिरिमे समे' इति चामरः। 'भङ्गः खण्डे पराजय' इति भास्करश्च। ददृशिरे दृष्टा बभूवुरित्यर्थः॥ **वक्त्रेति** ॥ हरिप्रिया लक्ष्मीः। 'कमला श्रीर्हरिप्रिया' इत्यमरः। तस्याः षट् षट्सङ्ख्याकानि इमानि परिदृश्यमानानि प्रसिद्धानीति वार्थः। वक्त्राक्षिपाणिचरणासनरूपाणि धारणं हस्तधृतकमलं चेति यानि पद्मानि वर्तन्त इति शेषः। 'वा पुंसि पद्मं नळिनं' इत्यमरः। तेषु षट्कमलेषु एकमपि कमलं उद्बुद्धं सम्यग्विदितं ध्यातमिति यावत्। 'बुद्धं बुधितं मनितं विदितं प्रतिपन्नमवसितावगते' इत्यमरः। संसारः जननमरणप्रवाहः स च मोहः अहमाद्यभिमानः स च संसारमोहावेव रजनी तमी। 'रजनी

पद्मे निवेश्य परिगृह्य च पद्ममेव
या पद्मरागमखिलं स्वमुदाजहार।
तस्याः श्रियस्समुचितानि हि तन्मयानि
ताटङ्ककङ्कणमुखानि विभूषणानि ॥ २२ ॥
विहारोऽप्येतस्या विकसति सरोजे चरणयोः
प्रसूते लौहित्यं यदि चरतु सा कुत्र सुमुखी।
इति ध्यायंध्यायं मृदुनि नवनीतादपि निजे
हृषीकेशो मेने हृदयभवने वासमुचितम् ॥ २३ ॥

ततस्तदिङ्गितवेदिनी मङ्गळदेवता परिवृता विभूतिभिः

---

यामिनी तमी' इत्यमरः ; तां अणुमात्रेण शिष्यत इत्यणुमात्रशेषः अवशिष्टलेशांशेत्यर्थः। तथाभूतां व्यनक्ति किल करोति खल्वित्यर्थः। अत्र किलेति वार्तायाम्। 'वार्तासम्भाव्ययोः किल' इत्यमर.। सर्वेषां वक्त्रादिकमलानां ध्याने किं वक्तव्यमिति भावः ॥ **पद्म इति** ॥ या लक्ष्मीः पद्मे कमले स्वयमिति शेषः। निवेश्य उषित्वेति यावत्। पद्मं कमलमेव परिगृह्य च हस्ते धृत्वा चेत्यर्थः। अखिलं समस्तं पद्मेषु रागोऽनुरागः। 'रागोऽनुरागे मात्सर्ये लाक्षादौ रक्तिमत्विषोः' इति भास्करः। तं उदाजहार जहारेत्यर्थः। अथवा उत्पादयामासेत्यर्थः। 'उपोद्धात उदाहार' इत्यमरः। अत्र या लक्ष्मीः अखिलं पद्मरागं शोणरत्नं। 'शोणरत्नं रोहितकं पद्मरागोऽथ मौक्तिकं' इत्यमरः। स्वं स्वकीयमित्यर्थः। 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरः। उदाजहार आचख्याविति च व्यज्यते। तस्याः श्रियो देव्याः ताटङ्ककङ्कणमुखानि कुण्डलवलयाङ्गुळीयकप्रभृतीनीत्यर्थः। विभूषणानि आभरणानि तन्मयानि हि पद्मरागमाणिक्यप्रचुराण्येवेत्यर्थः। 'हि हेताववधारणे' इत्यमरः। समुचितानि योग्यानि। 'समुचितो ज्ञातेऽभ्यस्ते समञ्जस' इति नानार्थमाला ॥ **विहार इति** ॥ विकसितं उन्मीलितं यत्सरसिजं कमलं तस्मिन् विहारः विहरणमपि संचारोऽपीत्यर्थः। एतस्याः श्रीदेव्याश्चरणयोः लौहित्यमारुण्यं प्रसूते यदि जनयति चेदित्यर्थः। कमलापेक्षया देवीचरणयोः मृदुत्वादिति भावः। सा सुमुखी लक्ष्मीः कुत्र कस्मिन् देशे चरतु विहरेदित्यर्थः। चरतेस्सम्भावनायां लोट्। इतीत्थं ध्यायंध्यायं ध्यात्वा ध्यात्वेत्यर्थः। हृषीकेशः श्रीनारायणः नवनीतं हैय्यङ्गवीनम्। 'नवनीतं नवोद्धृतं तत्तु हैय्यङ्गवीनं यत्' इत्यमरः। तस्मादपि मृदुनि कोमले। 'कोमलं मृदुलं मृदु' इत्यमरः। निजे स्वीयहृदयमेव भवनं सदनं तस्मिन् वासं स्थितिं उचितं योग्यमिति मेने बुबुध इत्यर्थः। पतिव्रतायास्तस्याः पतिशरणत्वमर्हमिति भावः ॥ **तत इति** ॥ ततोऽनन्तरं

पश्यत्सु देवासुरेषु, सहस्रादित्यवर्चसा सह कौस्तुभेन सागरादुत्तरन्ती पद्मेन सह चिन्तामणिमपि पाणिना धारयन्ती भुजाद्भुजान्तरं संक्रम्य भूभुजां कृतशिक्षेव भुजान्तरमेव भूवल्लभस्य समारुरोह।

दिव्या दुन्दुभयो विनेदुरभितः स्निग्धं जगुः किन्नराः
जानन्तः परदेवतां जय जयेत्यस्ताविषुस्तापसाः।
अम्लानैर्ववृषुस्सुमैस्सुरभिळैराश्चर्यमेघाश्च तां
आरूढां हृदयं हरेरपि सुरैरज्ञातमन्तःपुरम्॥ २४॥

सहस्रसङ्ख्याकाः ये आदित्यास्सूर्याः तेषां वर्चस्तेज इव वर्चो यस्य सः। 'तेजः पुरीषयोर्वर्च' इत्यमरः। तथाभूतेन कौस्तुभेन मणिना सह। 'कौस्तुभो मणिः' इत्यमरः। सागरात्समुद्रात्। ल्यब्लोपे कर्मणि पञ्चमी। उत्तरन्ती उद्गच्छन्तीत्यर्थः। पद्मेन कमलेन सह चिन्तामणिं चिन्तामणिरत्नमपि पाणिना निजहस्तेन धारयन्ती बिभ्रतीत्यर्थः। तस्य भगवतः इङ्गितं अभिप्रायम्। 'इङ्गितं स्यादभिप्राये गमने विषये पुमान्' इति हलायुधः। तस्य वेदिनी विदितवतीत्यर्थः। अत एव विभूतिभिः स्वपरिवारशक्तिभिः परिवृता मङ्गळदेवता रमादेवी। 'रमा मङ्गळदेवता' इत्यमरः। भूभुजां राज्ञां भुजात् एकेषां भुजं विहायेत्यर्थः। भुजान्तरं अन्यं भुजमित्यर्थः। अन्येषां भुजमिति यावत्। चरन्ती सञ्चरन्ती स्वभावचाञ्चल्यादिति भावः। अत एव कृतशिक्षेव विरचिताभ्यासेव भूवल्लभस्य भूमिदयितस्य श्रीहरेः भुजान्तरं वक्षःस्थलमेवेत्यर्थः। 'न ना क्रोडं भुजान्तरं। उरो वत्सं च वक्षश्च' इत्यमरः। समारुरोह प्रविवेशेत्यर्थः। तथा चोक्तं श्रीभागवते। 'तस्यौ निधाय निकटे तदुरः स्वधाम सव्रीडहासविकसन्नयनेन याता। तस्याश्श्रियस्त्रिजगतो जनको जनन्या वक्षोनिवासमकरोत्परमं विभूतेः॥

**दिव्या इति**॥ सुरा इन्द्रादयः तैरप्यज्ञातमविदितं हरेर्नारायणस्य हृदयमेव अन्तःपुरं। 'स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनं' इत्यमरः। आरूढां प्रविष्टां तां श्रीदेवीं अभितः परितः दिव्याः दिवि भवा इत्यर्थः। दुन्दुभयः भेर्यः। 'भेरी स्त्री दुन्दुभिः पुमान्' इत्यमरः। विनेदुः दध्वनुरित्यर्थः। नद शब्द इति धातोः अत एकहल्मध्येऽनादेशादेर्लिटीति सूत्रेणेत्वमभ्यासलोपश्च। किन्नराः देवयोनिविशेषाः स्निग्धं मेदुरं यथा मनोहरं यथा तथा जगुः गानं चक्रुरित्यर्थः। तापसाः तपस्विनः परदेवतां जानन्तः विदन्तस्सन्तः जय जयेत्यस्ताविषुः स्तुतिं चक्रुरित्यर्थः। आश्चर्यकराश्च ते मेघाश्चेति कर्मधारयः विस्मयकरमेघा इत्यर्थः। अम्लानैः शोषरहितैः सुरभिळैः सुगन्धिभिरित्यर्थः। सुमैः पुष्पैः। 'प्रसूनं कुसुमं सुमं' इत्यमरः। ववृषुः वृष्टिंचक्रुरित्यर्थः। तथा चोक्तं श्रीभागवते। 'शङ्खतूर्य-

चन्द्रं चन्द्रिकयेव चण्डकिरणं दीप्त्येव शक्त्या तया
नित्याश्लिष्टमनन्ययापि मिळितं देवं तदानीमिव।
दर्शंदर्शमनिर्वृतां दशशतीमक्ष्णां किरन्पादयो-
रस्तावीत्कमलालयामभिमुखीकर्तुं पुनर्वासवः॥ २५॥

भगवति जगज्जननि भक्तवत्सले परमः पुमानपि भवत्या विनाकृतो नीहार इव भानुमान्, निदाघान्त इव चन्द्रमा, नानन्दयामास नयनानि मादृशाम्। अधुना तु।

या त्वेषा तुलसीति वक्षसि हरेर्या कापि वन्यौषधि-
र्यश्चासौ तिलकालको बहुमतः श्रीवत्स इत्याख्यया।

---

मृदङ्गानां वादित्राणां पृथक् स्वनं। देवानुगानां सस्त्रीणां नृत्यतां गायतामभूत्। ब्रह्मरुद्राङ्गिरोमुख्यास्सर्वे विश्वसृजो विभुम्। ईडिरे विविधैर्मन्त्रैः तल्लिङ्गैः पुष्पवर्षिणः' इति॥ **चन्द्रमिति**॥ चन्द्रं चन्द्रिकयेव ज्योत्स्नयेव। 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमरः। चण्डकिरणं तिग्मांशुं दीप्त्येव प्रभयेव। 'भाश्छविर्द्युतिदीप्तयः' इत्यमरः। अनन्यया स्वाभिन्नया तया शक्त्या उभयोरपि मूलप्रकृतित्वादिति भावः। नित्यमनवरतमाश्लिष्टं आलिङ्गितमपि। 'नित्यानवरताजस्रं' इत्यमरः। तदानीं तत्काल इव मिळितं श्लिष्टं देवं नारायणं वासवो देवेन्द्रः दर्शं दर्शं दृष्ट्वा दृष्ट्वापि अनिर्वृतां तृप्तिमप्राप्तामित्यर्थः। आसेचनकत्वात्तस्येति भावः। अक्ष्णां नेत्राणां दशशतीं सहस्रमित्यर्थः। पादयोः किरन् प्रक्षिपन् सन् कमलालयां महालक्ष्मीं पुनरभिमुखीकर्तुं स्वस्मिन् प्रसादाभिमुखां कर्तुमित्यर्थः। अस्तावीत् स्तुतिं चकारेत्यर्थः। ष्टुञ् स्तुताविति धातोर्लुङि सिचि वृद्धिः परस्मैपदेष्विति वृद्धिः॥ **भगवतीति**॥ भक्तवत्सला अस्मदादिसेवकानुग्रहतत्परा तस्याः सम्बुद्धिः भगवति जगज्जननि जगन्मातः भवत्या विनाकृतः त्वया विरहितः वियुक्तः परमः पुमान् नारायणोऽपीति तात्पर्यार्थः। नीहारः हिमम्। 'अवश्यायस्तु नीहारः' इत्यमरः। अस्मिन् भानुमान् सूर्य इव निदाघान्ते वर्षाकालप्रारम्भे चन्द्रमा इव मादृशां नयनानि नानन्दयामास नाह्लादयामासेत्यर्थः। तत्सान्निध्यमन्तरा दर्शनीयोऽपि अदर्शनीयो भवतीति भावः॥ **येति**॥ हरेर्नारायणस्य वक्षसि उरःस्थले। 'उरो वत्सञ्च वक्षश्च' इत्यमरः। यैषा तुलसीत्याख्यया नामधेयेन। 'आख्याह्वे अभिधानञ्च' इत्यमरः। या कापि वन्यौषधिस्तु वनोत्पन्नौषधिविशेषः वर्तते वनमालारूपेणेति भावः। श्रीवत्स इत्याख्यया बहुमतस्सम्मतः यश्च तिलकालकः रोमावर्तः वर्तत इति शेषः। लाञ्छनरूपेणेति भावः। ध्यायतां ध्यानं कुर्वतां शमवतां शान्तान्तर्मुखानामि-

हन्तासीत्तदपि द्वयं शमवतामालम्बनं ध्यायतां
चारूणामपि चारु चारुचरणन्यासेन पद्माक्षि ते ॥

अपि च । यामेव भवतीमियन्तं कालमासेदुषीमरातिभवनानि मणिप्रभामिव महोरगफणागतामालक्ष्य चकितोऽस्मि तामेव सर्वलोकशरण्यस्य भगवतस्सरसिजेक्षणस्य वक्षोगतामालक्षयन् सर्वतो निर्वृतोऽस्मि ।

अज्ञानादतिलालनादपि च ते मातर्मया माद्यता
निर्माल्ये परदैवतस्य चलितं यत्किञ्चिदुच्छृङ्खलम् ।
तत्क्षन्तव्यमनन्यवेदिनि चिरापन्ने प्रपन्ने मयी-
त्याख्यान्तं मघवन्तमादिजननी दृष्ट्या दयामास सा ॥

---

त्यर्थः । आलम्बनं ध्यानास्पदं तद्द्वयमपि तुलसीश्रीवत्सोभयमित्यर्थः । हे पद्माक्षि श्रीः ते तव चारुणी सुन्दरे ये चरणे पदे । 'पदङ्घ्रिश्चरणोऽस्त्रियां' इत्यमरः । तयोः न्यासेन विन्यासेन चारूणां सुन्दराणां मध्ये चारु सुन्दरमित्यर्थः । 'सुन्दरं रुचिरं चारु सुषमं साधु शोभनं' इत्यमरः । आसीत् अभूत् । हन्तेति हर्षे ॥ **यामिति** ॥ हे जननि इयन्तं कालं एतावति काल इत्यर्थः । अरातयश्शत्रवः । 'अभियातिपरारातिप्रत्यर्थिपरिपन्थिन' इत्यमरः । तेषां भवनानि सदनानि तेष्वित्यर्थः । उभयत्र कालाध्वनोरत्यन्तसंयोग इति द्वितीया । आसेदुषीं स्थितामित्यर्थः । अथवा कर्मणि द्वितीया । एतावन्तं कालं हे मातः शत्रुभवनमेवाश्रित्य आसेदुषीमित्यस्य सम्प्राप्तामित्यर्थो वाच्य इति बोध्यम् । यामेव भवतीं त्वामित्यर्थः । महान् यः उरगः सर्पः तस्य फणागतां फणामाश्रितां प्रभां त्विषमिव समालक्ष्य दृष्ट्वा चकितचकितोऽत्यन्तभीतः अस्मि अभवमित्यर्थः । वर्तमानसामीप्ये वर्तमानवद्वेति लडिति बोध्यम् ॥ **तामिति** ॥ तां भवतीमेव अखिललोकानां शरण्यः संरक्षणधुरीणः तथाभूतस्य भगवतः सरसिजेक्षणस्य पुण्डरीकाक्षस्य वक्षोगतां उरःस्थलगतां आलक्षयन् पश्यन् अहं निर्वृतः सुखितोऽस्मि भवामीत्यर्थः ॥ **अज्ञानादिति** ॥ अज्ञानात् स्वरूपमाहात्म्यापरिज्ञानात् । अपि च हे मातः ते तव च अतिलालनात् प्रेमातिशयकरणात् माद्यता मदभाजेत्यर्थः । मया इन्द्रेण परदैवतस्य अम्बिकाया इत्यर्थः । निर्माल्ये धृतमालाविषये उच्छृङ्खलं निर्निरोधं अमर्यादं यथा तथेति यावत् । किञ्चिदीषत् यच्चरितमदपचरितमित्यर्थः । अपचारप्रकारश्च देवीभागवते । 'दुर्वासाश्शङ्करस्यांशश्चार पृथिवीमिमाम् । स ददर्श स्रजं दिव्यां देव्या विद्याधरीकरे । तां ययाचे मां देव्या विद्याधरवधूं मुनिः । याचिता मुनिना गीता मालां विद्याधराङ्गना ॥ ददौ तस्मै स्रजं देव्यास्सादरं प्रणिपत्य तम् । तामादायात्मनो मूर्ध्नि स्रजं स मुनि·

अपि च पुनरेवं वादिनि मघवति पतन्तीं पश्यन्ती प्रसादविमलां दृशं प्राणवल्लभस्य, चिन्तानुरूपमेव तस्य, चिन्तामणिना तमाह्लादयामास। इत्थमियत्यपि चलति संविधाने, प्रव्यक्ते च पशोरपि पक्षपाते मघवति परमेश्वरस्य, मदान्धाः प्रकृत्यैव मायया च विशिष्य मोहिता महासुराः। किं गतमेतैरतिक्षुद्रैः किञ्चित्तु वयमनुवर्तमानाः क्षणमपहरिष्यामस्सुधामित्यन्तर्निहितेन छद्मना पद्मनाभमनुरुध्यावतस्थिरे

सत्तमः॥ त्रैलोक्याधिपतिं देवं संमुखेऽथ शचीपतिं। दृष्ट्वैव शक्रं दुर्वासाः कृपालुर्मुनिसत्तमः॥ देव्याः स्रजं स्वशिरसस्सुगन्धोन्मत्तषट्पदाम्। आदाय हस्ताच्छक्राय चिक्षेपोन्मत्तवन्मुनिः॥ सा गृहीता तु शक्रेण चक्षुषोर्नार्पिता पुरा। शिरसा न धृता भक्त्या नाघ्रातामरदृष्टतः॥ सावज्ञमेकहस्तेन त्वैरावतमूर्धनि। न्यस्ता रराज कैलासशिखरे जाह्नवी यथा' इत्यादिना। हे अन्यं परकीयं वेदितुं शीलं यस्यास्सा अन्यवेदिनी सा न भवतीत्यनन्यवेदिनी तस्यास्सम्बुद्धिः। सर्वे वयं त्वत्पुत्रा इति भावः। चिरादापन्नः विपदं प्राप्तः। 'आपन्न आपत्प्राप्तः स्यात्' इत्यमरः। तथाभूते प्रपन्नश्शरणागतः तथाभूते मयि विषये तत्परदेवतापचारलक्षणमागः क्षन्तव्यं सोढव्यमित्यर्थः। इतीत्थमाख्यान्तं विज्ञापयन्तं मघवन्तमिन्द्रं आदिजननी आदिमाता सा लक्ष्मीः दृश्या अवलोकनेन। 'दृष्टिर्ज्ञानेऽक्ष्णि दर्शने' इत्यमरः। दयामास अनुजग्राह। दय आदान इति धातोः दयायासश्चेत्याम् कास्प्रत्ययादाममन्त्रे लिटीत्यसधातोरनुप्रयोग.॥ **पुनरिति**॥ एवं वादिनि अभिदधाने मघवति देवेन्द्रे सति पतन्तीं प्रसरन्तीं प्रसादोऽनुग्रहः तेन विमलां निर्मलशीतलां प्राणवल्लभस्य प्राणदयितस्य श्रीहरेः दृशं पश्यन्ती सा लक्ष्मीः तच्चिन्तायाः स्मृतेरनुरूपमनुगुणं। 'स्याच्चिन्ता स्मृतिराध्यानं' इत्यमरः। चिन्तामणिना तमिन्द्रमाह्लादयामास तोषयामासेत्यर्थः॥ **इत्थमिति**॥ इयति एतावत्यपि संविधाने सन्दर्भे चलति सति परमेश्वरस्य श्रीहरेः मघवति देवेन्द्रे विषये पक्षपाते अभिमाने पशोर्मूढस्यापि प्रव्यक्ते विस्पष्टे सति प्रकृत्यैव स्वभावेनैव मदान्धाः मत्ताः विशिष्य मायया च विमोहिताः महासुराः॥ **किं गतमिति**॥ अतिक्षुद्रैः अतिजघन्यैरिति तात्पर्यार्थः। एतैरिन्द्राय वितीर्णैर्वस्तुभिरित्यर्थः। किं गतं नः किमपगतमित्यर्थः। वयं किञ्चित् क्षणमनुवर्तमानाः अनुसरन्तः सुधामपहरिष्यामः इतीत्थं अन्तः निहितेन विन्यस्तेन छद्मना कैतवेन। 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे' इत्यमरः। पद्मनाभं श्रीहरिं अनुरुध्य अनुसृत्य अवतस्थिरे स्थितवन्त इत्यर्थः

अथ मथनविषण्णदेवासुरस्तोमजीवातुभिः
श्रमशिथिलितबन्धवातन्धयप्राणनाडिन्धमैः ।
शिशिरितहृदया दयासारतुङ्गैरपाङ्गैश्श्रियः
पुनरपि जलराशिमक्षोभयन् देवरक्षोभटाः ॥ २८ ॥

ततः सन्ततसन्तन्यमानमन्थननिर्बन्धनिर्विण्ण इव, सर्वस्वहरणसमुत्पन्नवैराग्य इव, तनयावियोगतरळान्तःकरण इव, वरुणालयः त्रिजगदगदङ्कारबिरुदाङ्कितेन दिव्यौषधिपरिवृतेन करकमलगृहीतकनककुम्भसंभृतामृतगन्धमन्थरगन्धवहस्पन्दमात्रनियन्त्रितजरामरणक्लेशपाशेन जगदनुजिघृक्षागृहीतेन जना-

---

समवप्रविभ्यः स्थ इत्यात्मनेपदम् ॥ **अथेति** ॥ अथानन्तरं मथनेन विषण्णाः दुःखिता ये देवासुराः तेषां स्तोमस्समूहः तस्य जीवातुभिर्जीवनौषधैरित्यर्थः । 'जीवातुर्जीवनौषधं' इत्यमरः । श्रमेण शिथिलितः शिथिलीकृतः भोगः कायो यस्य स तथाभूतः यः वातं पवनं धयति पिबतीति वातन्धयः सर्पो वासुकिः तस्य ये प्राणाः तेषां नाडिन्धमाः स्वर्णकाराः । 'नाडिन्धमः स्वर्णकार' इत्यमरः । 'कलादो रुक्मकारक' इति च । तथाभूतैः व्यत्यस्तप्राणशरीरयोस्समीकरणान्नाडिन्धमसाम्यामिति भावः । दयायास्सारः स्थिरांशः तेन पुष्टैः परिपुष्टैः श्रियः श्रीदेव्याः अपाङ्गैः कटाक्षैः शिशिरितानि शीतीकृतानि हृदयानि येषां ते तथाभूतास्सन्तः । देवरक्षांस्येव भटाः देवासुरा इत्यर्थः । पुनरपि जलराशिं अक्षोभयन् ममन्थुरित्यर्थः ॥ **तत इति** ॥ ततः पुनर्मथनानन्तरं सन्ततं सन्तन्यमानं बहुलीक्रियमाणं यन्मथनं तदेव निर्बन्धः निरोधः तस्मान्निर्विण्ण इव दुःखित इव । सर्वाणि यानि स्वानि धनानि । 'स्वोऽस्त्रियां धन' इत्यमरः । तेषां हरणं ग्रहणं तस्मादेव समुत्पतन्तमाविर्भूतं वैराग्यं विरागः यस्य स तथाभूत इव तनयया पुत्र्या महालक्ष्म्या यो वियोगः भर्तृगृहप्रेषणलक्षणो विरह इत्यर्थः । तेन तरळमनवस्थितं अन्तःकरणं यस्य स तथाभूत इव वरुणालयस्समुद्रः । त्रयाणां जगतां समाहारस्त्रिजगत् तस्य अगदङ्कारो वैद्यः । 'रोगहार्यगदङ्कार' इत्यमरः । त्रिजगदगदङ्कार इति यद्विरुदं इतरवैलक्षण्यस्य स्वगुणस्य च द्योतकं लक्षणमित्यर्थः । तेन अङ्कितः चिह्नितः तथाभूतेन दिव्यानि उत्तमानि यानि औषधानि भेषजानि । 'भेषजौषधभैषज्यान्यगदो जायुरित्यपि' इत्यमरः । तैः परिवृतो युक्तः तथाभूतेन । करौ कमले इव करकमले ताभ्यां गृहीतः विधृतो यः कनककुम्भस्सुवर्णमयकलशः तेन सम्भृतं धृतं यदमृतं तस्य यो गन्धः परिमळं तेन मन्थरः मेदुरः यः गन्धवहो वायुः तस्य स्पन्दमात्रमीषत्सञ्चारः तेन नियन्त्रिताः निगृहीताः जरा मरणञ्च अविद्यास्मितारागः

र्दनस्यैव मूर्तिभेदेन भगवता धन्वन्तरिणा सममाविर्भूय भूयसा भक्तिभारेण पुरुषोत्तमं प्रणिपत्य परिष्टुवन्नादाय तस्य करादमृतकलशमग्रे निवेदयन्निदमाचचक्षे ।

'त्वमसि परमं ब्रह्म त्वं नाथ सर्वजनान्तरः
तव किमवशे रम्यं वस्तु स्थलेषु जलेषु वा ।
तव किमुपदातव्यं लक्ष्मीपतेः कृपणैर्जनैः
तदपि दयसे स्वामिन्नस्मासु तत्त्वनिवेदनात् ॥ २९ ॥

अपि च ।

गामश्वं करिणं मणिं हिमकरं कन्यास्तरूनद्भुतान्
अन्नं चामृतमन्ततस्त्रिजगतीजीवातुमेतां सुताम् ।

द्वेषाभिनिवेशलक्षणपञ्चक्लेशा एव पाशाश्चेति यस्य स तथाभूतेन । जगतां लोकानामनुग्रहीतुमिच्छा अनुजिघृक्षा तदर्थं गृहीतः स्वीकृतः तथाभूतेन जनार्दनस्य श्रीहरेर्मूर्तिभेदेन अवतारभेदेनेव स्थितेन भगवता षड्गुणैश्वर्यशालिना धन्वन्तरिणा सह आविर्भूय समागत्येत्यर्थः । भूयसा अधिकेन भक्तिभारेण अनुरागविशेषेणेत्यर्थः । पूज्येष्वनुरागो भक्तिरित्यभियुक्तवचनात् । पुरुषोत्तमं श्रीहरिं प्रणिपत्य नमस्कृत्य परिष्टुवन् स्तुतिं कुर्वन्नित्यर्थः । तस्य धन्वन्तरेरित्यर्थः । कराद्धस्तात् । स्वयमिति शेषः । अमृतभरितः कलशः अमृतकलशः तमादाय गृहीत्वा अग्रे वासुदेवपुरोभागे निवेदयन् निक्षिप्य निर्दिशन्नित्यर्थः । इदं वक्ष्यमाणमाचचक्षे जगादेत्यर्थः ॥ त्वमिति ॥ हे नाथ जगदधिपते त्वं परमं सर्वोत्कृष्टं ब्रह्मासि त्वं सर्वजनानां अन्तरः अन्तरात्मेत्यर्थः । 'अन्योऽन्तर आत्मानन्दमय' इति श्रुतेः । स्थलेषु भूभागेषु जलेषु रम्यं रमणीयं किं वस्तु कः पदार्थः अवशे अनधीने अस्वाधीनं सद्वर्तते । इहेदानीं लक्ष्मीपतेस्तव कृपणैः कदर्यैः कुत्सितस्वामिभिरित्यर्थः । 'कदर्ये कृपणक्षुद्रकिंपचानमितम्पचा' इत्यमरः । जनैः उपदातव्यं देयं वस्तु किं न किमपीति भावः । हे स्वामिन् तदपि तथापि तत्त्वं त्वत्स्वरूपं । 'तत्त्वं दिलम्बमानेऽपि स्वरूपे परमात्मनि' इति भास्करः । तस्य निवेदनात्परिज्ञानात् अस्मासु विषये दयसे अनुगृह्णासि पासीति वार्थः । दय दानगतिरक्षणहिंसादानेष्विति धातोर्लड्रूपमेतत् । 'ज्ञानी स च मम प्रिय' इति शास्त्रादिति भावः ॥ अपि चेति ॥ गां कामधेनुं अश्वमुच्चैःश्रवसं करिणमैरावतं मणिं चिन्तामणिं कौस्तुभमाणिक्ये मणी इति द्विवचनान्तस्सुपाठः । हिमकरं चन्द्रं कन्याः रम्भाद्यप्सरसः अद्भुतानाश्चर्यकरान् तरून् पारिजातादिवृक्षान् अन्नं अदनीयममृतं सुधामित्यर्थः । त्रिजगतीनां जीवातुं जीवनहेतुं एतां त्वदुरसि परिदृश्यमानां सुतां मत्पुत्रीं महालक्ष्मीं प्राणानामाचार्यः प्रतिष्ठापनाचार्यः

प्राणाचार्यममुं च ते चरणयोः प्राणैस्समं विन्यसन्
स्वामिन् कामपि ते प्रसादकणिकां याचे दया चेन्मयि ॥'
वदति मधुरमित्थं वल्लभे वाहिनीनां
जनयितरि रमाया जातहर्षो मुकुन्दः ।
सकरुणमनुगृह्णन् सानुरागैरपाङ्गैः
अकिरदमृतवर्षैरेनमार्द्रैर्वचोभिः ॥ ३१ ॥

तदनु यथागतं गते सरस्वति, सरस्वतीरमणशतमन्युमुखाः बर्हिर्मुखाः प्रतीक्षमाणा निदेशं परमेश्वरस्य परिवार्य केशवमवतस्थिरे । दानवास्तु मध्ये निधातव्यममृतकलशं मधुसूदनस्य पुरोनिहितमन्यथाशङ्कमानाः, गणयन्तः पक्षपातं गरुडध्वजस्य, चिन्तयन्तश्चिन्तामणिप्रदानं वैषम्यकारणं, आ-

---

थाभूतं अमुं धन्वन्तरिं च प्राणैस्समं मत्प्राणैस्सह ते तव चरणयोः विन्यसन् समर्पयन्नहमिति शेषः । मयि कृपा दया अस्ति चेत् कामपि प्रसादकणिकामनुग्रहलेशं याचे प्रार्थयामीत्यर्थः ॥ **वदतीति** ॥ रमाया जनयितरि पितरि वाहिनीवल्लभे नदीभर्तरि समुद्रे । 'सेनानद्योस्तु वाहिनी' इत्यमरः । इत्थमुक्तप्रकारं मधुरं मनोहरं यथा तथा वदति विज्ञापयति सति जातः समुत्पन्नः हर्ष आनन्दो यस्य स तथाभूतः मुकुन्दो नारायणः सानुरागैः प्रेमसहितैः अपाङ्गैः कटाक्षैरनुगृह्णन् प्रसादं कुर्वन् सन् एनं समुद्रं प्रति । द्वितीयाटौस्स्वेन इति एनादेशः । अमृतं वर्षन्तीति तानि तथाभूतैः अत एव आर्द्रैश्शीतलैः वचोभिरकिरत् व्याजहारेति तात्पर्यार्थः । स्वीकृतकन्यारत्नोपहारः को वा उपगन्तारं प्रति सानुरागं न भाषत इति भावः ॥ **तदन्विति** ॥ तदन्वनन्तरं सरस्वति समुद्रे । 'सरस्वान्सागरोऽर्णवः' इत्यमरः । आगतमागमनं अनतिक्रम्य यथागतम् । अव्ययं विभक्तीत्यादिनाऽव्ययीभावसमासः । गते प्रयाते सति सरस्वतीरमणो ब्रह्मा शतमन्युरिन्द्रः तावेव मुखे प्रमुखौ येषां ते तथाभूता बर्हिर्मुखा देवाः । 'बर्हिर्मुखाः क्रतुभुज' इत्यमरः । परमेश्वरस्य शिवस्य । 'शिवश्शूली महेश्वर' इत्यमरः । निदेशं मदाज्ञामस्याज्ञामित्यादिना पूर्वोक्तामाज्ञामित्यर्थः । प्रतीक्षमाणाः परिपालयन्तस्सन्तः केशवं श्रीहरिं परिवार्य आवर्त्य अवतस्थिरे ऊषुरित्यर्थः । अथ रक्षसां वृत्तान्तं वर्णयति ॥ **दानवा इति** ॥ मध्ये देवासुराणामिति शेषः । निधातव्यं निधातुं योग्यं अमृतकलशं मधुसूदनस्य श्रीहरेः अग्रे पुरोभागे निहितमिति निक्षिप्तमिति अन्यथा प्रकारान्तरमाशङ्कमानाः सन्दिहानाः अमृतमुभयेभ्यो देयात् अथ अस्मान् प्रतार्य तेभ्य एव देयादिति संशयं प्राप्ता इति भावः । गरुडध्वजस्य श्रीहरेः देवेष्विति शेषः । पक्षपातं अभिमानं गणयन्तः आकलयन्त इत्यर्थः ।

लोच्य परस्परं, आसीदन्त इव सान्त्वनाय सामाजिकानां, परिवृत्य सुधाकलशं, परिगृह्णन्तः प्रहरणानि, परिमेळयन्तः स्वबान्धवान्, अवतारयामासुरादितः कामपि विवादकथाम् 'भगवन्तौ चक्रायुधचतुर्मुखौ कथमत्र भवितव्यं विभागेन । अथवा न पृच्छामो युवाम् ।

आमन्त्रिताः स्मो न वयं युवाभ्यां
अभ्यर्थिताः स्मो न च सान्त्ववादैः ।
अस्माभिरादौ समयं बबन्धु-
रागत्य ये तान्वयमालपामः ॥ ३२ ॥

ननु च भो भ्रातरस्सुपर्वाणश्शृणुत यूयं अपि जानीध्वे समयमाचार्येण वः कृतमस्मासु ।

वासवस्य इन्द्रस्य सामाजिकानां सभासदां मध्य इत्यर्थः । 'सभ्यास्सामाजिकाश्च ते' इत्यमरः । चिन्तामणिप्रदानं चिन्तामणेः दापनमिति भावः । वैषम्यं तरतमभावः तस्य कारणं निमित्तं चिन्तयन्तः जानन्त इत्यर्थः । परस्परमालोच्य सान्त्वनायेव श्रमापनोदनायेवेत्यर्थः । सुधाकलशं परिवृत्य आसीदन्तः तिष्ठन्तः सुधाकलशं परिवृत्य स्थितवन्त इति भावः । दानवाः असुरास्तु अत्र तुशब्द एवकारार्थः । प्रहरणान्यायुधानि । 'आयुधं तु प्रहरणं' इत्यमरः । परिगृह्णन्तः धरन्त इत्यर्थः । युद्धार्थमिति भावः । स्वेषां बान्धवाः स्वजनाः तान् । 'सगोत्रबान्धवज्ञातिबन्धुस्वजनास्समा' इत्यमरः । परिमेळयन्तः पुञ्जीकुर्वन्तः । आदितः आदौ सप्तम्यास्तसिः । कामपि यामेकामित्यर्थः । विवादस्य कथा प्रस्तावः । तां अवतारयामासुः उपचक्रमुरित्यर्थः ॥ भगवन्ताविति ॥ हे भगवन्तौ चक्रायुधचतुर्मुखौ विष्णुब्रह्माणावित्यर्थः । अत्र एतदमृतविषये विभागेन भिन्नांशेन । 'भागस्तुरीयः पादः स्यादंशभागौ तु वण्टक' इत्यमरः । कथं भवितव्यं केन वा प्रकारेण विभजनं कार्यं तद्भूतामित्यभिप्रायः ॥ अथवेति ॥ अथवा आहोस्वित् युवां न पृच्छामः पृच्छां न कुर्म इत्यर्थः । तत्कुत इति चेदत आह ॥ आमन्त्रिता इति ॥ युवाभ्यां भवद्भ्यां आमन्त्रिताः आहूताः न स्मः न बभूविमेत्यर्थः । वर्तमानसामीप्ये वर्तमानवद्वेति वा लट् । सान्त्ववादैः प्रियोक्तिभिः अभ्यर्थिताः सम्प्रार्थिताश्च न स्मः । आदौ प्रथमं ये देवाः आगत्य अस्माभिस्समं समयं शपथम् । 'समयाश्शपथाचारकालसिद्धान्तसंविद' इत्यमरः । बबन्धुः चक्रुरिति तात्पर्यार्थः । तान् देवान् प्रति वयं आलपामः पृच्छामः । 'स्यादाभाषणमालाप' इत्यमरः ॥ नन्विति ॥ ननु च भो भ्रातरः अवरजा इत्यर्थः ।

क्व मन्दरो महागिरिः क्व सागरो दुरुत्तरः
क्व वा स वासुकिः फणी फणीन्द्रमण्डलाग्रणीः ।
भवन्त एव साधयन्तु भावयन्तु चामृतं
पिबन्तु चातिथीनिमान् सुरान्विधाय दानवाः ॥ ३३ ॥

किं बहुना ।

शक्ता भवेम यदि किं वरयेम युष्मान्
तत्साधका मथनकर्मणि यूयमेव ।
शक्त्या यतेमहि वयं च परन्तु तस्मिन्
यत्नानुरूपमितरानपि भावयध्वम् ॥ ३४ ॥

ने । तदिह भवन्त एव विदांकुर्वन्तु ।

कति भग्ना गिरिवहने कति पतिता वासुकेस्समानयने ।
कति दग्धा भुजगविषैः कति भागानिह पिबेमेति ॥ ३५ ॥'

'भगिन्यौ भ्रातरौ' इत्यमरः । वः युष्माकमाचार्येण बृहस्पतिना अस्मासु विषय कृतं व्यवस्थितं समयं सिद्धान्तं यूयं भवन्तोऽपि जानीध्वे ननु मनुध्वे किलेत्यर्थः । सन्धिकाले सुराचार्यप्रतिज्ञातसमयप्रकारमेव श्लोकद्वयेनाह ॥ क्वेति ॥ महागिरिर्मन्दरः क्व दुर्भरत्वादानेतुमशक्य इति भावः । दुःखेन उत्तरीतुं शक्यः दुरुत्तरः सागरः क्व लवणादिसमुद्रानुल्लङ्घ्य क्षीरार्णवगमनं दुष्करमिति भावः । फणीन्द्राणां सर्पाणां मण्डलं समूहः । 'मण्डलं चक्रवाळकं' इत्यमरः । तस्मिन् तस्य वा अग्रणीः श्रेष्ठस्स वासुकिः क्व । वृद्धस्य तस्यागमनं कथं सम्भवेदिति भावः । भवन्त एव उपकरणानीति शेषः । साधयन्तु सम्पादयन्तु अमृतञ्च भावयन्तु उत्पादयन्त्वित्यर्थः । परं त्विति शेषः । हे दानवाः सुरान् देवानिमानस्मानतिथीन् विधाय कृत्वा पिबन्तु पानं कुर्वन्तु इति समयबन्धं जानीध्वे नन्विति पूर्वेणान्वयः ॥ **शक्ता इति** ॥ वयं देवा इत्यर्थः । शक्ता यदि कार्यं निर्वोढुं समर्थाश्चेदित्यर्थः । युष्मान् वरयेम किं प्रार्थयेम किमित्यर्थः । अशक्ता हि परानपेक्षन्त इति भावः । तत्तस्मान्मथनकर्मणि यूयं दानवा एव साधकाः कार्यनिर्वाहकर्तार इत्यर्थः । परन्तु वयञ्च देवा वयमपीत्यर्थः । तस्मिन्मथनकर्मणि शक्त्या सामर्थ्येन यतेमहि यत्नं करवाम इतरानस्मानपि यत्नानुरूपमस्मत्प्रयासानुगुणं भावयध्वं पर्यालोचयतेत्यर्थः । इति समयबन्धं जानीध्व इति पूर्वेणान्वयः ॥ **तदिति** ॥ तत्तस्माद्भवन्त एव [विदा]ङ्कुर्वन्तु पश्यन्त्वित्यर्थः । विदाङ्कुर्वन्त्वित्यन्यतरस्यामिति निपातनात्साधुः ॥ ॥ गिरिर्मन्दरः तस्य वहने कति दानवाः भग्नाः नष्टा इत्यर्थः । वासुकेस्समानयने कति दानवाः पतिताः च्युता इत्यर्थः । बहवो नष्टा इति

इति वदत्सु दानवेषु वाचस्पतिरिदमभाषत।

'यद्भग्नेषु भवत्सु पूर्वमनिलेनैवाद्रिराकम्पितो
यच्चापत्यकळत्रदर्शनकृते यूयं गता भूतलम्।
यद्वा भोगिपतेः फणाग्रवहनं युष्माभिरेवार्थितं
सर्वं वेद स एष एव भवतामाचार्यपादः कविः॥ ३६॥'

इत्युत्तरोत्तरयुक्तिवादिनि वाचस्पतौ, प्रतिवदति च यथाशक्ति भार्गवे, परिणमति शनैः कलहे, प्रहरणादानभीषणेषु दानवेषु, परिकरमाबध्नत्सु निर्जरेषु, चिन्तयन्मनसा चिरमाराध्य परां शक्तिं, आसाद्य तदीयमेव मोहनं रूपमतिसन्धाय दानवाननुगृह्णीयाममरानिति कृतनिश्चयस्सद्य एव तिरोदधे सह कमलासनेन कमललोचनः। ततश्च।

भावः। भुजगो वासुकिः तस्य विषैः कति दानवा दग्धाः। इह अवशिष्टा वयं कति भागान् पिबेमेति। तथा चोक्तं देवीभागवते। 'समन्तात्तत्र दैत्यास्ते ज्येष्ठभागजिघृक्षया। मन्दरं चालयन्तोऽद्रिं नष्टाः केचिन्महावटे॥ वासुकेर्मुखनिःश्वासैः दग्धा दैत्यास्तथापरे' इति॥ **इतीति**॥ इतीत्थं दानवेषु वदत्सु सत्सु वाचस्पतिरिदं वचनमभाषत॥ **यदिति**॥ हे दानवाः भवत्सु युष्मासु भग्नेषु भङ्गं प्राप्तेषु सत्स्वित्यर्थः। पूर्वं प्रथमतः अनिलेनैव अद्रिः मन्दरः आकम्पितः प्रचालित इति यत् किंच अपत्यकळत्रदर्शनकृते पुत्रदारादिसन्दर्शनार्थमित्यर्थः। यूयं भूतलं पाताळं गताः याता इति यत् भोगिपतेर्वासुकेः फणाग्रवहनं वा युष्माभिरेव अर्थितमिति यत् तत्सर्वं भवतामाचार्यपादः उपदेष्टा। 'मन्त्रव्याख्याकृदाचार्य' इत्यमरः। स एष कविः शुक्रः। 'उशना भार्गवः कविः' इत्यमरः। वेद जानातीत्यर्थः॥ **इतीति**॥ इतीत्थं उत्तरोत्तरमुपर्युपरि युक्तिं स्वपक्षसाधनोपपत्तिं वदितुं शीलं यस्य स तथाभूते वाचस्पतौ विषये भार्गवे कवौ यथाशक्ति प्रवदति प्रत्युत्तरं कुर्वति सति शनैश्शनैः कलहः युद्धं तस्मिन् परिणमति प्रसक्ते सति दानवेषु प्रहरणान्यायुधानि तेषामादानं धारणं तेन भीषणेषु सत्सु। 'दारुणं भीषणं भीष्मं' इत्यमरः। निर्जरा देवास्तेषु परिकरं कच्छपुटलक्षणगात्रबन्धम्। 'परिवारे परिकरः पर्यङ्कनिकुरुम्बयोः। प्रगाढे गात्रबन्धे च विवेकारम्भयोरपि' इति भास्करः। आबध्नत्सु बन्धनं कुर्वत्सु सत्सु मनसा चिन्तयन्नालोचयन् कमललोचनः परामुत्कृष्टां शक्तिं आदिदेवतां दुर्गादेवीमित्यर्थः। आराध्य सम्पूज्य। 'शक्तिः कासूः प्रभुत्वादिबलं दुर्गादिदेवता' इति भास्करः। तदीयं परदेवतासम्बन्धीत्यर्थः। मोहनं जगद्विमोहकरूपमासाद्य प्राप्य दानवानतिसन्धाय वञ्चयित्वा अमराननुगृह्णीयां प्रसादं कुर्यामित्यर्थः॥ **इती-**

दोर्भिर्दुर्भरशैलनिर्भरपरीवर्तावसीदद्बलैः
गात्रैरुद्भटकालकूटगरळज्वालावलीढोज्झितैः।
उत्तालैः श्वसितैरुपर्युपरि च प्राणैः प्रतिष्ठासुभिः
स्पर्धामात्रबलोत्तरा युयुधिरे देवैस्समं दानवाः॥ ३७॥
भग्नरथा भग्नाश्वा भग्नबला भग्नशस्त्रास्त्राः।
निर्विद्य भुवि निषेदुस्समभुभये सर्वतो भग्नाः॥ ३८॥

परिश्रान्ताश्च ते परितोऽपि चक्षुर्व्यापारयाञ्चक्रिरे। अद्राक्षुश्च ते तत्र किञ्चिदपर्यायसमुन्मिषच्चम्पकवकुळहरिचन्दनतिलकमल्लिकासहकारमाधवीकरवीरवासन्तिकाकुसुमपरिमळा-

ति॥ इत्थं कृतनिश्चयस्सन् सद्य एव कमलासनेन ब्रह्मणा सह तिरोदधे अन्तर्धानमभजतेत्यर्थः। तथा चोक्तं देवीभागवते। 'महालक्ष्मीप्रसादेन विष्णुः स्त्रीरूपमास्थित' इति॥ **दोर्भिरिति**॥ दुःखेन भर्तुं शक्यो दुर्भरः यश्शैलो मन्दरः तेन निर्भरमत्यन्तं परिवृत्तानि व्यत्यस्तानि अवसीदद्बलानि विनश्यत्सामर्थ्यानि येषां तथाभूतैः दोर्भिः बाहुभिः। मन्दरवहनादेव विनष्टभुजबला इत्यभिप्रायः। उद्भटाः अतिदुस्सहाः ये कालकूटस्य गरळस्य ज्वालाः तैः अवलीढाश्च ते उज्झिताश्चेति स्नानानुलिप्तवत्समासः। तथाभूतैः गात्रैः देहैः। 'गात्रं वपुस्संहननं' इत्यमरः। उत्तालैः उत्सृष्टताळपरिमाणैः अतिदीर्घैः श्वसितैः मुखवायुभिः प्रस्थातुं प्रयातुमिच्छन्तः प्रतिष्ठासवः तथाभूतैः प्राणैश्च उपलक्षिता इति शेषः। दानवाः बलिबाणादयः स्पर्धामात्रं अभिभवनेच्छैव बलं सामर्थ्यं तेन उत्तराः उत्तमास्सन्तः। 'त्रिषूदीच्योत्तमोर्ध्वेषूत्तर' इति भास्करः। देवैस्समं युयुधिरे युद्धं चक्रुरित्यर्थः॥ **भग्नेति**॥ भग्नरथाः विनष्टस्यन्दनाः भग्नाश्वा भग्नबलाः भग्नशस्त्रास्त्राः अत एव सर्वतो भग्ना उभये देवासुराः सममेकदा निर्विद्य युद्धान्निर्वेदं प्राप्येत्यर्थः। भुवि निषेदुरुपविविशुरित्यर्थः॥ **परीति**॥ परिश्रान्ता विश्रान्ताः सर्वे ते देवासुराः परितस्सर्वतोऽपि चक्षुः व्यापारयाञ्चक्रिरे प्रसारयामासुरित्यर्थः॥ **अद्राक्षुरिति**॥ ततः चक्षुःप्रसारणानन्तरं च ते सर्वे देवासुराः किञ्चिदीषदप्यपर्यायेण पौर्वापर्यराहित्येन समुन्मिषन्तः विकसन्तः यः चम्पकः चाम्पेयवृक्षः। 'अथ चाम्पेयश्चम्पको हेमपुष्पक' इत्यमरः। स च वकुळः अशोकः। 'वकुळो वञ्जुळोऽशोके समौ' इत्यमरः। स च हरिचन्दनः श्रीगन्धवृक्षः तिलकः। 'तिलकः क्षुरकः श्रीमान् समौ पिचुळजाबुकौ' इत्यमरः। तौ च मल्लिका गिरिमल्लिकावृक्षः श्रीहस्तिनीवृक्ष इति वार्थः। 'वत्सको गिरिमल्लिका' 'श्रीहस्तिनी तु भूरुण्डी तृणशूल्यन्तु मल्लिका' इति चामरः। सहकारो रसालः स च माधवी वासन्तिकालता 'वासन्ती माधवी लता' इत्यमरः। सा च करवीरः करवीरवृक्षः स चेति द्वन्द्वः समुन्मिष-

द्गारिमारुतानुसारिमधुकरीगानकलकलोन्मिश्रकलकण्ठकण्ठनादमेदुरं, दुरन्तविरहोदन्तदूयमानमानिनीजनावर्जितपल्लवशयनसमुल्लसितलताकुञ्जमञ्जुळं, वञ्जुळविटपिसञ्चरदळिकुलभारपराकीर्णपरागपुञ्जपिञ्जरासारसारणीसलिलपूरपूरितालवालबालपादपच्छायसुखनिषण्णकिन्नरीसल्लापसमाकर्णनोल्लसितकर्णिकारकलिकानिकायरमणीयं, अनतिक्रमणीयशम्बरशासनशास-

तामेतेषां यानि कुसुमानि तेषां परिमळो गन्धः । 'परिमळो गन्धे जनमनोहरे' इत्यमरः । तमुद्गिरितुं प्रकटीकर्तुं शीलं यस्य स तथाभूतो यो मारुतः तमनुसर्तुं शीलं यासां ताः तथाभूता याः मधुकर्यः भ्रमर्यः तासां गानेन यः कलकलः कोलाहलध्वनिः तेन उन्मिश्रः मिळितः कलकण्ठानां भरताह्वयपक्षिविशेषाणां यो नादः ध्वनिः । 'दात्यूहः कालकण्ठक' इत्यमरः । तेन मेदुरं सान्द्रम् । 'सान्द्रस्निग्धस्तु मेदुरः' इत्यमरः । दुःखेन अतितुं बद्धुं निग्रहीतुं शक्यः दुरन्तः दुर्निग्रह इति यावत् । ईषद्दुःसुष्वित्यादिना खल्प्रत्ययः । तथाभूतो यो विरहोदन्तः वियोगवृत्तान्तः । 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादथाह्वय' इत्यमरः । तेन दूयमानाः दुःखिताः या मानिन्यः प्रमदाः । 'प्रमदा मानिनी कान्ता' इत्यमरः । ता एव जनाः तैरावर्जितानि विरचितानि यानि पल्लवभङ्गानां किसलयशकलानां रूपाणि शयनानि शय्याः । 'शयनं मञ्चपर्यङ्कपल्यङ्काः' इत्यमरः । तैस्समुल्लसिताः । कर्तरि क्तः । प्रकाशमाना इत्यर्थः । ये लताकुञ्जाः लतागृहाः । 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदर' इत्यमरः । तैः मञ्जुलं मनोहरमित्यर्थः । विटपिनो वृक्षाः । 'विटपी पादपस्तरुः' इत्यमरः । तेषु सञ्चरन्ति यान्यळीनां भ्रमराणां कुलानि । 'षट्पदभ्रमराळयः' 'सजातीयैः कुलं यूथं' इति चामरः । तान्येव भाराः वोढव्यवीवधविशेषाः । 'भारो भरे वीवधे च पलानां द्विसहस्रके' इत्यमरशेषः । तेन पर्याकीर्णः विकीर्णः यः परागाणां पुष्पधूळीनां पुञ्जो राशिः । 'परागस्सुमनोरज' इत्यमरः । 'स्यान्निकायः पुञ्जराशी' इति च । तैः पिञ्जराः चित्रवर्णाः आसाराः धारासम्पाताः यासां तथाभूताः सारिण्यः क्षुद्रकुल्याः तासां सलिलपूरः तेन पूरितानि आलवालानि मूलस्थलपरिष्कृतभूमयो येषां तथाभूताः ये बालपादपाः वृक्षाः तेषां छायाः अनातपाः तेषु सुखेन निषण्णाः उपविशन्त्यः याः किन्नर्यः किन्नरस्त्रियः तासां सल्लापाः आलापाः तेषां समाकर्णनं श्रवणं तेन समुल्लसिताः विकसिताः ये कर्णिकाराः वृक्षविशेषाः । 'कर्णिकारः परिव्याधो लकुचो लिकुचो डहुः' इत्यमरः । तेषां कलिकानां कोरकाणाम् । 'कलिका कोरकः पुमान्' इत्यमरः । निकायः पुञ्जः । 'स्यान्निकायः पुञ्जराशी' इत्यमरः । तेन रमणीयं मनोहरम् । अनतिक्रमणीयः अनुल्ल-

नर्चीटिकायमानपल्लवभङ्गधारणनिरातङ्कशारिकासङ्गकिङ्करीभूतयुवलोकलोचनानन्दनं नन्दनमिव भुवि निवेशितमखिलगुणाभिराममारामम् । तत्र च ।

मन्दस्पन्दरसालसालशिखरक्रीडत्पिकश्रेणिका-
कण्ठोदञ्चितपञ्चमध्वनिचमत्कारप्रकारस्पृशः ।
कन्दर्पाहवखिन्नकिन्नरवधूकण्ठोन्मिषत्काकली-
काकुव्याकुलिता गिरो दिविषदां जीवातवो जज्ञिरे ॥

उपवने च तस्मिन्नुपान्तनिरूढकदळीगर्भकन्दळितहिमवालुकापरागवालुकानुरागजनितजडिमहिमकुल्यानिपातशीत-

ह्वयशासनो यश्शम्बरशासनः मदनः तस्य वर्चीटिकायमानाः सुधालिप्तचर्वणोपयोगिताम्बूलदळायिता इत्यर्थः । तथाभूताः पल्लवभङ्गाः किसलयशकलानि तेषां धारणं वहनं तस्मिन् निरातङ्का जागरूका याः शारिकाः पक्षिविशेषाः तेषां सङ्गस्य किङ्करीभूताः दासतां प्राप्ताः ये युवलोकाः युवजनाः तेषां यानि लोचनानि तेषामानन्दनः हर्षकरः तथाभूतम् । किञ्च भुवि निवेशितं नन्दनं इन्द्रवनमिव स्थितं आराममुपवनं अद्राक्षुः ददृशुरित्यर्थः ॥ **तत्र चेति** ॥ तत्र आरामे मन्दः स्पन्दः मन्दचलनं यस्य, स तथाभूतो यः रसालश्चूतस्सालसंज्ञिकः सालवृक्षः । 'अनोकहः कुटस्साल' इत्यमरः । तस्य यच्छिखरं तस्मिन् क्रीडन्त्यः विहरन्त्यः याः पिकानां कोकिलानां श्रेण्यः पङ्क्तयः तासां कण्ठैरुदञ्चिताः समुत्पन्नाः ये पञ्चमध्वनयः । 'पिकः कूजति पञ्चमं' इति कोशाभिधानात् । तेषां ये चमत्काराः चमत्कृतयः विच्छित्त्यपरपर्यायाः तैर्यः प्रकारः सादृश्यमित्यर्थः । तत्स्पृष्टवन्तः तत्स्पृशः कोकिलध्वनिवन्मधुरा इति भावः । कन्दर्पाहवः मदनयुद्धं रतापरपर्यायं तस्मिन् विषये खिन्नाः खेदभाजः याः किन्नरवध्वस्तासां कण्ठेभ्यः उन्मिषन्त्यः उद्भवन्त्यः याः काकल्यः मधुरास्फुटध्वनयः याश्च काकवः शोकभीत्यादिप्रयुक्तविकारध्वनयः । 'काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे' 'काकुः स्त्रियां विकारो यश्शोकभीत्यादिभिर्ध्वनेः' इति चामरः । उभयीभिस्ताभिः व्याकुलिताः रवाः ध्वनयः दिविषदां देवासुराणां जीवातवः उज्जीविकाः । 'जीवातुर्जीवनौषधं' इत्यमरः । जज्ञिरे सञ्जाता इत्यर्थः । परदेवतां मोहिनीरूपधारिणीं वर्णयितुमारभते ॥ **उपेति** ॥ तस्मिन्नुपवने आरामे । 'आरामः स्यादुपवनं' इत्यमरः । उपान्तस्समीपदेशः तस्मिन् निरूढाः याः कदळ्यः रम्भासंज्ञिकसपर्णवृक्षाः तासां गर्भाः कुक्षिदेशाः । 'कुक्षिभ्रूणार्भका गर्भा' इत्यमरः । तेषु कन्दाळतास्समुत्पन्नाः हिमवालुकाः आर्द्रकर्पूराणि तासां परागाः रेणवः । 'घनसारश्चन्द्रसंज्ञस्सिताभ्रो हिमवालुका' इत्यमरः । 'परागः कौसुमं रज' इति च । त एव वालुकाः सकत-

ळितालवालमूलसुखशयितकेकिकेकानिनादमनोरमे हरिमणिहरितपरिसरधरणिनिपतदविरळवकुळमुकुळपरिमळपरिमिळदळिकुलगरुदुपचितमरुदुपहृतकुसुमजरजोराजिनिर्मले मूले बकुलस्य, निटिलतटनिर्माणकौतुकाविष्टनीरजसम्भव. शशाङ्कशकलानुकारिकेतकीपत्त्रचित्रितवेणीपदां, नभोन.. अन्यो:

---

विशेषास्तेषामनुसार: अनुसरणं तेन जनितं उत्पादितं यज्जाडिम शीतळत्वं तेन हिमा: शीतळा: या: कुल्या: कृत्रिमसरित: । 'तुषारश्शीतलश्शीतो हिमस्सप्तान्यलिङ्गका:' 'कुल्याल्पा कृत्रिमा सरित्' इति चामर: । तासां निपात: निपतनं तेन शीतळितानि शीतळीकृतानि आलवालानां वृक्षाध:परिष्कृतभूमीनां यानि मूलानि मूलदेशा इत्यर्थ: । 'स्यादालवालमावालं' इत्यमर: । तेषु सुखेन शयिता: निद्राळव: । 'स्वप्नक्छयालुर्निद्रालुर्निद्राणशयितौ समौ' इत्यमर: । ये केकिन: मयूरा: तेषां केकेति ये निनादा: ध्वनय: । 'केका वाणी मयूरस्य' इत्यमर: । तै: मनोरमं मनोहरं तथाभूते । हरिमणय: इन्द्रनीलोपला: । हरिमणिस्वरूप रत्नशास्त्र चोक्तम् । 'विश्वरूपवधप्राप्तदोषशान्त्यै पुरन्दर: । अश्वमेधं चकाराथ तत्समाप्तया तदङ्गजं ॥ चाक्षुषश्च मलं यत्र विमुक्तं यत्र केवलं । इन्द्रनीला इति ख्याता मणयस्सम्भवन्ति हि ॥' इति । तैर्मणिभिर्हरिता: हरितवर्णा: या: परिसरधरण्य: समीपभूमय: तासु निपतन्त: ये वकुळवृक्षाणां मुकुळा: कुड्मलानि । 'स्याद्गुच्छकस्तु स्तबक: कुड्मलो मुकुळोऽस्त्रियां' इत्यमर: । तेषां य: परिमळ: विमर्दजन्यसौरभ्यविशेष: । 'विमर्दोत्थे परिमळो गन्धे जनमनोहरे' इत्यमर: । तेन परिमिळन्त: पुञ्जीभवन्त: ये अळय: भ्रमरा: तेषां कुलस्य समूहस्य या: गरुत: पक्षा: । 'गरुत्पक्षच्छदा: पत्त्रं पतत्रं च तनूरुहं' इत्यमर: । तैरुपचित: अभिवर्धित: यो मरुद्वायु: तेन उपहृतानि समर्पितानि यानि कुसुमानि तेषाम् । कुसुमजरजोराजीति पाठे कुसुमजानि यानि रजांसि तेषामित्यन्वय: । यानि रजांसि पुष्पपरागा: तेषां राजय: पङ्क्तय: ताभि: निर्मलं तथाभूते कस्यचिद्वकुळस्य वकुलवृक्षस्य मूले मूलप्रदेशे कन्यामुपलेभिरे इत्यनेनान्वय: । सा कीदृशीत्याकाङ्क्षायामाह । निटिलतटं फालदेश: तस्य निर्माणविषये यत्कौतुकं कुतूहलं तेन आविष्ट. आक्रान्त: य: नीरजसम्भवो ब्रह्मा तेन अपाहृता अवमत्य उत्सृष्टेत्यर्थ: । या शशाङ्ककला तदनुकारीणि तद्वत्स्थितानीत्यर्थ: । यानि केतकीपुष्पाणां पत्त्राणि तै: चित्रितमलङ्कृतं वेणीपदं विशदकचसंहतिर्यस्यास्सा तथाभूताम् । 'वेणी प्रवेणी शीर्षण्यशिरस्यौ विशदे कचे' इत्यमर: । नभोनभस्यरजन्यो: श्रावणभाद्रपदकृष्णपक्षरात्र्योरिव स्थितयोरित्यर्थ: । अतिनैल्यादिति भाव: । 'नभा: श्रावणिकश्च स:' 'स्युर्नभस्य: प्रौष्ठपदभाद्रभाद्रपदास्समा:' इति चामर: । 'नभश्च नभस्यश्च

केशपक्षयो नवनवोन्मिषद्विवादपरिहारकसीमाविभागवीथिकयेव सीमन्तरेखया पद्मरागसिन्दूरपाटलीकृतया सङ्घटयन्तीमिव सान्ध्यरागसम्पदं, किङ्करीकृतभुवनमण्डलेन किञ्चिद्घटितेन भ्रूभङ्गेन परिहरन्तीमिव प्रामादिकं भङ्गमनङ्गवीरस्य, अनासेवितमधुरैरिव अमृतैः, अनालिप्तशीतलैरिव कर्पूरपरागैः, अवतंसोत्पलमिव हस्तग्राहं ग्रहीतुमनुधावद्भिरनुक्षणं कर्णपथं, आक्रामद्भिरिव शनैर्मुखमण्डलं, सञ्जीवनैर्मदनस्य सम्प्रदायगुरुभिश्शृङ्गारस्य, विलासभवनैर्विभ्रमाणां, तारुण्यचन्द्रिकोल्लासितैस्तरङ्गैरिव लावण्यसागरस्य, कटाक्षैरेव जगदखिलं कन्दर्पनिदेशवशमापादयन्तीं, तादृङ्मरीचिवीचिभिस्त-

वार्षिकावृतू' इति श्रुतेश्च। केशपक्षौ केशकलापौ। 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परं' इत्यमरः। तयोर्नवनवं प्रतिक्षणं उन्मिषन्यो विवादः कलहः तस्य परिहारिका निवारिका सीमा अवधिरूपा या विभागवीथिका तयेव स्थितया। पद्मरागः शोणरत्नम्। 'शोणरत्नं लोहितकं पद्मरागोऽथ मौक्तिकं' इत्यमरः। स एव सिन्दूरं ध्रियमाणचूर्णं तेन पाटलीकृता तथाभूतया सीमन्तरेखया। सान्ध्यरागः सन्ध्यारागः तस्य सम्पदतिशयः तां स्पर्धयन्तीमभिभावितुमिच्छन्तीमिव स्थिताम्। किङ्करीभूतं भुवनानां लोकानां मण्डलं यस्य स तथाभूतेन। किङ्करीकृतभुवनेत्यपि पाठः। किञ्चिदीषदुद्घटितेन सङ्घटितेन भ्रूभङ्गेन। 'ऊर्ध्वे दृग्भ्यां भ्रुवोऽस्त्रियां' इत्यमरः। अनङ्गवीरस्य मदनस्य प्रामादिकं प्रमादप्राप्तं भङ्गं पराभवं परिहरन्तीमिव स्थिताम्। अनङ्गसेवितानि। अनासेवितेति सुगमः पाठः। इतरासम्भुक्तानि च तानि मधुराणि चेति कर्मधारयः। तथाभूतैः अमृतैरिव स्थितैः। अनालिप्ताः इतरासेविताश्च ते शीतलाश्च तथाभूतैः कर्पूरस्य परागैरिव स्थितैः। अवतंसं कर्णपूरभूतं यदुत्पलं नीलोत्पलं तत् हस्तग्राहं ग्रहीतुं हस्ते ग्रहीतुमित्यर्थः। कर्णपथं श्रोत्रमार्गं अनुक्षणं प्रतिक्षणं अनुधावद्भिरागच्छद्भिरित्यर्थः। शनैः मुखमण्डलमाक्रामद्भिरिव स्थितैः। वैपुल्यादिति भावः। मदनस्य सञ्जीवनैरुज्जीवकैः। शृङ्गाररसस्य सम्प्रदायगुरुभिः पारम्पर्यप्राप्तगुरुभिः। शृङ्गाररसस्य गुरव इव तदुद्भर्तृत्वादिति भावः। विभ्रमाणां हावभावानामित्यर्थः। 'स्त्रीणां विलासबिब्बोकविभ्रम' ललितं तथा। हेला लीलेत्यमी हावा' इत्यमरः। विलासभवनैः लीलासदनैरिव स्थितैः। तारुण्यं यौवनं तदेव चन्द्रिका तयोल्लासितैः उल्लासं प्रापितैः लावण्यसागरः सौन्दर्यसमुद्रः तस्य तरङ्गैरिव स्थितैः। कटाक्षैः नेत्रान्तैरेव। 'कटाक्षो नेत्रयोरन्त' इत्यमरः। अखिलं जगत् कन्दर्पदेववशं मदनमहाराजाधीनमापादयन्तीं प्रापयन्ती-

टित्पुञ्जमिव युगपदुद्गिरन्तीं, आदिमरसाभिवर्षणाय निरन्तरपरिवहदाननसौन्दर्यनिष्यन्देनेव नासामणिना, प्रतिबिम्बितेनेव तस्य पाटलाधरपर्यस्तेन मन्दस्मितेन च मदयन्तीमिव मनांसि महायोगिनामपि, नवनवोपचीयमाननखम्पचस्तनभारपरिणाहवशात्परिश्लथयन्तीमसकृदपि वेणीलतां कञ्चुकस्य, कन्दुकाघातजनितारुण्यकरपल्लवाभ्यर्णपरिभ्रमद्भ्रमरिकानुकारिणा कमलाक्षवलयेन परिभ्रमयन्तीमन्तःकरणान्यपि पश्यतां, कलमधुरगानामृतद्रवीभूतपर्यन्तमणिकुट्टिमपतनसम्भाविताम् आर्द्रतां परिहर्तुं कन्दुकस्य चलन्तीमितस्ततोऽपि, चरणतलरणितम-

मित्यर्थः। आदिमरसः शृङ्गारः तस्य अभिवर्षणाय तटिता विद्युतां पुञ्जं राशिमिव स्थितम्। ताटङ्कयोः कर्णाभरणयोर्मरीचीनां पुञ्जं राशिं युगपत् एकदा उत्किरन्तीं परितः किरन्तीमिव स्थिताम्। ताटङ्कमरीचिवीचिभिस्तटित्पुञ्जमिति द्राघीयानेव पाठः। कर्णाभरणकान्तिपरम्पराभिः तटित्पुञ्जं युगपत्किरन्तीमिव स्थितामित्यन्वयो बोध्यः। निरन्तरमनवकाशं यथा तथा परिवहत् प्रवहद्यदाननसौन्दर्यं तस्य निष्यन्देन बिन्दुनेव स्थितेन नासामणिना नासामौक्तिकेन तस्य नासामणेरित्यर्थः। प्रतिबिम्बितेन प्रतिबिम्बितेनेव स्थितेन तस्य पाटलाधरे शोणाधरे पर्याप्तेन व्याप्तेन मन्दस्मितेन महायोगिनामपि मनांसि मदयन्तीमिव स्थिताम्। नवनवं नूतनं यथा तथा उपचीयमानः वर्धमानः नखम्पचश्च यः स्तनयोः भारः अतिशयः तस्य परिणाहवशात् विशालत्वादित्यर्थः। कञ्चुकस्य कूर्पासस्य वेणीलतां लतासदृशकञ्चुकमर्यादादेशमित्यर्थः। 'वेणी सेतुप्रवाहयोः' इति हेमचन्द्रः। अत्र कोशवाक्ये सेतुशब्दः मर्यादादेशवाचीति तद्व्याख्याकृतः। असकृत्परिश्लथयन्तीं विस्रंसयन्तीं परिवर्धयन्तीमिति वार्थः। प्रतिकलं वर्धमानं कञ्चुके अमान्तं स्तनयुगं दृष्ट्वा मुहुर्मुहुः कञ्चुकग्रन्थिं विस्रस्य कञ्चुकं विशालं कुर्वन्तीति भावः। कन्दुकः गेन्दुकः क्रीडोपयोगिवेष्टितपटगोळकमित्यर्थः। 'गेन्दुकः कन्दुको दीप' इत्यमरः। तस्याघातेन ताडनेन जनितमारुण्यं यस्य स चासौ करपल्लवश्चेति कर्मधारयः। तस्य अभ्यर्णे अन्तिकदेशे परिभ्रमन्त्यः या भ्रमरिकाः भ्रमरस्त्रियः तासामनुकारिणा अनुसारिणा कटाक्षाणामपाङ्गानां वलनेन घूर्णनेनेत्यर्थः। पश्यतां द्रष्टृणामन्तःकरणान्यपि परिभ्रमयन्तीं परिभ्रमं नयन्तीमित्यर्थः। मधुरं श्रवणरमणीयं यद्गानामृतं आलापसुधा तेन द्रवीभूताः पर्यन्ते समीपे ये मणिकुट्टिमाः रत्ननिबद्धभूमयः। 'कुट्टिमोऽस्त्री निबद्धा भूः' इत्यमरः। तेषु निपतनेन सम्भावितां ऊहितां कन्दुकस्य आर्द्रतां क्लिन्नत्वं परिहर्तुं इतस्ततः चलन्तीं। कन्दुकस्य आर्द्रतायामुत्पतनं न सम्भवतीति

ञ्जीरशिञ्जानुविद्धेन काञ्चीकलकलेन घोषयन्तीमिव वीरघोषणां कन्दर्पस्य, विद्युतमिव विश्रमितुमागतां, सालभञ्जिकामिव सञ्चारशालिनीं, रत्नशलाकिकामिव लब्धजीविकां, शारदचन्द्रिकामिव सम्पन्नविग्रहां, सौन्दर्यसम्पदमिव सान्द्रीभूतां, साम्राज्यदेवतामिव तारुण्यस्य, सम्प्रदायविद्यामिव मदनागमस्य, कामप्यदृष्टचरीं कन्यकामुपलेभिरे ।

सायोन्मिषत्कुवलयोदरसोदराणि
सा यत्र यत्र विचकार विलोचनानि ।
आविर्बभूवुरवशादिव तत्र तत्र
सज्जीकृतैक्षवशरासभुजा मनोजाः ॥ ४० ॥

चरणतले पादतले रणतोर्झणझणायमानयोः मञ्जीरयोः नूपुरयोः शिञ्जा शिञ्जितम् । 'मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः । 'भूषणानां तु शिञ्जितम्' इति च । तया अनुविद्धः संयुक्तः तथाभूतेन । काञ्ची मेखला तस्याः कलकलः कोलाहलः तेन । 'स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा' 'कोलाहलः कलकलः' इति च । कन्दर्पस्य मदनस्य वीर इति घोषणं तत् । 'उच्चैर्घुष्टन्तु घोषणं' इत्यमरः । घोषयन्तीं कुर्वन्तीमिव स्थितां विश्रमितुं विश्रमं कर्तुमित्यर्थः । आगतां आयातां विद्युतं सौदामिनीमिव स्थिताम् । सञ्चारेण शालिनीं शोभमानां तथाभूतां पाञ्चालिकां प्रतिमामिव स्थिताम् । लब्धा प्राप्ता जीविका चेतना यया सा तथाभूता रत्नशलाकिकां माणिक्यशलाकामिव स्थिताम् । सम्पन्नः सम्प्राप्तः विग्रहः शरीरं यया सा तथाभूतां शारदचन्द्रिकां शरत्कालसम्बन्धिज्योत्स्नामिव स्थिताम् । सान्द्रीभूतां मेदुरीभूतां सौन्दर्यलक्ष्मीमिव स्थिताम् । तारुण्यं यौवनं तस्य साम्राज्यमाधिपत्यं देवता तदभिमानिदेवतेत्यर्थः । मदनागमः मदनशास्त्रं तस्य पारम्पर्यं सदाचारो वा सम्प्रदायः तत्परिपालिनी विद्येति शाकपार्थिवादित्वात्समासः । एवञ्च सम्प्रदायपरिपालकश्रीविद्यामिव स्थितामित्यर्थः । 'विद्या स्यात्परदेवता' इति नामसङ्ग्रहमालायाम् । पूर्वं दृष्टा दृष्टचरी न दृष्टचरी तथाभूतां अदृष्टपूर्वामित्यर्थः । भूतपूर्वे चरडिति चरट् । टिड्ढाणञित्यादिना ङीप् । कामपि अनिर्वाच्यामेकामित्यर्थः । कन्यकां उपलेभिरे ददृशुरित्यर्थः ॥ **सायमिति** ॥ सा कन्यका मोहिनी यत्र यत्र प्रदेश इत्यर्थः । सायं सायंकाले उन्मिषन्ति विकसितानि यानि कुवलयानि नीलोत्पलानि तेषां उदराणि मध्यानि तैस्सोदराणि सदृशानीत्यर्थः । विलोचनानि नेत्राणि विचकार प्रसारयामासेत्यर्थः । तत्र तत्र देशे मनोज्ञाः सुन्दराः सज्जीकृताः अधिरोपिताः ऐक्षवाः इक्षुविकाराः शरासाः धनूंषि यैस्ते तथाभूताः भुजा येषां ते तथाभूताः । मदना इति शेषः । अवशादित्यस्य अकस्मात् हठादिति वार्थः । आ-

कटाक्षैः कन्दर्पज्वरजनितमोहान्धतमस-
प्रतापव्यापन्नत्रिजगदगदङ्कारबिरुदैः ।
प्रगल्भैश्चालापैः परिमृदितकर्पूरशिशिरै-
र्द्रवीभूतं जज्ञे सलिलमिव विश्वं मृगदृशः ॥ ४१ ॥
दिशि दिशि विकिरन्ती दीर्घदीर्घानपाङ्गान्
करसरसिजघातैः कन्दुकं नर्तयन्ती ।
तटिदिव जलदेभ्यो विच्युता सा सुराणां
सविधमचजगाहे शाम्बरी शम्बरारेः ॥ ४२ ॥
भ्रामं भ्रामं करकिसलयं कन्दुके पातयन्ती
स्रस्तं स्रस्तं कुचकलशयोरर्पयन्त्युत्तरीयम् ।
उद्गायन्ती किमपि किमपि स्वैरमुत्कूलरागं
चित्रन्यस्तं कुलमकृत सा दारुणं दानवानाम् ॥ ४३ ॥

विर्बभूवुरिव उत्पन्ना बभूवुरिवेत्यर्थः । तया आलोकितं सर्वं जगत्कन्दर्पवश्यं भवतीति भावः ॥ **कटाक्षैरिति** ॥ कन्दर्पज्वरः मदनज्वरः मदनप्रयोज्यरोगः तेन जनितः उत्पादितः यः मोहः अज्ञानं स एव अन्धतिमिरं अन्धतमसमित्यर्थः । तस्य प्रतापः पराक्रमः तेन व्यापन्नानि अतिदुःखितानि त्रीणि जगन्ति त्रिभुवनानि तेषामगदङ्कारा वैद्या इति बिरुदं जयसूचकलक्षणं येषां ते तथाभूतैः । मृगदृशः मोहिन्याः कटाक्षैः परिमृदितं तिरस्कृतं कर्पूरेण शिशिरं शीतलत्वं यैस्तै तथाभूतैः प्रगल्भैः प्रौढैः आलापैश्च वचोभिश्चेत्यर्थः । इदं विश्वं समस्तं जगत् सलिलमिव द्रवीभूतं जज्ञे अभवदित्यर्थः । अस्या दृग्गोचरीभूय तदालापश्रवणात्सर्वेषां चित्तं दद्रावेत्यभिप्रायः ॥ **दिशीति** ॥ दीर्घदीर्घान् अतिदीर्घान् अपाङ्गान् कटाक्षान् दिशि दिशि सर्वासु दिक्षु विकिरन्ती प्रकिरन्तीत्यर्थः । करसरसिजाभ्यां हस्तारविन्दाभ्यां घाताः ताडनानि तैः । कन्दुकं नर्तयन्ती क्रीडयन्तीत्यर्थः । जलदा मेघाः तेभ्यः विच्युता स्खलिता तटिद्विद्युदिव स्थिता शम्बरारेर्मदनस्य शाम्बरी मायास्वरूपेत्यर्थः । 'स्यान्माया शाम्बरी' इत्यमरः । सा परदेवता सुराणां देवानां सविधं समीपमपि जगाहे प्रविवेशेत्यर्थः ॥ **भ्राममिति** ॥ भ्रामं भ्रामं घूर्णयित्वा घूर्णयित्वेत्यर्थः । करः किसलयमिवेत्युपमितसमासः । कन्दुके पातयन्ती स्थापयन्तीत्यर्थः । स्रस्तं स्रस्तं भ्रष्टमित्यर्थः । उत्तरीयं संव्यानवस्त्रम् । 'संव्यानमुत्तरीयं च' इत्यमरः । कुचकलशयोरर्पयन्ती स्थापयन्ती समर्पयन्तीत्यर्थः । मोहनायैवेति भावः । स्वैरं स्वेच्छं उत्कूलः उत्कूलः कल्याणीभैरव्यादिरागो यस्य तत्तथाभूतम् । अत एव चित्रमाल-

**स्वच्छन्दप्रचलत्सुधार्णवसुधाकल्लोलवल्लोलया**
**सन्दृष्टाः शुभया दृशा सुमनसो धन्या जनन्या तया।**
**पञ्चब्रह्मविनिर्मितासनपरब्रह्माङ्कपर्यङ्किनीं**
**पञ्चाम्नायशिरोगतां बुबुधिरे तां ते परां देवताम्॥ ४४॥**

**पश्यन्तश्च तां परिसर एव चरन्तीं प्राणशक्तिमिव पञ्चशरस्य, भाग्यदेवतामिव शृङ्गाररसस्य, बालिकामुपेक्षितुं सुधाकलशमुदासितुं च तस्यामपारयन्तः क्षणमनुबभूवुस्सं-**

---

यंकरं किमपि किमपि कैरप्यश्रुतं कदापि गन्धर्वादिभिरप्यननुभूतं कीर्तनं वर्णतानादिकमित्यर्थः। उद्गायन्ती उत्कृष्टगानं कुर्वन्ती सा मोहनरूपा कन्यका दारुणं भयङ्करम्। 'दारुणं भीषणं भीष्मं' इत्यमरः। दानवानां कुलं यूथम्। 'सजातीयैः कुलं यूथं' इत्यमरः। चित्रन्यस्तं चित्रफलकस्थितमिव अकृत चकारेत्यर्थः॥ **स्वेति॥** जनन्या जगन्मात्रा तया मोहिन्या स्वच्छन्देन स्वेच्छया प्रचलन्तः प्रसरन्तः ये सुधार्णवस्य क्षीराम्भोधेस्सुधाकल्लोलाः अमृततरङ्गाः तैस्तुल्यं तद्वत्। तेन तुल्यं क्रिया चेद्वतिरिति वतिप्रत्ययः। लोलया चञ्चलया शुभया दृशा दृष्ट्या दृष्टाः अवलोकिताः अत एव धन्याः सुकृतिनः। 'सुकृती पुण्यवान् धन्यः' इत्यमरः। ते सुमनसः देवाः। 'सुपर्वाणस्सुमनसः' इत्यमरः। पञ्च पञ्चसङ्ख्याका ये ब्रह्माणः सद्योजातादयः तैरेव साधनैर्विनिर्मितं यदासनं पञ्चब्रह्माकारमञ्चमित्यर्थः। तथा चोक्तं दूर्वाससा द्विशत्याम्। 'पञ्चब्रह्माकारं मञ्चं प्रणमामि मणिगणाकीर्णं' इति। तादृशासने वर्तमानं यत्परब्रह्म कामेश्वरसंज्ञिको देव इत्यर्थः। तस्य यः अङ्कः ऊरुदेशः स एव पर्यङ्को यस्यास्सा। तथा च तत्र तेनैवोक्तम्। 'मञ्चस्योपरि लम्बन्मल्लीपुन्नागमालिकाभरिताम्। अस्याङ्कभुवि निषण्णां तरुणकदम्बप्रवालकिरणाभां' इत्युक्तम्। तथाभूतामित्यर्थः। किञ्च पञ्च पञ्चसङ्ख्याकाः ये आम्नायाः श्रीविद्यामन्त्रस्य पञ्चदशीसंज्ञिकस्य लिङ्गभूताः पूर्वाम्नायोत्तराम्नायादयः तेषां यानि शिरांसि शिरःस्थानीयकेवलबीजाक्षरबन्धा मन्त्रा इत्यर्थः। तानि गता प्राप्तेत्यर्थः। तादृशमन्त्रविशेषैः प्रतिपाद्येति भावः। तथा चोक्तं देवीभागवते। 'संविद्रूपा पराशक्तिस्सैव सर्वेश्वरेश्वरी। परब्रह्माङ्कपर्यङ्का पञ्चाम्नायशिरोगता' इति। तथाभूतां परां सर्वोत्कृष्टां देवतामिति बुबुधिरे विविदुरित्यर्थः। के वा विबुधाः तां परदेवतेति न जानन्तीत्यभिप्रायः॥ **पश्यन्त इति॥** परिसरः समीपदेशः। 'पर्यन्तभूः परिसरः' इत्यमरः। तस्मिन्नेव चरन्तीं सञ्चरन्तीं पञ्चशरस्य पुष्पधन्वनः प्राणशक्तिं प्राणोज्जीवनशक्तिमिव स्थितां प्राणप्रतिष्ठापकपरदेवतामिव स्थितामिति यावत्। शृङ्गाररसस्य भाग्यमदृष्टं तस्य देवता। 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' इत्यमरः। भाग्यवशात्प्राप्तदेवतेव स्थिते-

शयान्दोळनं यावदसुरवराः ।
तावद्यावत्कन्दुकग्राहमोह-
व्याजात् प्राप्ता मध्यमेषां द्वयेषाम् ।
सिञ्चन्तीव व्याजहारामृतौघैः
शस्त्राशस्त्रिक्लेशितान्यङ्गकानि ॥ ४५ ॥

'के यूयमाधिकारिका इव विगृह्णन्त इव विषण्णा इव संरम्भमात्रशेषा इव च लक्ष्यध्वे । किंकारणं विस्रम्भविहारिणीनां बालिकानां विहारवनोपकण्ठमसृग्वसामांसकर्दमैरभिपूरयथ' इति । आकर्ण्य च तां गिरमतिभूमिं मनोरथानां, अभ्यर्हिताममृतादपि दानवा इदमूचिरे ।

---

त्यर्थः । तथाभूतां तां मोहिनीं पश्यन्तश्च असुरवराः यातुधानाः सुधाकलशं अमृतपूरितकुम्भं बालिकामुपेक्षितुं उदासितुमपि निराकर्तुं अपारयन्तः क्षणं यावत्संशयेनान्दोळनं डोलाविहारं तस्यामनुबभूवुः ॥ **तावदिति** ॥ तावद्यावन् झडिति अन्यतो गच्छन् यः कन्दुकः तस्य ग्राहः ताडनार्थं ग्रहणार्थं तस्मिन् मोहः व्यामोहः स एव व्याजः छद्म तस्माद्द्वयानामुभयेषां देवासुराणामित्यर्थः । मध्यं मध्यदेशं प्राप्ता सा देवी । शस्त्रैः शस्त्रैः प्रहृत्येदं युद्धं प्रवर्तत इति शस्त्राशस्त्रि तत्संबन्धिकं यद्युद्धं तेन क्लेशितानि क्लेशं गमितानीत्यर्थः । तथाभूतानि अङ्गकानि अवयवान् । 'अङ्गं प्रतीकोऽवयवः' इत्यमरः । अमृतानामोघास्समूहाः तैरभिषिञ्चन्तीव सेकं कुर्वन्तीवेत्यर्थः । व्याजहार आबभाष इत्यर्थः ॥ **क इति** ॥ यूयं के । अधिकारे तिष्ठन्तीत्याधिकारिकाः अधिकारस्था इव । किं च विगृह्णन्त इव युद्धं कुर्वन्त इव । शस्त्रादिमत्त्वादिति भावः । संरम्भमात्रं उद्योगमात्रं तेन शिष्यन्तीति संरम्भमात्रशेषाः उद्योगस्पर्धादिमात्रावशिष्टा इवेति तात्पर्यार्थः । शस्त्रप्रचुरास्त्रायुधवहनसामर्थ्यादेरदृष्टत्वादिति भावः । लक्ष्यध्वे दृश्यध्वे ॥ **किमिति** ॥ विस्रम्भं विश्वासः भावे घञ्प्रत्ययः तेन सञ्चरितुं शीलं यासां ताः तथाभूतानां बालिकानामस्मदादीनामित्यर्थः । विहारः क्रीडा तदर्थं वनं तस्योपकण्ठं अन्तिकभुवं किंकारणं किंनिमित्तमित्यर्थः । असृग्रक्तं तच्च वसा हृदयस्थमेदोधातुः सा च मांसं पिशितं तच्च तानीति द्वन्द्वः । तेषां कर्दमाः पङ्काः तैः । 'रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितं' 'पिशितं तरसं मांसं' 'हृन्मेदस्तु वपा वसा' 'पङ्कोऽस्त्री शादकर्दमौ' इति सर्वत्रामरः । अभिपूरयथ दुर्गन्धविशिष्टं कुरुथेत्यर्थः । इतीत्थं व्याजहारेति पूर्वेणान्वयः । युद्धादिनेति भावः ॥ **आकर्ण्येति** ॥ मनोरथानां सङ्कल्पानामित्यर्थः । अतिक्रान्ता भूमिं मर्या[illegible]त्यतिभूमिः तथाभूता एवंवि-

'निर्वासिता निजपदात्त्रिदिवौकसोऽमी
प्राप्ता वयं भुजबलेन पदं मघोनः।
सर्वेऽप्यमी सुमुखि दानवदैत्यसङ्घाः
सत्यं वदेम तव सम्प्रति किङ्करास्स्मः ॥ ४६ ॥

किं बहुना।

त्वं नो राज्यं त्वं बलं त्वं धनानि
त्वं नः प्राणास्त्वं भवस्यन्तरात्मा।
त्वद्दासास्स्मः त्वत्कटाक्षप्रतीक्षाः
त्वं यद्ब्रूयास्तत्प्रमाणं परं नः ॥ ४७ ॥'

इति निश्शेषनिवेदितात्मसु दानवेषु, किं करिष्यति किं वक्ष्यतीति कृतसंशयेषु दिक्पालेषु, मन्दस्मितसुन्दरमिदमाह महामाया। 'हन्त कथमभिज्ञाततत्त्वा अपि भवन्तः पौरोगवा इव पाकशेषेषु कलशामृते कलहायन्ते। तदलमुपविशत

---

धा या गिरः कदाप्यश्रुतत्वादुपेक्षितुमप्यशक्येति भावः। अमृतादपि अभ्यर्हितामावश्यकीमित्यर्थः। तां मोहिनीसम्बन्धिनीं गिरं वाचमाकर्ण्य श्रुत्वा दानवा इदमूचुः निजगदुरित्यर्थः॥ **निर्वासिता इति**॥ अमी निजपदात् स्वस्थानात् स्वर्गादित्यः। निर्वासिताः निष्कासिता इत्यर्थः। अस्माभिरिति शेषः। हे सुमुखि सर्वे वयमपि भुजबलेन बाहुसामर्थ्येन मघोनः इन्द्रस्य पदं स्थानं स्वर्गमित्यर्थः। प्राप्ताः। दानवाश्च दैत्याश्च दानवदैत्याः तेषां सङ्घाः समूहाः सत्यं वदेम सत्यं लपेमेत्यर्थः। सम्प्रतीदानीं तव किंकराः भृत्याः स्मः भवामः। 'नियोज्यकिंकरप्रेष्यभुजिष्यपरिचारकाः' इत्यमरः। त्वं यथा वदसि तत्करवामेति भावः॥ **त्वमिति**॥ नोऽस्माकं त्वं राज्यं त्वं बलं सामर्थ्यं धनानि नोऽस्माकं त्वं प्राणाः त्वमस्माकमन्तरात्मा जीवश्च भवसीत्यर्थः। त्वयि सत्येव इदमस्माकं त्वत्कटाक्षप्रतीक्षास्त्वदपाङ्गप्रसाराभिलाषुकाः त्वद्दासास्त्वत्किङ्कराः स्मः। त्वं यद्वचनं ब्रूयाः तत्परं नः प्रमाणं भवद्वचनोल्लङ्घनं न कुर्म इति भावः॥ **इतीति**॥ इतीत्थं दानवेषु निश्शेषं निरवशेषं यथा तथा निवेदितः विज्ञापितः आत्मा स्वस्वनिश्चयः यैस्तथाभूतेषु सत्सु दिशां पालकाः इन्द्रादयः ते किं वक्ष्यति किं कथयिष्यति किं वा करिष्यति इतीत्थं कृतः संशयः यैस्तथाभूतेषु सत्सु महामाया आदिप्रकृतिरूपिणी परदेवता मन्दस्मितेन सुन्दरं चार्वित्यर्थः। तथाभूतमिदं वचनं आह कथयामासेत्यर्थः॥ **हन्तेति**॥ अभिज्ञातं विदितं तत्त्वं पदार्थस्वरूपं यैस्ते तथाभूता अपि भवन्तः यूयं पाकस्य अवशेषाः अवशिष्टान्नशाकसूपादयः ते-

यूयमुभयेऽपि वीथीभूय, प्रदास्याम्यहमेव भवतामिदं कलशामृतम्। तत्र च प्रथममिमानन्नार्थिनः पदभ्रष्टानग्रभिक्षया परिविष्य, पात्रेणैव भवत्सूपतिष्ठे' इति। ततश्च साधु साध्वित्युपलालयन्तस्तदीयं वचनं, द्वेधा पङ्क्तीभूय, देवासुराः प्रथममेव सन्तर्पिता वागमृतैः, प्रतीक्षाञ्चक्रिरे परिवेष्यमाणं कलशामृतम्। ततश्च सा सन्निहितसखीकरन्यस्तकन्दुका ससम्भ्रमोपनतचेटीजनामृष्टमुखमण्डला प्रत्यग्रकर्पूरपरागपरिधौतकरपल्लवा भ्रूभङ्गचोदितभुजिष्याजनोपहृतममृतकलशमादाय भुवनत्राणबद्धकङ्कणेन सव्येन पाणिना, दर्वीकरशिरोरत्ननि-

---

षु पौरोगवा इव महानसाध्यक्षा इव ।'पाकस्थानं महानसं । पौरोगवस्तदध्यक्षः' इत्यमरः । कलशामृते एककुम्भपरिमितामृतविषयेऽपि कथं कलहायन्ते कलहं कुर्वन्तीत्यर्थः। हन्तेत्याश्चर्ये ॥ तदिति ॥ तत्तस्मादुभयेऽपि यूयं भवन्तः वीथीभूय द्वेपङ्क्तीभूत्वेत्यर्थः। उपविशत उपवेशं कुरुथेत्यर्थः ।अहमेव भवतामिदं कलशामृतं प्रदास्यामि परिवेषणं करिष्यामीत्यर्थः ॥ तत्र चेति ॥ तदानीं त्वित्यर्थः । पदभ्रष्टान् स्थानभ्रष्टान् अत एव अन्नमर्थितुं याचितुं शीलं येषां ते तथा तादृशानिमान् देवान् प्रथममादौ अग्रभिक्षा अग्रपरिवेषणं तया परितोष्य तोषयित्वा । पात्रं अमृतकलशः तेन सहैव भवत्सु युष्मासु विषये उपतिष्ठे समीपे तिष्ठामीत्यर्थः ॥ तत इति ॥ तत एवं व्यवस्थानन्तरं तस्या मायाया इदं तदीयं वचनं साधु साध्विति अतिसमीचीनमित्यर्थः। उपलालयन्तः प्रशंसन्तः देवासुराः द्वेधा पङ्क्तीभूय द्विपङ्क्तीकृत्वा प्रथममादौ वाच एवामृतानि वागमृतानि तैस्तर्पिताः साहित्यं गमिता एवेत्यर्थः । परिवेष्यमाणं कलशामृतं प्रतीक्षाञ्चक्रिरे प्रतिपालयामासुरित्यर्थः ॥ तत इति ॥ ततोऽनन्तरं च सन्निहिता निकटवर्तिनी या सखी वयस्या तस्याः करो हस्तः तस्मिन् विन्यस्तः निक्षिप्तः कन्दुको यया सा तथाभूता। सम्भ्रमः त्वरा तेन उपनता प्राप्ता या चेटी दासी तस्याः करौ हस्तौ ताभ्याम् आमृष्टं अपगतस्वेदीकृतं मुखमण्डलं यस्यास्सा । चेटीजनामृष्टेत्यपि पाठः। दासीजनैरामृष्टमित्यर्थः । स्वेदापनोदनार्थं चेटीकराभ्यां मुखमार्जनमिति भावः। प्रत्यग्रमभिनवं यत् कर्पूरं तस्य ये परागाः तैः परिधौतौ क्षालितौ करपल्लवौ यस्यास्सा तथाभूता। भ्रुवोः भङ्गः चालनं तेन चोदिताः प्रेरिताः ये भुजिष्यजनाः परिचारकजनाः । 'भुजिष्यपरिचारकाः' इत्यमरः । तैरुपहृतः आनीतः यः अमृतकलशः तमादाय स्वीकृत्य भुवनानां लोकानां त्राणं संरक्षणं तस्मिन् विषये बद्धं कङ्कणं करभूषणं येन स तथाभूतेन सव्येन पाणिना वामहस्तेन। 'वामं शरीरे सव्यं स्यात्' इत्यमरः । दर्वीकराः सर्पाः । 'दर्वीकरो दीर्घपृष्ठः' इत्यमरः ।

र्मितां दर्वीमनुगृह्णन्ती दक्षिणेन करेण, नीवीपदनिगूहितोत्तरासङ्गपल्लवा, वेणीदृढग्रन्थितविस्रंसमानकुसुमदाममनोहरा, निस्तरङ्गमिव सागरं, निस्तनितमिव संवर्तमेघमण्डलं, निखिलमपि देवासुरबलं नियमयन्ती कटाक्षेणैव, यदा कश्चिदत्र करं प्रसारयति, कश्चिदुपमन्त्रयते रहसि, कश्चिदुच्चैः प्रलपति, कश्चित् त्वरते, कश्चिद्वा प्रतिब्रूते, तदा तिरोभवेयमिति प्रतिज्ञयैव परित्रासयन्ती, सम्मुखीभूय देवपङ्क्तौ सन्ननाह परदेवता।

प्रत्यासन्नसखीवितीर्णमुकुळद्वीटीदळग्राहिणा
सव्येनादधती करेण मृदुना दर्वीं मणीनिर्मिताम्।
कुर्वाणा करपल्लवे तदितरे कुम्भं सुधापूरितं
चिद्रूपा परमा कला पुरभिदश्चित्ते ममास्ते तु सा॥

तेषां शिरोरत्नानि शिरोमाणिक्यानि तैः निर्मिता विरचिता तथाभूतां दर्वीं कम्बिमित्यर्थः। 'दर्वी कम्बिः खजाका च स्यात्' इत्यमरः। तां दक्षिणेन करेण गृह्णन्ती धरन्तीत्यर्थः। नीवी कटिवस्त्रबन्धः सैव पदं स्थानम्। 'स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च' इत्यमरः। तस्मिन् निगूहितः सङ्घटितः उत्तरासङ्गस्य प्रावारवस्त्रस्य पल्लवः अग्रभागो यया सा तथाभूता। 'द्वौ प्रावारोत्तरासङ्गौ' इत्यमरः। वेणी प्रवेणी। 'वेणी प्रवेणी शीर्षण्यशिरस्यौ विशदे कचे' इत्यमरः। तस्यां दृढग्रन्थितं ग्रथितानि विस्रंसमानानि च यानि कुसुमानि तेषां दामानि माला तैः मनोहरा मनोज्ञा निखिलं समस्तं देवासुराणां बलं निस्तरङ्गं सागरमिव समुद्रमिव निस्तनितं निर्गतगर्जितं संवर्तमेघमण्डलं प्रळयकालसम्बन्धिमेघसमूहमिव कटाक्षेणैव नियमयन्ती नियमनं कुर्वन्तीत्यर्थः। अत्र समुदाये कश्चिद्यदा करं प्रसारयति यः कश्चिद्रहस्येकान्ते उपमन्त्रयते परान् प्रति आलोचयतीत्यर्थः। कश्चिदुच्चैः प्रलपति कश्चित् त्वरते यो वा को वा कश्चित् प्रतिब्रूते प्रत्युत्तरं ददाति तदा अहं तिरोभवेयं तिरोधानं कुर्यामितीत्थं प्रतिज्ञयैव परित्रासयन्ती भीषयन्ती सा परदेवता मोहिनी देवानां पङ्क्तिः श्रेणी तस्यां सम्मुखीभूय आभिमुखीभूत्वा परिवेषणायेति शेषः। सन्ननाह उद्योगं चकारेत्यर्थः। अथ कविः तथाविधां परदेवतां प्रार्थयते॥ **प्रतीति**॥ प्रत्यासन्ना समीपवर्तिनी या सखी वयस्या तया वितीर्णं समर्पितं मुकुळत् कुड्मलत् यद्वीटीदळं ताम्बूलदळं तस्य ग्राहिणा स्वीकारिणा मृदुना कोमलेन सव्येन करेण मणीभिः निर्मिता विरचिता तथाभूतां दर्वीं आदधती धरन्तीत्य-

आनम्य किञ्चिदवमुच्य पिधानपात्रं
आदाय रत्नकलशादमृतं समग्रम् ।
दर्व्या मणीखचितया ददती सुरेषु
दिव्या कला भुवि चचार तटिल्लतेव ॥ ४९ ॥
मात्रार्पितं गरळमप्यमृतं शिशूनां
इत्यामनन्ति यदिदं विशदं तदासीत् ।
दर्वीकरत्वमपि सा दधती यदित्थं
दिव्यं ददावमृतमेव शिशुष्वमीषु ॥ ५० ॥
चरन्त्याः स्वच्छन्दं चरणतलमञ्जीररणितैः
कलस्निग्धामन्द्रैर्घनजघनकाञ्चीकलकलैः ।

---

र्थः । तदितरे वामेतरे करपल्लवे सुधया पूरितं कुम्भं कलशं कुर्वाणा कुर्वन्तीत्य-र्थः । चिद्रूपा ज्ञानरूपा परमा उत्कृष्टा पुरभिदः त्रिपुरध्वंसिनः कला अंशरूपा सा परदेवता तु मम चित्ते आस्ते वर्तते ध्येयतयेति भावः ॥ **आनम्येति** ॥ किञ्चिदीषदानम्य आनतिं कृत्वा पिधानमाच्छादनभूतं तदुपरि घटितं पात्रं अवमुच्य विस्रस्य मणिभिः रत्नैः खचिता प्रत्युप्ता तथाभूतया दर्व्या समग्रं सकलं अमृतमादाय सुरेषु ददती वितरन्ती दिव्या प्रकाशमाना कला ईशांशभूता मोहिनी तटिल्लतेव भुवि चचार सञ्चचारेत्यर्थः । परिवेषणार्थमिति भावः । तथा चोक्तं देवीभागवते । 'पङ्क्तिशः पर्यवस्थाप्य देवेभ्यः पर्यवेषयत् । परिविष्टं तदमृतं जनन्या दर्विहस्तया ॥ भुज्यमानास्तदा देवीं ध्यायन्तो लोकमातरम् । देवा बुबुधिरे बुद्ध्या महालक्ष्मीकृपावशात् ॥ पञ्चब्रह्मासनासीनां परब्रह्मस्वरूपिणीम् ।' इति ॥ **मात्रेति** ॥ यद्यस्मात् दर्वी करे यस्यास्सा दर्वीकरा तस्याः भावस्तत्त्वम् । तत् हस्ते दर्वीमिति फलितार्थः । अन्यत्र दर्वीकरस्सर्पः तस्य भावस्तत्त्वम् । 'दर्वीकरो दीर्घपृष्ठ' इत्यमरः । दधत्यपि धृतवत्यपि सा परदेवता शिशुषु पृथुकेषु । 'पृथुकश्शावकोऽश्शशुः' इत्यमरः । अमीषु देवेषु विषये दिव्यमुत्कृष्टं अमृतं ददौ वितताार तत्तस्मान्मात्रा जनन्या अर्पितं वितीर्णमित्यर्थः । गरळं विषमपि । 'क्ष्वेळस्तु गरळं विषं' इत्यमरः । शिशूनां अमृतं पीयूषम् । 'पीयूषममृतं सुधा' इत्यमरः । भवतीत्थं यद्वचनमामनन्ति प्रवदन्तीत्यर्थः । तदिदं वचः विशदं विस्पष्टमासीदभूदित्यर्थः ॥ **चरन्त्या इति** ॥ स्वच्छन्दं चरन्त्यास्सञ्चरन्त्याः वाळितमावार्जितं सुखं यस्मिन् कर्मणि तत्तथा पश्यन्त्याः अस्या देव्याः चरणतलयोः पाददेशयोः यौ मञ्जीरौ पादकटकौ । 'हंसकः पादकटकः' 'मञ्जीरो नूपुरोऽस्त्रियां' इति चामरः । तयोः रणितानि ध्वनयः तैः कलाः अव्यक्तमधुराः स्निग्धाः मेदुराश्च ये

कदाचित्पश्यन्त्या वलितमुखमस्याः परिजनं
कटाक्षैरप्यासीत्सुखितमखिलं दानवकुलम् ॥ ५१ ॥

ददाना च सा देवेषु दयारसमिव सुधारसं, दैतेयावुभौ राहुकेतू नाम देवपङ्क्त्युपवेशिनौ भुजगवपुषौ पीतामृतावेव चन्द्रार्कसूचितौ दर्वीकाण्डेन विदारयामास कण्ठपदे ।

अन्तर्निगीर्णममृतं प्रथमं हि येन
तस्यासुरस्य तदशिष्यत भोगमात्रम् ।
यस्यामृतं वदन एव धृतं स राहुः
अद्यापि पर्यवसितः फणमात्रशेषः ॥ ५२ ॥

यद्दृष्टं चन्द्रसूर्याभ्यां तद्दृष्टं निजया दृशा ।
क्षन्तुं शशाक तेनैषा मन्तुं न खलयोस्तयोः ॥ ५३ ॥

---

आमन्द्राः समन्तात् गम्भीराः तथाभूतैः घनं स्थूलं यज्जघनं कटिपुरोभागः । 'क्लीबे तु जघनं पुरः' इत्यमरः । तस्मिन् या काञ्ची मेखला तस्याः कलकलाः कोलाहलध्वनयः तैः कदाचित्परिजनं कटाक्षैश्च अखिलं दानवकुलमपि सुखिततमानन्दितमासीत् । तथा चोक्तं देवीभागवते । 'दैत्याः काञ्चित् स्त्रियं बुद्धा हावभाववशीकृताः । जडीभूताः प्रतीक्षन्ते स्वपङ्क्तिपरिवेषणं' इति ॥ **ददानेति** ॥ देवेषु दयारसमिव स्थितं सुधारसं उभयत्रावधारणसमासः । ददाना वितरन्ती सा परदेवता च देवानां पङ्क्तिः श्रेणी तस्यामुपवेशितौ उपवेशं प्रापितौ अत एव पीतामृतौ भुजगवपुषौ सर्पशरीरौ राहुरिति केतुरिति नामनी ययोः तौ तथाभूतावुभौ दैतेयौ असुरौ चन्द्रार्काभ्यां सूचितौ विनिवेदितौ सन्तौ दर्व्याः काण्डः वृन्तदण्डः तेन कण्ठपदे कण्ठस्थाने दारयामास बिभेदेत्यर्थः । शकलयाम्बभूवेत्यर्थः । तथा चोक्तं देवीभागवते । 'अमृतार्थं देवपङ्क्तौ प्रविष्टः सिंहिकासुतः । सूचितश्चन्द्रसूर्याभ्यां दर्वीकाण्डेन खण्डितः' इति ॥ **अन्तरिति** ॥ हि यस्मात् येन असुरेण प्रथममादौ भक्षितमिति शेषः । अन्तः निगीर्णं गळितं तस्यासुरस्य भोगमात्रं सर्पकायमात्रं तत्सोंऽशः अशिष्यत अवशिष्टमभूदित्यर्थः । यस्य असुरस्य वदन एव अमृतं धृतं विधृतं सोऽसुरः अद्यापि फणामात्रेणेति शेषः अवशिष्ट इत्यर्थः । राहुः पर्यवसितः सम्भूत इत्यर्थः । तथा चोक्तं देवीभागवते । 'राहुसंज्ञस्तयोरेकः केतुसंज्ञस्तथापरः । पीतामृतप्रभावेन शिरो देहश्च तावुभौ । देवत्वं प्रापितौ देव्या नवग्रहनिवेशितौ' इति ॥ **यदिति** ॥ चन्द्रसूर्याभ्यां यद्वस्तु दृष्टं अवलोकितं तद्वस्तु निजया स्वकीयया दृशा दृष्टम् । तयोरेव तन्नेत्रत्वादिति भावः । तेन कारणेन एषा परदेवता खलयोः दुष्टयोस्तयोः राक्षसयोः मन्तुमप-

अनुगृह्येत्थममरानामृष्टोदरं सुधाकलशमन्तर्निहितदर्वीझणझणात्कारमौखर्यपूरितमग्रे निधाय दानवानामपेक्षमाणेव क्षणं विश्रममासाञ्चक्रे । तदनु सुधापानलब्धबलास्सुपर्वाणः परिगळितशङ्कातङ्काः प्रत्यक्षमेव तां प्रस्तोतुमारेभिरे ॥

'वन्दामहे कमलनाभमनन्तमाद्यं
वन्दामहे भुवनमोहनशक्तिमैशीम् ।
वन्दामहे तदुभयाद्वयवादमूलं
आनीलकण्ठमवतंसितचन्द्ररेखम् ॥ ५४ ॥

निरातङ्क स्वामिन् निरुपधिदयासार भगवन्
प्रपन्नानुग्राहिन् परमपुरुष त्वत्करुणया ।

राधम् । 'आगोऽपराधो मन्तुश्च' इत्यमरः । क्षन्तुं सोढुं न शशाक समर्था नाभूदित्यर्थः । दृष्टमपराधं विवेकी कस्तेजस्वी सहत इति भावः ॥ **अनुगृह्येति** ॥ अमरान् देवानित्थममृतप्रदानादिप्रकारेण अनुगृह्य आमृष्टमुदरमभ्यन्तरं यस्य तथाभूतमत एव अन्तर्निहिता विन्यस्ता या दर्वी तस्यास्सम्बन्धि झणझणात्कारलक्षणं मौखर्यं ध्वनिः तेन पूरितः भरितः तथाभूतं सुधाकलशं अग्रे निधाय सा परदेवता दानवानसुरानपेक्षमाणेव कामयमानेव क्षणं विश्रमं विगतः श्रमः आयासः यस्मिन् कर्मणि तत्तथा आसाञ्चक्रे उपविवेशेत्यर्थः । दयायासश्चेत्याम् । कास्प्रत्ययादाममन्त्रे लिटीति कृञ्चातोरनुप्रयोगः ॥ **तदन्विति** ॥ तदन्वनन्तरं सुधाया अमृतस्य पानं तेन लब्धं बलं सामर्थ्यं येषां ते तथाभूताः सुपर्वाणो देवाः परिगळिताः परिगताः शङ्कातङ्काः भयसन्तापा येषां ते तथाभूतास्सन्तः प्रत्यक्षमेव दानवाध्यक्षमेव तां परदेवतां स्तोतुमारेभिरे उपचक्रमिरे ॥ **वन्दामह इति** ॥ अविद्यमानः अन्तः नाशः यस्य सः अनन्तः तथाभूतं आद्यं सर्वकारणं कमलनाभं पद्मनाभं हरिं वन्दामहे स्तुमः । ऐशीं ईशसम्बन्धिनीं भुवनानां मोहनं तस्मिन् या शक्तिः सामर्थ्यं तां वन्दामहे नमस्कुर्महे । अवतंसिता उत्तंसीकृता चन्द्ररेखा येन स तथाभूतं तयोः विष्णवीशशक्त्योरुभयं तस्मिन् योऽद्वयवादः अभेदवादः तस्मिन् मूलं मूलकारणमित्यर्थः । उभयोस्तयोश्शिवमायारूपत्वादिति भावः । उभयोरभेदे प्रमाणवचनं देवीभागवते । 'या माता मधुकैटभप्रमथिनी या माहिषोन्मूलिनी या धूम्रेक्षणचण्डमुण्डमथिनी या रक्तबीजाशनी । शक्तिश्शुम्भनिशुम्भदैत्यदमनी या सिद्धिलक्ष्मीप्रदा सा चण्डी नवकोटिशक्तिसहिता तत्राविरासीत् स्वयम् ॥' इत्यादिना प्रोक्तम् । आ ईषन्नीलः कण्ठो यस्य स तथाभूतं परशिवं भजामहे नमस्कुर्महे ॥

जिताः क्षुद्रा दैत्या जितमखिलमेतत्त्रिभुवनं
कृतं कर्तव्यं नः किमिव करणीयं पुनरितः ॥ ५५ ॥
आनीलकेशमरविन्ददळायताक्षं
आविष्कृतस्मितमपारकृपानिधानम् ।
कूलङ्कषस्तनतटार्पितकुंकुमाङ्कं
शार्ङ्गिन्निदं शरणयेम तवाद्यरूपम् ॥ ५६ ॥
उल्लङ्घ्य निर्माल्यमुदासितं य-
दजानतानेन पदे भवत्याः ।
तत्स्वामिनि स्वामिनि वासवे नः
क्षन्तव्यमित्येव निवेदयामः ॥ ५७ ॥'

इति स्तूयमानैव सा सुपर्वभिरिदं किमापतितमियं का तरुणीति शङ्काकळङ्कितैः, आलोक्य रिक्तममृतभाजनं आविष्कृतम-

---

**निरातङ्कमिति** ॥ निरुपाधिः निर्व्याजः दयैव सारः स्थिरांशः यस्य तस्य सम्बुद्धिः प्रपन्नान् प्रणतिं प्राप्तान् अनुग्रहीतुं शीलं यस्य स तथाभूत । हे भगवन् अप्रच्युतैश्वर्यशालिन् हे स्वामिन् परमपुरुष तव करुणा कृपा तया निष्क्रान्तः आतङ्कः दुःखादिर्यस्मिन् कर्माणि तत्तथा । क्षुद्राः कदर्याः दैत्याः जिताः निर्जिताः अखिलमेव त्रिभुवनं जितं कर्तव्यमनुष्ठेयं सर्वं कृतं अनुष्ठितं इतः परं नोऽस्माकं किं करणीयं किमिव भवेदित्यर्थः । भवदाज्ञाविधायका वयमिति भावः ॥ **आनीलेति** ॥ आनीलाः केशाः यस्य तत्तथाभूतम् । अरविन्ददळे इव आयते अक्षिणी यस्य तत्तथाभूतम् । आविष्कृतं प्रकटितं स्मितं मन्दहासः यस्य तत्तथाभूतम् । अपारा निस्सीमा या कृपा दया तस्या निधानमादिकारणम् । कूलङ्कषयोः स्तनतटयोरर्पितं यत्कुङ्कुमं तदेवाङ्कं चिह्नं यस्य तत्तथाभूतम् । तवेदं रूपमेव हे आद्य शार्ङ्गिन् नः शरणं रक्षकमित्यर्थः ॥ **उल्लङ्घ्येति** ॥ हे स्वामिनि स्वामिन्शब्दात् ऋन्नेभ्य इति ङीबन्तात्सम्बोधनरूपम् । भवत्याः परदेवतायाः पदे पादौ अजानता अविदुषा अनेनेन्द्रेण निर्माल्यं दुर्वाससा वितीर्णं उल्लङ्घ्य उदासितमिति यत् । भावे क्तः । तत् उदासनजन्यमागः नोऽस्माकं स्वामिनि ईश्वरे वासवे विषये क्षन्तव्यं क्षन्तुं योग्यमित्यर्थः । अस्मत्स्वामिरक्षणमेवास्माकं रक्षणमिति भावः । इत्येव एतावदेव निवेदयामः ज्ञापयामः ॥ **इतीति** ॥ इतीत्थं सुपर्वभिः देवैः स्तुतिभाजिनीक्रियमाणैव सा नारायणी परदेवता । 'नारायणी रमागौर्योः' इति भास्करः । इदं किमापतितं किमागतमित्यर्थः । इयं तरुणी केति शङ्का सन्देहः तेन कलङ्किताः कलुषिताः तथाभूतैः। रिक्तं शून्यं अमृतभाजनं सुधाक

हारोषपरुषैरसुरैस्सन्नह्यमानैर्युद्धाय सद्य एव शङ्खचक्रगदाखड्गसरसीरुहलाञ्छितमसुरलोकभयङ्करमाबभार रूपं नारायणी। 'भो भो महेन्द्रप्रमुखा देवाः, मशकानिवैतानुत्सार्य दानवान्, मन्दरं यथापुरं प्रतिष्ठाप्य, वासुकिं विसृज्य, विरूपाक्षमभिप्रसाद्य, लब्धानुज्ञास्सुखं पालयत स्वाराज्यं' इत्यनुगृह्य देवानन्तर्दधे सह चतुर्मुखेन शार्ङ्गधरः।

तिरोभूते सद्यस्त्रिभुवनगुरौ स्वामिनि हरौ
विषीदन्तो दैत्या विबुधगुरुमानम्य शतशः।
अयाचन्त स्थातुं निभृतमभयं भोगिभुवने
तथेति स्वीचक्रुस्तदपि विबुधा देशिकगिरा ॥ ५८ ॥

अथ पुनरन्तर्निगूढमत्सरानप्यभिनीतमहाविनयान्, अ-

लशं आलोक्य आविष्कृतः प्रकटीकृतः महानधिकश्च यो रोषः क्रोधः तेन परुषाः कठिनाः तथाभूतैः असुरैः युद्धाय सन्नह्यमानैव सन्नाहवतीव सद्य एव शङ्खचक्राभ्यां गदाखड्गाभ्यां सरसीरुहेन कमलेन च लाञ्छितं लक्षितमित्यर्थः। असुरलोकानां भयङ्करं भीतिकारणं रूपं आबभार दधारेत्यर्थः। तथा चोक्तं देवीभागवते। 'पुनः प्रकृतिमापन्नः पुंरूपेणैव संस्थितः' इति ॥ भो इति ॥ भो भो महेन्द्रः प्रमुखः आदिर्येषां तथाभूताः हे देवाः एतानसुरान् मशकानिव कीटादीनिव उत्सार्य निष्कास्य यथापुरं पुरेवेत्यर्थः। मन्दरमद्रिं प्रतिष्ठाप्य संस्थाप्येत्यर्थः। वासुकिं सर्पराजं च विसृज्य पाताळं गमयित्वेत्यर्थः। विरूपाक्षं श्रीकण्ठम्। 'विरूपाक्षस्त्रिलोचनः' इत्यमरः। अभिप्रसाद्य प्रसादयित्वा लब्धा आज्ञा आदेशः यैस्तथाभूताः सन्तः। स्वाराज्यं सौवर्गराज्यं परिपालयत संरक्षणं कुरुतेत्यर्थः। इतीत्थं देवाननुगृह्य चतुर्मुखो ब्रह्मा तेन सह शार्ङ्गधरः शार्ङ्गधन्वा हरिः अन्तर्दधे अन्तर्धानं चकारेत्यर्थः। अदृष्टस्सञ्जात इति भावः ॥ तिरोभूत इति ॥ त्रिभुवनं त्रिलोकी तस्य गुरुः पिता। 'स्यान्निषेकादिकृद्गुरुः' इत्यमरः। 'अहं बीजप्रदः पिता' इति शास्त्रादिति भावः। स्वामिनि परमेश्वरे हरौ श्रीवासुदेवे सद्यः तिरोभूते अन्तर्हिते सति विषीदन्तः क्लिश्नन्तः दैत्याः दितिपुत्राः शतशः अनेकधा विबुधानां गुरुराचार्यः तं आनम्य नमस्कृत्य भोगिनां सर्पाणां भुवनं लोकः पाताळसंज्ञिकः तस्मिन् निभृतं निश्चलं यथा तथा अभयं अभीति यथा तथेत्यर्थः। स्थातुं वर्तितुं अयाचन्त प्रार्थयामासुरित्यर्थः। विबुधा अपि देशिकगिरा गुरूक्त्या तत्प्रार्थनं तथेति स्वीचक्रुः अङ्गीचक्रुरित्यर्थः। भगवदनुग्रहे सति के नाम असमर्था भवन्तीति भावः ॥ अथेति ॥ अथानन्तरं अन्तर्निगूढः अन्तर्निहितः मत्सरः

पनीतविषानिव महोरगानसुरान्विसृज्य सुधारसास्वादसुहि-ततया कन्दुकमिव मन्दरं करतलेन धारयन्तः, प्रशंसन्तो वासुकिं भवत्प्रसादेन वयममर्त्या अभूमेति, परिरभ्य निर्भरं, प्रस्थाप्य रसातलं, उपनिवेशयन्तो यथापुरं मन्दरं, उपतस्थिरे चन्द्रशेखरम्।

'क्षमेथाऽश्रीकण्ठ प्रचलनमिदं मन्दरगिरेः
क्षमेथाः काकोलं कबळयितुमाशासनमपि।
क्षमेथा यत्पूजास्वपचरितमासीदहरहः
प्रपन्नास्त्वामेकं शरणमशरण्या वयममी ॥ ५९ ॥
अक्ष्णोः पुष्पवतोरेकमर्पयन्नीश ते पदे।
चक्षुषी पुण्डरीकाभे चतुरोऽलभताच्युतः ॥ ६० ॥

---

मात्सर्यं यैस्त। 'मत्सरोऽन्यशुभद्वेष' इत्यमरः। तथाभूतैः अभिनीतः अनुकृतः विनयः यैस्ते तथाभूतैः अत एव अपनीतमपयातं विषं येभ्यस्ते तथाभूतान् महोरगान् कृष्णसर्पानिव स्थितान् असुरान् दानवान् विसृज्य प्रयाप्य। सुधायाः आस्वादः पानं तेन सुहितास्तृप्तास्तेषां भावस्तत्ता तया मन्दरमद्रिं कन्दुकमिव धारयन्तः वहन्तस्सन्तः भवतः प्रसादोऽनुग्रहः तेन वयममर्त्याः मरणधर्मरहिताः अभूम आस्म। इतीत्थं वासुकिं निर्भरमत्यन्तं परिरभ्य आलिङ्ग्य प्रशंसन्तः स्तुवन्तस्सन्तः रसातलं प्रस्थाप्य प्रेषयित्वा। यथापुरं पुरेव मन्दरं उपवेशयन्तः चन्द्रशेखरमुपतस्थिरे तुष्टुवुरित्यर्थः॥ अथ शशिशेखरं भगवन्तं स्तोतुं समुपचक्रमिरे॥ **क्षमेथा इति**॥ हे श्रीकण्ठ विषकण्ठेत्यर्थः। काकोलं विषं कबळयितुं भक्षयितुमाशासनं प्रार्थनमपि क्षमेथाः क्षमस्वेत्यर्थः। अहरहः प्रत्यहं पूजासु विषये यदपचारितं अननुष्ठानलक्षणः यः अपचारः स्वकार्यव्यापृतत्वादिति भावः। तदपचारितं क्षमेथाः क्षमस्वेत्यर्थः। अविद्यमानः शरणे साधुश्शरण्यः येषां ते रक्षकान्तररहिता इत्यर्थः। तथाभूताः अमी वयं त्वामेकं भवन्तमेव शरणं रक्षितारं सन्तं प्रपन्नाः प्राप्ताः स्मः॥ **अक्ष्णोरिति**॥ चतुरः निपुणः अच्युतः श्रीहरिः पुष्पवतोः सूर्यचन्द्ररूपयोरित्यर्थः। 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इत्यमरः। अक्ष्णोः नेत्रयोर्मध्ये त्वेकमक्षि हे ईश ते तव पदे अर्पयन् समर्पयन् सन् पुण्डरीकस्य आभा कान्तिर्ययोस्ते तथाभूते चक्षुषी नेत्रे अलभत अभजतेत्यर्थः। तथा चोक्तं देवीभागवते। 'प्रायशश्शम्भुभक्तेषु यतस्त्वं प्रोच्यसेऽग्रणीः। एकोनाब्जसहस्रे स्वं ददौ नेत्राम्बुजं भवान्' इति विष्णुवीरभद्रसंवादे॥ **देवानामिति**॥ हे स्वामिन् परमेश्वर जनः भक्तलोकः द्वे वा त्रीणि वा द्वित्राणि तथाभूतैः बिल्वदळैः पूजयेति शेषः। शिवं

देवानामपि दुर्लभं पदमिदं लब्धं मयोपायतो
छिन्नैर्बिल्वदळैः प्रतार्य शिवमित्येवं जनो मन्यते।
मद्भक्तांघ्रिरजस्स्पृशोऽपि सुलभं क्षुद्रं पदं वेधसो
दत्वा सेवक एव वञ्चित इति स्वामिन् भवान्मन्यते॥'

इति स्तुवन्तो विबुधाः, 'प्रसन्नास्स्मो युष्मासु परिपालयत यथापुरं स्वाराज्यं' इति प्रसन्नगम्भीरामाकर्ण्य पारमेश्वरीं गिरमाकाशसम्भवां, परमानन्दनिर्भराः प्राक्प्रस्थापितेन गुरुणा सज्जीकृतां, परित्यक्तामसुरैः, प्रसाधितां विश्वकर्मणा, परितोऽप्यभिनवामिव सर्वसौभाग्यवतीममरावतीमासाद्य, प्रणम्य वाचस्पतिं, प्रसाद्य यथोचितं महर्षिगणान्, परिरभ्य परस्परं, प्रतिष्ठाप्य सिंहासने शतक्रतुं, आदिष्टानि तेन स्वानि स्वानि स्थानानि, यथापुरममराः परिपालयाञ्चक्रिरे।

---

प्रतार्य वञ्चयित्वा देवानामिन्द्रादीनां दुर्लभं दुष्प्रापं इदं स्थानं उपायतः अनायासतः लब्धं प्राप्तमितीत्थं मन्यते अभिजानातीत्यर्थः। मम ये भक्ताः पूजाध्यानादिशीलाः तेषां येऽङ्घ्रयः तेषां यानि रजांसि तानि स्पृशः स्पृष्टवतोऽपि पुनः सुलभं सुखेन प्राप्यं क्षुद्रं तुच्छं वेधसः ब्रह्मणः पदं स्थानं दत्वा वितीर्य सेवकः पूजक एव वञ्चितः प्रतारित इतीत्थं भवान्मन्यते त्वं जानासीत्यर्थः। भवन्महिमा वर्णयितुमस्माभिः न शक्य इति भावः। तथा चोक्तं देवीभागवते। 'ततो देवा मुदा युक्ता मन्दरं स्थाप्य पूर्ववत्। प्रणिपत्य महादेवं वासुकिं तं विसृज्य च॥' इति॥ **इतीति**॥ इतीत्थं स्तुवन्तो विबुधा देवाः युष्मासु विषये वयं प्रसन्नाः अनुग्रहीतारस्स्मः भवामः यथापुरं पुरेव स्वाराज्यं परिपालयत संरक्षणं कुरुतेत्यर्थः। इत्येवंप्रकाराम्। प्रसन्ना अर्थमधुरा च सा गम्भीरा श्राव्या चेति कर्मधारयः। तथाभूतामाकाशसम्भवामाकाशोत्पन्नां पारमेश्वरीं ईश्वरसम्बन्धिनीं गिरमाकर्ण्य श्रुत्वा परमानन्देन निर्भराः सान्द्रास्सन्तः प्राक्प्रस्थापितेन प्रेषितेन गुरुणा वाचस्पतिना सज्जीकृतां वासार्हीकृतामित्यर्थः। असुरैः तत्रत्यदानवैः परित्यक्तां विसृष्टां विश्वकर्मणा देवशिल्पिना परितोऽपि प्रसाधितां अलङ्कृतां अत एव अभिनवां नूतनरचितामिव स्थितां सर्वैः प्रकारैरपि सौभाग्यवतीं कामनीयकशालिनीमित्यर्थः। तथाभूतां अमरावतीं देवपुरीमासाद्य प्राप्य वाचस्पतिं गुरुं प्रणम्य यथोचितं यथार्हणं महर्षीणां गणान् सङ्घान् प्रसाद्य अनुग्रहीतॄन् कृत्वेत्यर्थः। परस्परं परिरभ्य आ-

अर्चन्तस्तरुणेन्दुचूडमसकृत्सङ्कीर्तयन्तो हरिं
ध्यायन्तस्त्रिजगद्विमोहजननीं शक्तिं परां शाम्भवीम् ।
आज्ञां मूर्धनि बिभ्रतस्सुरगुरोरानन्दयन्तो मुनीन्
स्वच्छन्दास्त्रिदिवौकसो बुभुजिरे स्वाराज्यमव्याहतम् ॥
वाचं व्याकुरुते चिरन्तनगिरं मीमांसते चोभयीं
पान्थः काव्यपथेषु पादकमले सक्तः पुरारेरिति ।
मामेतत्कथयिष्यतीति रचितं काव्यं मया तत्पुनः
तावद्द्रक्ष्यति वा न वा तदुपरि न्यस्तस्समस्तो भरः ॥

शिवार्पणम् ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिक-
शतप्रबन्धनिर्वाहकश्रीमन्महाव्रतयाजिश्रीमदप्पयदीक्षित-
सोदर्यश्रीमदाचार्यदीक्षितपौत्रेण श्रीनारायणदीक्षितात्मजेन
श्रीभूमिदेवीगर्भसंभवेन श्रीनीलकण्ठदीक्षितेन
विरचिते श्रीनीलकण्ठविजये चम्पुकाव्ये
पञ्चम आश्वासः ॥
समाप्तश्चायं ग्रन्थः ॥

लिङ्गय शतक्रतुं देवेन्द्रं सिंहासने प्रतिष्ठाप्य स्थापयित्वेत्यर्थः । तेन देवेन्द्रेण आदिष्टास्सन्दिष्टास्सन्तः यथापुरं पुरेव स्वस्वानि स्वकीयस्वकीयानि स्थानानि पदानि पारपालयाञ्चक्रिरे परिपालयामासुरित्यर्थः । तथा चोक्तं देवीभागवते । 'महादेवेन चाज्ञप्ता गुरुणा च सुशिक्षिताः । दिवं प्राप्य यथापूर्वमन्वशासन् त्रिविष्टपं' इति ॥ **अर्चन्त इति** ॥ त्रिदिवौकसः इन्द्रादिदेवाः तरुणेन्दुर्बालचन्द्रः चूडायां यस्य स तथाभूतं परमेश्वरं अर्चन्तः पूजयन्तः असकृन्मुहुर्मुहुः हरिं संकीर्तयन्तः नामोच्चारणादिकं कुर्वन्त इत्यर्थः । त्रिजगतः त्रिभुवनस्य विमोहो व्यामोहस्तस्य जननीमुत्पादिकां शाम्भवीं शम्भुसम्बन्धिनीं परां उत्कृष्टां शक्तिं सामर्थ्यरूपपरदेवतामित्यर्थः । ध्यायन्तः ध्यानं कुर्वन्तः स्मरन्त इति वार्थः । सुराणां गुरुराचार्यस्तस्याज्ञां निदेशं मूर्धा शिरः तस्मिन् बिभ्रतः निदधानास्सन्तः मुनीन् नारदादीन् आनन्दयन्तस्सन्तोषयन्तः अव्याहतं अप्रच्युतं स्वाराज्यं स्वर्गसाम्राज्यं स्वच्छन्दं स्वेच्छं यथा तथा यथेच्छमिति वार्थः । बुभुजिरे अनुबभूवुरित्यर्थः । भुज पालनाभ्यवहारयोरिति धातोः कर्तरि लिट् ॥ **वाचमिति** ॥ कविरयं वाचं व्याकुरुते प्रकृतिप्रत्ययादिज्ञानपूर्वकमभिवदतीत्यर्थः । उभौ अ-

वयवौ यस्यास्सा तथाभूतां चिरन्तनगिरं कर्मब्रह्मकाण्डात्मकवेदवाचमित्यर्थः। मीमांसते विचारयतीत्यर्थः। पूर्वमीमांसायामुत्तरमीमांसायां च अध्वरब्रह्मणोर्विचारकुशल इति भावः। काव्यस्य सगुणालङ्कारशास्त्रस्य पन्थानः मार्गाः तेषु पान्थः नित्यसञ्चारीत्यर्थः। पुरारेस्त्रिपुरान्तकस्य परशिवस्य पादकमले पादारविन्दे सक्तः आसक्तः भक्त इति वार्थः। इत्येवंविधं मां कथयिष्यति व्याकरणमीमांसादिशास्त्रज्ञं शिवभक्तमित्येवं वदिष्यतीत्यर्थः। इति मत्वा मया यदेतत्काव्यं रचितं निर्मितमित्यर्थः। तत्काव्यम्। अथवा तावत्तत्सकलमित्यर्थः। वक्ष्यति अभिधास्यति अथवा न वक्ष्यति तस्य काव्यस्योपरि कार्य एवेत्यर्थः। समस्तः सकलः भरः भारः न्यस्तः समर्पितः।

इति श्रीमद्भारद्वाजवेल्लालमहादेवसूरिविरचिते नीलकण्ठविजयव्याख्याने विबुधानन्दाख्याने पञ्चमाश्वासविवृतिः॥



श्रीबालमनोरमा प्रेस, मैलापूर्, मदरास्.

# श्लोकानुक्रमणिका

